REPRINT FROM THE PANDIT.

# ब्राह्मस्फुटसिद्धान्तो

## ध्यानग्रहोपदेशाध्यायश्च ।

गणकचक्रचूडामणिश्रीब्रह्मगुप्तविरचितः ।

महामहोपाध्यायसुधाकरद्विवेदिकृतनूतन-
तिलकसमेतः ।

# BRĀHMASPHUṬASIDDHĀNTA

AND

# DHYĀNAGRAHOPADEṢĀDHYĀYA,

BY BRAHMAGUPTA,

EDITED WITH HIS OWN COMMENTARY

BY

MAHĀMAHOPĀDHYĀYA SUDHĀKARA DVIVEDIN,
*Professor, Queen's College, Benares.*



BENARES:
PRINTED AT THE MEDICAL HALL PRESS.

1902.

# विषयानुक्रमः ।

# भूमिका ।

नित्यं श्रीजानकीजानिर्जयतीह जगत्पतिः ।
अनन्तो जगदाधारो योऽभूदस्य सेवया ॥

अयं ब्रह्मगुप्तोऽस्य सिद्धान्तस्य २४ अध्याय पृ. ४०८

श्रीचापवंशतिलके श्रीव्याघ्रमुखे नृपे शकनृपालात् ।
पञ्चाशत्संयुक्तैर्वर्षशतैः पञ्चभिरतीतैः ॥
ब्राह्मः स्फुटसिद्धान्तः सज्जनगणितज्ञगोलवित्प्रीत्यै ।
त्रिंशद्वर्षेण कृतो जिष्णुसुतब्रह्मगुप्तेन ॥

इति लेखानुसारेण शके ५२० प्रादुर्भूत् ।

अथ 'जिष्णुसुत'–इति लेखात् तथा

शशिदृक्पाते यद्विविभलग्नेषुणाऽत्र संस्करणम् ।
जिष्णुजमतं तदुक्तं न मन्मतं वच्मि युक्तिमिह ॥

इति भास्करीयगणिताध्यायसूर्यग्रहणाधिकारवचनाद्भास्करग्रन्थे बहुत्रैतादृग्लेखाच्चास्य पिता जिष्णुगुप्त एवात्र न संशयः । बहूनां मतेऽयं विष्णुगुप्तस्य पौत्रो गुप्तपदान्ताद्वैश्यकुलोद्भूतो रीवानगराधिपतेर्व्याघ्रभटेश्वरस्य प्रधानज्योतिषी किलासीत् (द्रष्टव्या गणकतरङ्गिणी पृ १६–१७)

संप्रति यूरपदेशीयविदुषामन्वेषणेन गुर्जरदेशमध्ये भिनमालनामग्राम एवास्य जन्मस्थानं सिध्यति (See Indian Antiquary, XVII., p 192, July, 1888)

श्रूयते चास्य महाकरणस्य खण्डखाद्याख्यस्य टीकायां वरुणकृतायामाचार्यविशेषणं 'भिल्लमालकाचार्य' इति । अस्माद्गुर्जर-

देशीयगणकानां मुखकथातोऽपि ब्रह्मगुप्तस्य जन्मस्थानं भिल्लमालकः संप्रति भिनमालनाम्ना प्रसिद्ध एव सिध्यति ।

अयं भिनमालनामा ग्रामो गुर्जरदेशोत्तरसीम्नि मालव-(मारवाड) देशतो दक्षिणभागे, आबूपर्वतलूणीनद्योर्मध्ये तत्पर्वता-न्नैर्ऋत्यकोणे पञ्चयोजनान्तरे संप्रति प्रसिद्धः ।

तन्त्रपरीक्षाध्याये पृथूदककृतटीकायां 'कुलशोभिरुभयाचार्य-स्ये'ति लेखात् (द्रष्टव्यमस्य ग्रन्थस्य १६० पृष्ठम्) मन्यतेऽयं भी-लानां भिल्लाटीनां पुरोहितोऽतो भिल्लमालकाचार्यत्वेन प्रसिद्धो नीच-कुलोद्भवः । नहि देशस्य कश्चिदाचार्यो भवतीति मृषं बुद्धिमद्भि-र्विचिन्त्यम् ।

संप्रत्युपलभ्यताम्रपट्टादिलेखाद्गुर्जरदेशे खीष्टाब्द ५९६—६४१ मध्ये चापडवंशीया राजान आसन् तथा चीनदेशीयहुएनसंग (Hieun Thsang) स्वलेखानुसारेण तेषां राजधानी च 'भिलमाल' आसीदित्यत्र न संशयः । चापडवंशीया एव ब्रह्मगुप्तोक्तचापवंशीया राजान इतीतिहासतत्त्वविदामनुमितिः । मन्यते चापवंशीयो व्याघ्रमु-खनामा कश्चिन्नरपतिः सिन्धु (पञ्जाब) देशे बभूव (See Archaeological Survey of India Reports, Vol XIV., p 65, Sunit)

भट्टशीयाः मुद्रणमुद्राः सिन्धु (पञ्जाब) देशे लुधियाना-नामस्थाने चोपलब्धास्तथा यन्निदेशतः कश्चिद्विद्वान् बगदादनगरे खलीफाअलमन्सूर निकटे जगाम । (See Alberuni's India by Dr. E C Sachau, Vol II, p 15.)

इदानीमपि ब्रह्मगुप्तस्य करणग्रन्थो बहुत्र सिन्धु-(पञ्जाब) देशे प्रसिद्धः । तदीयकरणखण्डखाद्यानुसारेण मारवाडी बहुत्र तद्देशे गणकाः पञ्चाङ्गं च रचयन्ति ।

एतत्कृतस्यास्य सिद्धान्तग्रन्थस्यैका प्रतिः काशिकराजकीय-पाठालयतो द्वितीया डा॰ थिबोसाहिबमहाशयतस्तृतीया चायोध्यानरेशप्रधानज्योतिर्विच्छ्रीगबदत्तशर्मणो मया लब्धा । डा॰ थिबोमहाशयस्य पुस्तकं कस्य चिद्दक्षिणदेशीय (Deccan College, Poona) स्थैका पुस्तकस्य प्रत्यन्तरम् । इदं पुस्तकं तथा पं॰ श्रीगबदत्तपुस्तकं चैकमातृकमेव । इदं पुस्तकत्रयमतीवाशुद्धं बहुत्र स्खलितं चास्ति ।

यत्पुस्तकानुसारेण व्यक्ताव्यक्ताध्याययोर्द्वादशाष्टादशसंख्ययोरङ्गलभाषायामनुवादः कोलब्रूकसाहिबेन कृतस्तत्पुस्तकमेतत्त्रयतो भिन्नमित्यवगम्यं विभाति पाठविभेदात् । तत्पुस्तकस्य कुट्टकाध्यायः सम्प्रति इण्डिया-आफिस-सरस्वतीभवने वर्त्तते (See Catalogue of the Sanskrit Manuscripts in the Library of India Office Part V., p. 995.)

पृथूदककृताऽस्य सिद्धान्तस्य टीका* या कोलब्रूकसाहिबेन भारतवर्षे ह्युपलब्धा सा च संप्रति लण्डननगरे इण्डिया-आफिस-सरस्वतीभवने वर्त्तते । तस्या एका प्रतिर्मद्द्वारेण श्री डा॰ थिबो-साहिबमहाशयेनोत्पादिता साऽपि संप्रति मन्निकटेऽस्ति । अहो इण्डिया-आफिस सरस्वतीभवने अस्य पुस्तकस्य पुटकबन्धनकाले-ऽनवधानतया पत्राण्यसङ्गतानि जातानि, बहुत्र खण्डितानि च सन्ति । तानि कदाचिदनुपयुक्तपत्राणां मध्ये स्युरिति तेषां सम्यग्-

* इदं पुस्तकं कस्य चिन्मैथिलादेर्लिखितस्य पुस्तकस्य प्रत्यन्तरमिति निश्चयं प्रतिभाति । ११ पत्रे ८ इत्यस्य स्थाने ७ इति लेखात् । एवमन्यत्रापि । विसर्गात् परत 'क' स्थाने 'क्र' इति लेखात् । यथा १३ पत्रे ८ पङ्क्तौ । तथा विसर्गस्थाने 'ष' इति लेखात्, यथा १२ पत्रे १ पङ्क्तौ । वाक्यविरामेऽपि सन्धिकरणात् । यथा गोलाध्यायस्य २१ पत्रे २ पङ्क्तौ 'सर्वमुपपन्नमुक्तमध्यायेन' । कुत्रचित् 'न्त' स्थाने 'नू' इति लेखात् । एकस्मिन् पत्रे मैथिलाक्षरे 'श्रीगणेशाय नमः' इति लेखाच्च ।

रचनाकाल एवास्य रचना सिध्यति ( द्रष्टव्यमस्य ग्रन्थस्य पृ ) तथा 'नवतिथयोऽग्निविभक्ता' इत्यादिगद्येन ( द्रष्टव्यमस्य ग्रन्थस्य पृ० ) खण्डखाद्यरचनातः पश्चात् सिध्यति ।

मन्मते केनचिदनभिज्ञेनेदं गद्यं प्रक्षिप्तं वस्तुतः खण्डखाद्य-श्लोका ये मया टीकायां लिखितास्ते ध्यानग्रहोपदेशाध्यायस्था एव पश्चादाचार्येण लाघवार्थं खण्डखाद्ये च पुनर्लिखितास्त इति ।

अस्य सिद्धान्तस्य द्वादशाध्याये गणिताध्याये पाटीगणितरूपे मया पाठकानां विनोदाय निजटीकायां चतुर्वेदाचार्यपृथूदकटीकात उदाहरणानि समुद्धृत्य लिखितानि । अष्टादशाध्याये कुट्टकाध्यायसंज्ञे च कोलब्रूकानुवादानुसारेण द्विचाणि त्रुटितवृत्तानि नूतनानि तदर्थबोधकानि रचितानि तथा तदीयाः सूत्रसङ्ख्याश्च सर्वत्र विलिखिताः । विंशतितमाध्यायस्य छन्दश्चित्युत्तराभिधस्याशयः सम्प्रति मनसि न स्फुरति । अतो मूलग्रन्थोपलब्धा आर्या एव विलिखितास्ताश्च बुद्धिमद्भिर्भृशं विचिन्त्यास्तदर्थतोऽहमप्यनुग्राह्योऽन्येष्वपि सर्वेष्वध्यायेषु मत्संशोधितान्यपि पदानि पुनर्विचारणीयानीति बुद्धिमत्सु सुजनेषु मदीयाऽभ्यर्थना ।



अत्र ग्रन्थे भग्रहयुत्यधिकारसमाप्तिपर्यन्तं ग्रन्थसंख्या ३७६ (द्रष्टव्यमस्य ग्रन्थस्य १४४ पृ.)

| | | |
|---|---|---|
| तन्त्रपरीक्षाध्याये पं. सं. | ६२ | |
| गणिताध्याये | ६६ | |
| मध्यगत्युत्तराध्याये | ४८ | (आचार्यलेखानुसारेणैकार्यात्रुटिः) |
| स्फुटगत्युत्तराध्याये | ५५ | (आचार्यलेखानुसारतोऽप्येकार्याऽधिका) |
| त्रिप्रश्नोत्तराध्याये | ६० | |
| ग्रहणोत्तराध्याये | ४७ | (आचार्यलेखानुसारतोऽप्येकार्याऽधिका) |
| शृङ्गोन्नत्युत्तराध्याये | १० | |
| कुट्टकाध्याये | १०२ | (आचार्यलेखानुसारतोऽप्येकार्यात्रुटिः) |
| शङ्कुच्छायादिज्ञानाध्याये | २० | |
| छन्दश्चित्युत्तराध्याये | १९ | (आचार्यलेखानुसारेणार्याद्वयत्रुटिः) |
| गोलाध्याये | ७० | |
| | ९३६ | |
| यन्त्राध्याये | ५० | (आचार्यलेखानुसारेणार्याचतुष्टयमधिकम्) |
| मानाध्याये | १२ | |
| संज्ञाध्याये | १३ | |
| सर्वश्लोकसंख्या | १०२१ | |

आचार्यलेखानुसारेण सर्वश्लोकसंख्या १०२० । अथ संज्ञाध्यायस्योपसंहारश्लोकं हित्वा द्वादशार्या हीनाः क्रियन्ते तर्हि १००८ वयमाचार्योक्ता संख्याऽऽयातीति बुद्धिमद्भिर्विचिन्त्यम् । (द्रष्टव्यमस्य-ग्रन्थस्य पृ. ४०८)

ध्यानग्रहोपदेशाध्याये 'नवतिघ्नयोऽष्टिविभक्ता इत्याद्यार्याषट्कं खण्डखाद्याच्चिन्त्यमित्यत्र षट्क–स्थाने सप्तक भवेत् । तर्हि उपसंहार श्लोकं हित्वा द्वासप्ततिरार्या भवति ।

खण्डखाद्ये वस्तुत' ६–७ श्लोकौ चालनसाधकावेवम् ।

'मिश्रेष्टान्तरगुणिता भुक्तिर्दिवसे निशादले प्रथमे ।
रात्र्यर्धेऽभीष्टान्तरहृता परे त्विष्टमिश्रयोगेन ॥
मिश्रेष्टोदयकाले रात्र्यर्धेनास्तमयकाले ।
षष्ट्या विभज्य लब्धं विशोध्य तात्कालिको भवति' ॥

षट्क–पदानुरोधान्मया प्रथमार्यापूर्वार्धे द्वितीयोत्तरार्धे चो-पयुक्तं गृहीत्वैकार्या षष्टी मूलग्रन्थे स्थापितेति सुधीभिरूह्यम् ।

यत्सिद्धान्तभवप्रकारविलसत्सत्सूत्ररत्नाकराद्-
द्विषाणि श्रमत समालभत तत्सूक्ष्माणि विद्वास्कर: ।
तेने तैश्च शिरोमणि निजगुणे साम्वत्सराणां पर-
स्तस्यासु तिलकं सुधाकरकृती चक्रे जगन्मोहनम् ॥
अनुचितानि पदानि सुबुद्धितो गणितगोलजचारुविचारत' ।
यत विशोध्य वदन्तु महोदया इति निवेदयतीह सुधाकर: ॥

सुधाकरद्विवेदी ।



श्रीः ।

श्रीगणेशाय नमः ।

ॐ नमः श्रीविघ्नवल्लीविध्वंसिने गजवदनाय ।

# अथ ब्राह्मस्फुटसिद्धान्तस्य

## पूर्वदशाध्याय्यां मध्यमाधिकारः ।



तत्रादौ ग्रन्थनिर्विघ्नसमाप्त्यर्थं महादेवं प्रणमति ।

**जयति प्रणतसुरासुरमौलिगरत्नप्रभाच्छुरितपादः ।**
**कर्त्ता जगदुत्पत्तिस्थितिविलयानां महादेवः ॥ १ ॥**

जयति स दशरथसूनुस्त्रिपथगता पादसेविनी यस्य ।
द्विजराजोऽभूद्यस्य सुधाकरोऽनुग्रहेणेह ॥ १ ॥
आदृता बहुविधा पुरातनैर्ब्रह्मगुप्तकृतिरत्र भास्करैः ।
या पृथूदकविचारचर्चिता सम्प्रकाशयति तां सुधाकरः ॥ २ ॥

प्रणता ये सुरासुरास्तेषां मौलिगानि यानि रत्नानि तेषां प्रभाभिर्दीप्तिभिः छुरितौ मिश्रीभूतौ पादौ यस्य स महादेवः । शेषं स्पष्टार्थम् ॥ १ ॥

इदानीं ग्रन्थारम्भे कारणमाह ।

**ब्रह्मोक्तं ग्रहगणितं महता कालेन यत् *श्लथीभूतम् ।**
**अभिधीयते स्फुटं तज्जिष्णुसुतब्रह्मगुप्तेन ॥ २ ॥**

ब्रह्मणोक्तं ब्रह्मोक्तं ग्रहगणितं ब्रह्मसिद्धान्तः । स च सम्प्रति शाकल्यसंहितान्तर्गत एकः । विष्णुधर्मोत्तरपुराणान्तर्गतो गद्यमयो द्वितीयः । पञ्चसिद्धान्तिकान्तर्गतः पञ्चवर्षमययुगवर्णनरूपस्तृतीयः । यद्यप्यत्र

---

* खिलीभूतम्-इति पाठान्तरम् ।

ब्रह्मगुप्तेनैतेषां कतमः स्फुटोऽभिधीयते—इति स्फुटं नास्ति तथाऽपि भगणादीनां मानैक्याद्ब्रह्मगुप्तेन विष्णुधर्मोत्तरपुराणान्तर्गतब्रह्मसिद्धान्त आगमत्वेनाङ्गीकृतः। पञ्चवर्षमययुगस्य तन्मध्यमाध्याये 'युगमाहुः पञ्चाब्द'मित्यादिना संहिताकारमतं प्रतिपादयत आचार्यस्य मते ज्यौतिषवेदाङ्ग न ब्रह्मसम्मतमिति स्फुटम्। वराहमिहिरमतादिदं विरुद्धमिति सुधीभिर्विचिन्त्यम्। 'ब्रह्मो विष्णुधर्मोत्तरं चापि सम्यङ् न वृद्ध'मिति कमलाकरोल्लेखादपीति स्फुटम्। तस्मिन् सिद्धान्ते का का खिलता कालान्तरवशाज्जाता तत्र का का ब्रह्मगुप्तेन स्फुटीकृता इति सर्वं ब्रह्मगुप्तग्रन्थे कुत्रापि नोपलभ्यते। केवलं ब्रह्मगुप्तग्रन्थप्रमाणादेव तस्य स्फुटत्वं सिद्धान्तविद्भिर्मान्यमिति विद्भिर्भृशं विचिन्त्यम्॥ २॥

इदानीं ज्योतिःशास्त्रमूलभूतस्य सग्रहस्य भचक्रस्य चलनमाह।

**ध्रुवताराप्रतिबद्धज्योतिश्चक्रं प्रदक्षिणगमादौ।**
**पौष्णाश्विन्यन्तस्थैः सह ग्रहैर्ब्रह्मणा सृष्टम्॥ ३॥**

स्पष्टार्थम्। 'सृष्टं भचक्रं कमलोद्भवेने'त्यादि भास्करोक्तमेतदनुरूपमेव। (गणिताध्याय—मध्यमाधिकारस्य १३ श्लोको द्रष्टव्यः।)॥ ३॥

इदानीं कालस्य प्रवृत्तिमाह।

**चैत्रसितादेरुदयात् भानोर्दिनमासवर्षयुगकल्पाः।**
**सृष्ट्यादौ लङ्कायां समं प्रवृत्ता दिनेऽर्कस्य॥ ४॥**

स्पष्टार्थम्। भास्करगणिताध्यायस्य १५ श्लोक एतदनुरूप एव॥ ४॥

इदानीं कालमानानां विभागकल्पनामाह।

**प्राणैर्विनाडिकार्क्षा षड्भिर्घटिका विनाडिकाषष्ट्या।**
**घटिकाषष्ट्या दिवसो दिवसानां त्रिंशता भवेन्मासः॥ ५॥**

**मासा द्वादश वर्षं विकलालिप्तांशराशिभगणान्तः।**
**क्षेत्रविभागस्तुल्यः कालेन विनाडिकाद्येन॥ ६॥**

स्पष्टार्थौ। (भा ग. १८-१९ श्लो.)॥ ५-६॥

इदानीं युगमानमाह ।

खचतुष्टयरदवेदा ४३२०००० रविवर्षाणां चतुर्युगं भवति ।
सन्ध्यासन्ध्यांशैः सह चत्वारि पृथक् कृतादीनि ॥ ७ ॥

युगदशभागो गुणितः .
कृतं १७२८००० चतुर्भिस्त्रिभिर्गुण १२९६००० स्त्रेता ।
द्विगुणो ८६४००० द्वापरमेके-
न सङ्गुणः ४३२००० कलियुगं भवति ॥ ८ ॥

स्पष्टार्थौ । ( भा॰ ग॰ २१–२२ श्लो ) ॥ ७-८ ॥

इदानीं युगमाने विशेष कथयति ।

युगपादानार्यभटश्चत्वारि समानि कृतयुगादीनि ।
यदभिहितवान् न तेषां स्मृत्युक्तसमानमेकमपि ॥ ९ ॥

आर्यभटो युगस्य महायुगस्य पादमितानि चतुर्थांशसमानि कृत-युगादीनि चत्वारि समानि तुल्यान्येवाभिहितवान् कथितवान् । यत् यस्मात तस्मात् तेषां युगाङ्घ्रीणां मध्ये एकमपि स्मृत्युक्तं न । यतो मनु-स्मृत्यादौ युगपादा कृतादयो न समा. । अत आर्यभटोक्ताः समा युग पादा. स्मृतिविरुद्धा इत्यर्थ । तथा चार्यभट. । 'युगपादा ग ३ ष, इति । पौलिशसिद्धान्ते च दिव्यमानेन कृतादीनामब्दा मनुस्मृत्यादिवत् पठिताः ।

तद्वाक्य च ।

अष्टाचत्वारिंशत् पादविहीना क्रमात कृतादीनाम् ।
अब्दास्ते शतगुणिता युगतुल्यगुणं तदेकत्वम् ॥ इति ॥ ९ ॥

इदानीं मनुमन्कल्पमान चाह ।

मनुरेकसप्ततियुगः
कल्पो मनवश्चतुर्दश मनूनाम् ।
आद्यन्तरान्तसन्धिषु

कृतकालोऽस्माद्युगसहस्रम् ४३२००००००० ॥ १० ॥

कृतकालः कृतयुगसमानकालः । अर्थात् १७२८००० एतानि सौर-वर्षाणि । शेषं स्पष्टार्थम् । 'मनुः समानगैर्युगै'रिति भास्करोक्तमेतदनुरूप-मेव । (भा॰ ग॰ २३–२४ श्लो॰) ॥ १० ॥

इदानीं कल्पे विशेषं प्रतिपादयति ।

आद्यन्तरान्तसन्धिषु
कल्पमनूनां कृताब्दसमकालम् ।
नेच्छन्ति ये षडूनं
तेषां कल्पो युगसहस्रम् ४२६४०८०००० ॥ ११ ॥

ये कृताब्दसमकालमाद्यन्तरान्तेषु-आदिमध्यावसानेषु सन्धिं ने-च्छन्ति तेषां मते षडूनं युगसहस्रं कल्पः । यतः कल्पे मनवश्चतुर्दश । समानगैर्युगैरेकमनुः । अतः कल्पे युगमानम् = ७१ × १४ = ९९४ ॥ ११ ॥

इदानीं कल्पे आर्यभटमतं कथयति ।

मनुसन्धिं युगमिच्छ-
त्यार्यभटस्तन्मनुर्यतः श्ख-युगः ।
कल्पश्चतुर्युगानां
सहस्रमष्टाधिकं तस्य ४३५४५६०००० ॥ १२ ॥

आर्यभटोऽपि युगं युगसमं मनुसन्धिमिच्छति । यतस्तन्मते श्ख-युगं एकमनुः । अर्थात् द्विसप्ततियुगैस्तन्मते एको मनुर्भवति । 'वर्गाक्ष राणि वर्गे' इत्यादि–आर्यभटसङ्केतेन

श = ७० । ख = २ द्वयोर्योगेन श्ख = ७२ ।

(द्रष्टव्या मदीया गणकतरङ्गिणी) ।

आर्यभटेन समानगस्थाने द्विसगयुगानि गृहीतानि । अतस्तन्मते मनुसन्धिर्युगसम एव फलितार्थ इत्यनुमीयते ।

यथैकस्मिन् कल्पे तन्मतेऽपि चतुर्दश मनवः । अत एकस्मिन् कल्पे

तन्मते युगानि = ७२ × १४ = १००८ । अतश्चतुर्युगानां सहस्रमष्टाधिक मित्युपपद्यते।

तथा चार्यभटः ।

काहो मनवो ढ १४ मनुयुग श्ख ७२ गतास्ते च ६ मनुयुग छ्ना २७ च ।
कल्पादेर्युगपादा ग ३ च गुरुदिवसाच्च भारतात् पूर्वम् ॥

(दशगीतिका)

दिव्यं वर्षसहस्रं ग्रहसामान्यं युगं द्विषट्कगुणम् ।
अष्टोत्तरं सहस्रं ब्राह्मो दिवसो ग्रहयुगानाम् ॥

(कालक्रियापा॰ श्लो॰ ८)

इदानीं रोमकं खण्डयति ।

**युगमन्वन्तरकल्पाः कालपरिच्छेदकाः स्मृतावुक्ताः ।**
**यस्मान्न रोमके ते स्मृतिबाह्यो रोमकस्तस्मात् ॥ १३ ॥**

रोमकसिद्धान्ते युगमन्वन्तरादीनां चर्चा नास्ति (द्रष्टव्या पञ्च सिद्धान्तिका) अतो रोमकः स्मृतिबाह्य इति स्पष्टार्थम् ॥ १३ ॥

इदानीं ग्रहयुगं परिभाषयति ।

**कालसंदेशयोगाद्भूयो ग्रहमन्दशीघ्रपातानाम् ॥**
**कल्पेन यतो योगस्ततः स्फुटं ग्रहयुगं कल्पः ॥ १४ ॥**

अत्र चतुर्वेदाचार्यः । 'कालयोगश्चैत्रसितादेरुदयाद्भानोः । अत्र योगं पौष्णाश्विन्यन्तस्थैः सह ग्रहैः । देशयोगो लङ्कायाम्—इति । तेना यमर्थः । कालसंदेशयोगाद्भूय एवैतावत्या सामग्र्या पुनरपि ग्रहशीघ्रमन्द पातानां यतो यस्मात् कल्पेनैव योगो नार्वाक् कृतस्तस्मात् कल्प एव ग्रहयुगं स्फुटम्'—इति ॥ १४ ॥

इदानीं ग्रहाणां मन्दोच्चानां चलोच्चानां ग्रहपातानां च भग णानाह ।

**कल्पेऽर्कबुधसितानां**

भगणाः शून्यानि सप्त रदवेदाः ४३२०००००००।
प्राग्व्रजता कुजगुरुशनि-
शीघ्रोच्चानां स्वकक्षासु ॥ १५ ॥

पञ्चाम्बराणि गुणगुण-
पञ्चमुनिस्वरशरैर्मिताः शशिनः ५७७५३३००००० ।
भौमस्य द्वियमशरा-
ष्टपञ्चवसुरसनवद्वियमाः २२९६८२८५२२ ॥ १६ ॥

कृतवसुनवाष्टनवनव-
षट्त्रिनवागेन्दवो ज्ञशीघ्रस्य १७९३६९९८९८४ ।
जीवस्य शरेषूदधि-
षट्पञ्चद्विकृतरसरामाः ३६४२२६४५५ ॥ १७ ॥

सितशीघ्रस्य यमलगो-
वेदनवाष्टाग्निपञ्चयमम्बनगाः ७०२२३८९४९२ ।
अष्टनवपञ्चमुनिरस-
शररसमनवोऽर्कपुत्रस्य १४६५६७२९८ ॥ १८ ॥

स्वाष्टाभ्रयो ४८० वसुशर-
वसुपञ्चखचन्द्रवसुवसुसमुद्राः ४८८१०५८५८ ।
द्विनवयमा २९२ द्वित्रिगुणाः ३३२
शरेषुवसव ८५५ स्त्रिपञ्चरसाः ६५३ ॥ १९ ॥

शशिवेदा ४१ मन्दाना-
मर्कादीनां विलोमपातानाम् ।
वसुरसरुद्रेन्दुगुण-
द्वित्रियमाः २३२३११९६८ सप्तरसपक्षाः २६७ ॥ २० ॥

शशियमशरा ५२१ गुणरसा- ६३
स्त्रिनन्दवसवः ८९३ समुद्रवसुविषयाः ५८४ ।

चन्द्रादीनां पश्चात्
व्रजतोऽश्विन्यादिभगणस्य ॥ २१ ॥

स्पष्टार्था। एत एव भास्करेणापि सिद्धान्तशिरोमणौ पठिताः। (ग्रहगणिते मध्यमाधिकार-भगणाध्याये १-६ श्लो॰) ॥ १५-२१ ॥

इदानीं मध्यमादीनाह।

परिवर्त्ताः खचतुष्टय-
शराब्धिरसगुणयमाश्विवसुतिथयः १५८२२३६४५००००।
रविभगणोना भानोः
सावनदिवसाः कुदिवसास्ते ॥ २२ ॥
रविभगणा रव्यब्दा
द्वादशगुणिता भवन्ति रविमासाः ५१८४००००००० ।
भगणान्तरं रवीन्द्वोः
शशिमासाः ५३४३३३००००० सूर्यमासोनाः ॥ २३ ॥
अधिमासाः १५९३३००००० शशिमासा-
स्त्रिंशद्गुणिता १६०२९९९००००००० भवन्ति शशिदिवसाः।
शशिसावनदिवसान्तर-
मवमानि तिथिः शशाङ्कदिनम् ॥ २४ ॥
सावनमुदयादुदयो
भानां चार्क्षं नृवत्सरोऽर्कोऽब्दः ।
पितृदिवसाः शशिमासा
दिव्यानि दिनानि रविभगणाः ॥ २५ ॥

स्पष्टार्था इमे श्लोकाः। भास्करेण सिद्धान्तशिरोमणावप्येता एव मध्यमादीनां संज्ञाः पठिताः। अतः किं पिष्टपेषणेनेति ॥ २२-२५ ॥

इदानीं कल्पगतमाह।

कल्पपरार्द्धे मनवः

षट् कस्य गताश्चतुर्युगत्रिघना: ।
त्रीणि कृतादीनि कले-
र्गोऽगैकगुणा: ३१७९ शकान्तेऽब्दा: ॥ २६ ॥

नवनगशशिमुनिकृतनव-
यमनगनन्देन्दव: १९७२९४७१७९ शकनृपान्ते ।
सार्धमतीतमनूनां
सन्धिभिराद्यन्तरान्तगतै: ॥ २७ ॥

कस्य ब्रह्मण: कल्पपरार्धे कल्पस्य द्वितीयार्धे षट् मनवश्चतुर्युगाना त्रिघना: सप्तविंशतिर्गता: । शेषं स्पष्टार्थम् ॥ २६–२७ ॥

गोऽद्रीन्दुद्विकृताङ्केत्यादि भास्करोक्तं द्रष्टव्यम् । (मध्यगति-मध्यमाधिकारे श्लो॰ २८)

इदानीं कल्पगते आर्यभटमतं प्रतिपादयति ।

अधिक: स्मृत्युक्तमनोरार्यभटोक्तश्चतुर्युगेण मनु: ।
अधिकं विंशांशयुतैस्त्रिभिर्युगैस्तस्य कल्पगतम् ॥ २८ ॥

स्मृत्युक्तमनो: सकाशादार्यभटोक्तो मनुस्तुर्युगेणैकेन महायुगेनाधिक: । अर्थात् मनुस्मृत्यादौ समानगै: ७१ युगैरेको मनुरार्यभटमते च ७२ युगै: । अतोऽनयोरन्तरसम एकयुगसमोऽधिक इत्यर्थ: । तस्यार्यभटस्य मतेऽत: कल्पादौ विंशांशयुतैस्त्रिभिर्युगैरधिकं कल्पगतं भवति । अर्थादाचार्यमतेन पूर्वं यत् कल्पगतं तथाऽऽर्यभटमतेन च यत् तयोरन्तरं युगत्रयमेकयुगस्य विंशांशाधिकं भवतीत्यर्थ: ।

अत्रोपपत्ति: । आर्यभटमते भारतावर्षात् कलियुगारम्भात् पूर्वं वर्तमानकल्पे ६ मनवो व्यतीता युगपादत्रयं च । तन्मते ७२ युगैरेको मनु: कृताद्यश्च युगपादसमा: सर्वे समा इति पूर्वमेव सर्वं प्रतिपादितम् ।

अत आर्यभटमतेन कल्पादौ गतयुगानि = ७२ × ६ + ३⁄४ = ४३२ ३⁄४ । आचार्यमतेन कृतयुगे युगमानम् = ४⁄१० । आदिमध्यावसानेषु षण्णां मनूनां

सप्तसन्धिषु युगमानम् $= \frac{७ \times ४}{१०} = \frac{२८}{१०}$ । षण्णां मनूनां मध्ये युगानि $=$ ४२६ । कृतत्रेताद्वापरयोगे युगमानम् $= \frac{४}{१०} + \frac{३}{१०} + \frac{२}{१०} = \frac{९}{१०}$ । सर्वयोगे कल्पादौ गतयुगानि $=$ ४२६ $+ \frac{२८}{१०} + \frac{९}{१०} =$ ४२९ $\frac{७}{१०}$ । अतो द्वयोरेतयोरन्तरे युगानि $=$ ४३२ $\frac{३}{४} -$ ४२९ $\frac{७}{१०} =$ ४३२ $\frac{१५}{२०} -$ ४२९ $\frac{१४}{२०} =$ ३ $\frac{१}{२०}$ अत उपपद्यते सर्वम् ॥२८॥

इदानीमहर्गणानयनमाह ।

**कल्पगताब्दैर्द्वादशघातश्चैत्रादिमासयुक्तोऽधः ।**
**गुणितो युगाधिमासै रविमासाप्ताधिमासयुतः ॥ २९ ॥**
**त्रिंशद्गुणस्तिथियुतः पृथग्युगावमगुणो युगेन्दुदिनैः ।**
**भक्तः फलावमोनोऽर्कसावनाहर्गणोऽर्कादिः ॥ ३० ॥**

स्पष्टार्थौ । सिद्धान्तशिरोमणिग्रहगणितमध्यमाधिकारे ग्रहानयनस्य १–३ श्लोका द्रष्टव्याः ॥ २९–३० ॥

इदानीं ग्रहानयनमाह ।

**इष्टग्रहभगणगुणादहर्गणात् कल्पसावनघुहृतात् ।**
**भगणादि फलं मध्यो लङ्कायां भास्करोदयिकः ॥ ३१ ॥**

स्पष्टार्थम् (मध्य॰ ग्रहा॰ श्लो॰ ४) ॥ ३१ ॥

इदानीं निजानयनस्य प्रशंसामाह ।

**आनयति दिवसवारं स्मृत्यविरोधेन मध्यमथवा वा ।**
**आस्मादन्यैस्तन्त्रैरार्यभटाद्यैर्न कश्चिदपि ॥ ३२ ॥**

आस्मात्–आचार्योक्तात्तन्त्रादेव स्मृत्यविरोधेन स्मृत्यनुकूलेन हेतुना दिवसवारमर्थादहर्गणमथवा मध्यं मध्यग्रहान् आनयति गणक इत्यध्याहारः । आर्यभटाद्यैरार्यभटादिप्रणीतैरन्यैस्तन्त्रैश्च कश्चिदपि मध्यान् ग्रहानहर्गणं च नाऽऽनयति स्मृतिविरोधादित्यर्थः ॥ ३२ ॥

इदानीं वारप्रवृत्तिमाह ।

**जगति तमोभूतेऽस्मिन् सृष्ट्यादौ भास्करादिभिः सृष्टैः ।**
**यस्माद्दिनप्रवृत्तिर्दिनवारोऽर्कोदयात् तस्मात् ॥ ३३ ॥**

यस्मादतोऽस्मिन् तमोभूते प्राकृतिकप्रलये सूर्यादीनामभावादन्धकारमये जगति भास्करादिभिः सृष्टे रचिते सूत्पादौ दिनप्रवृत्तिर्जाता। अर्थात् रचनाशक्ते प्रथमं रवे य रचना ब्रह्मणा कृता तद्रचनाकाल एव दिनप्रवृत्तिरभूत् तस्मादर्कोदयादेव दिनवारो ज्ञेय इति ॥ ३३ ॥

इदानीमहर्गणेन कुत्र ग्रहाः सिद्धा इत्याह।

**लङ्कासमयाम्योत्तररेखायां भास्करोदये मध्याः।**
**देशान्तरेणानयुक्ता रेखायाः प्रागपरदेशेषु ॥ ३४ ॥**

लङ्कासमयाम्योत्तररेखायामर्थाल्लङ्कायाम्योत्तररेखाया ये तिष्ठन्ति तेषां भास्करोदये मध्यमरव्युदयकाले मध्या ग्रहा अहर्गणेन भवन्तीत्यर्थः। रेखाया प्रागपरदेशेषु च गणितागता ग्रहा देशान्तरफलेन क्रमेणानयुतास्तदा स्वनिरक्षोदयकालिका भवन्तीति सर्वं भास्करमध्यमाधिकारतः स्फुटम्। चरोदयान्तरसंस्कारेण वास्तवा स्वनिरक्षोदये ग्रहा भवन्तीति भास्करेणोदयान्तरसंस्कार आनीत इति ॥ ३४ ॥

इदानीं वारादिमाह।

**दिनवारादिः पश्चादुज्जयिनीदक्षिणोत्तरायाः प्राक्।**
**देशान्तरघटिकाभिः पश्चात् प्राग्भवति रव्युदयात् ॥३५॥**

लङ्कोदये वारादिरिति परिभाषया 'अर्कोदयादूर्ध्वमधश्च ताभिः प्राच्यां प्रतीच्यां दिनपप्रवृत्ति' रिति भास्करोक्त्या सर्वं स्फुटमेव ॥ ३५ ॥

इदानीं देशान्तरमाह।

**भूपरिधिः स्वस्वक्षशरा रेखा स्वान्तान्तरांशसंगुणिताः।**
**भगणांशहृताः फलकृतिहीना देशान्तरस्य कृतिः ॥ ३६ ॥**

**शेषपदगुणा भुक्तिर्भूपरिधिहृता कलादिलब्धमृणम्।**
**उज्जयिनीयाम्योत्तररेखायाः प्राग्धनं पश्चात् ॥ ३७ ॥**

**मध्यग्रहे स्फुटे वा भूपरिधिहृतात् पदात् गुणात् षष्ट्या।**
**लब्धं घटिका अथ वा कर्म तिथावृणधनं ग्रहवत् ॥ ३८ ॥**

आचार्यमते भूपरिधिः = ५००० । अयं 'व्यासवर्गाद्दशगुणात् पदं भूपरिधिर्भवे'दित्यादिना कुभुजङ्गसायकभूमिताद्व्यासात् सिध्यति । अत्र क्षेत्रदर्शनेनैव व्याख्या स्फुटा । कल्प्यते ध्रु$_{१}$ खसनि ध्रु$_{२}$ स्वयाम्योत्तरवृत्तम् । ख = स्वस्थानम् । नि = स्वनिरक्षस्थानम् । ध्रु$_{१}$रेलध्रु$_{२}$ = लङ्कायाम्योत्तरवृत्तम् । खनि = स्वदेशाक्षांशसम्बन्धीनि योजनानि = $\frac{\text{भूप} \times \text{अक्षां}}{३६०}$ । लङ्कायाम्योत्तरवृत्ते 'रे' कोऽपि रेखादेशः । रेस = नाडीवृत्तसमानान्तरं लघुवृत्तम् । सनि = तद्रेखादेशाक्षांशसम्बन्धीनि योजनानि = $\frac{\text{भूप} \times \text{रेअक्षां}}{३६०}$ । खरे = रेखास्वदेशयोरन्तरयोजनानि । आचार्येण खरेसत्रिभुजमृजुजात्यक्षेत्रं कल्पितम् । तत्र रेसमानमेव पूर्वापरान्तरं देशान्तरयोजनसमानम् । तदानयनं जात्यक्षेत्रयुक्त्या ।




$$\text{रेस} = \sqrt{\text{रेख}^{२} - \text{सख}^{२}} = \sqrt{\text{रेख}^{२} - \left\{\frac{\text{भूप}}{३६०}(\text{स्वदेअक्षां} - \text{रेअक्षां})\right\}^{२}}$$

ततो यदि भूपरिधिना ग्रहभुक्तिस्तदा देशान्तरयोजनैः किमिति कलादि फलं प्राक्पश्चाद्दृणं धनं मध्यग्रहे वा स्फुटे कार्यमित्यपि सम्बन्धः ॥

पञ्चसिद्धान्तिकायां वराहमिहिरानयनानुरूपमेवेदम् । (द्रष्टव्या पञ्चसिद्धान्तिकाप्रकाशिका पृ० १२—१३)

अत्र भूपरिधिहृता स्पष्टभूपरिधिहृता तथा देशान्तरस्य रेखा स्वदेशयोरन्तरस्य योजनात्मकस्येति व्याख्या समीचीना । घटिकादिकं देशान्तरं तिथौ तिथिभुक्तघटिकासु ग्रहवद्देयम् । शेषं स्पष्टार्थम् ॥ ३६-३८ ॥

इदानीमब्दादौ दिनाद्यहर्गणादिसाधनमाह ।

कल्पगताब्दा गुणिता
रूपाष्टजिनै२४८१र्नवाग्निसप्तनगैः ७७३९ ।
खखरसनवभि९६००र्भक्ता
दिनाद्यमान्यंशकाः शेषाः ॥ ३९ ॥

कल्पगताब्दा एकत्र कृपाष्टजिनैः२४८१न्यत्र भशशिसप्तनगै- ७७३९र्गुणिताः । उभयत्र खखरसनवभिः९६००र्भक्ताः फलमाद्यस्थाने सावनदिनानि द्वितीयस्थानेऽवमानि भवन्ति । शेषाश्च क्रमेण दिनांशका अवमांशकाश्च ज्ञेयाः ।

अत्रोपपत्तिः । भास्करप्रत्यब्दशुद्धिस्थदिनाद्यवमाद्यानयनवत् । अत्रोभयत्र खखरसनवभिः ९६०० सवर्णनं कार्यमिति ॥ ३९ ॥

इदानीमब्दादावधिमाससाधनमाह ।

**तद्द्विगुणाब्दयोगा अधिमासास्त्रिंशता हृता लब्धम् ।**
**शेषास्तिथयः शुद्धिर्दिनानि विकलं दिनांशेभ्यः ॥ ४० ॥**

दिनांशेभ्योऽवमदिनांशेभ्यो विकलं सत् दिनानि शुद्धिर्भवति । अथाऽधिशेषतिथयः तदवशेषावयवेन रहिताः सत्यः शुद्धिर्भवति । शेषं स्पष्टम् ।

अत्रोपपत्तिः । 'दिनाद्रितघ्नाद्विद्विघ्नाब्दयोग' इत्यादिना भास्करोक्तेन स्फुटा ॥ ४० ॥

इदानीमब्दाधिपं लघ्वहर्गणं चाह ।

**कल्पगताब्ददिनयुतः सूर्याद्योऽब्दाधिपोऽब्दभगणवधः ।**
**कल्पाब्दहृतो भगणादिमध्यमाः सूर्यभगणान्ते ॥ ४१ ॥**
**चैत्रसिताद्यास्तिथयः शुद्धिविहीनाः पृथक् गुणा रुद्रैः ।**
**अवमांशेभ्यो यमनवरसगुणितेभ्यो विभक्तेभ्यः ॥ ४२ ॥**
**स्वच्छेदेन फलयुता हृतास्त्रिखाग्नैः ७०३ फलावमविहीनाः ।**
**रविमेषादिद्युगणो मुनिहृत् शेषोऽब्दपस्यादिः ॥ ४३ ॥**

स्पष्टार्थम् ।

अत्रोपपत्तिः । 'तदब्दान्वितं भास्कराद्यब्दपः स्या'दित्यादि भास्करोक्तेनाब्दाधिपानयनवासना सुगमा । तथा रव्यब्दान्ते ग्रहानयनं च

त्रैराशिकेनोपपद्यते । लघ्वहर्गणेऽवमानयनार्थं च त्रिखनग ७०३ चान्द्राहे रुद्र११मितान्यवमानि स्वल्पान्तरतः प्रकल्प्यानुपातः कृतस्तद्यथा ।

अब्दादेर्गततिथयः = इष्टति − अधिशेति । एता रुद्रगुणास्त्रिखनग७०३हृता अब्दादिक्षयशेषयुताः

$$\text{अवमानि} = \frac{११\,(\text{इष्टति} - \text{अधिशेति})}{७०३} + \frac{\text{क्षशे}}{९६००}$$

$$= \frac{११\,(\text{इष्टति} - \text{अधिशेति}) + \frac{७०३\ \text{क्षशे}}{९६००}}{७०३}$$

$$= \frac{११\,(\text{इति} - \text{अधिशेति}) + \frac{११\ \text{क्षशे}}{९६००} + \frac{६९२\ \text{क्षशे}}{९६००}}{७०३}$$

$$= \frac{११\left\{\text{इति} - \left(\text{अधिशेति} - \frac{\text{क्षशे}}{९६००}\right)\right\} + \frac{६९२\ \text{क्षशे}}{९६००}}{७०३}$$

$$= \frac{११\,(\text{इति} - \text{शु}) + \frac{६९२\ \text{क्षशे}}{९६००}}{७०३}$$

अत उपपन्नमवमानयनम् । शेषं भास्करलघ्वहर्गणानयनवदिति सर्वं निरवद्यम् ॥ ४१–४३ ॥

इदानीं रव्यानयनमाह ।

**युगणात्सप्तत्यंशं खनवार्कांशाधिकं विशोध्यांशाः ।**
**मध्यमबुधसूर्यसिताः शीघ्रोच्चं कुजगुरुशनीनाम् ॥ ४४ ॥**

अत्र गणितन्यासेनैव व्याख्या सुगमा ।

भागाद्या मध्यमरविबुधशुक्राः $= \text{अह} - \left(\frac{\text{अह}}{७०} + \frac{\text{अह}}{७० \times १२९}\right)$ ।

आचार्यमतेन महीमिताऽहर्गणात् कलादिका

रविगति = ५९ । ८ । १० । २२ । भास्करमतेऽन्तिमावयवे २२ स्थाने २१ आयाति ।

अत्रोपपत्तिः । 'महीमितादर्शगणात् फलानि यानि तत्कराः' इत्यादि भास्करविधिना मध्यमां गतिमाचार्यप्रकारेणानीय ततो विलोमेन खण्डगुणनसङ्क्रमणादिना सर्वेषां मध्यग्रहानयनानामुपपत्तिः कर्तव्या किं ग्रन्थगौरवेणेति ॥ ४४ ॥

इदानीं चन्द्रानयनमाह ।

**त्रिगुणमवमावशेषं विभजेद्गुणसप्तशशिभिराप्तांशैः ।**
**पृथगधिकोऽर्को रविगुणतिथ्यंशैः संयुतश्चन्द्रः ॥ ४५ ॥**

स्पष्टार्थम् ।

अत्रोपपत्तिः । आचार्योक्तमवमशेषं रुद्रहृतं भास्करावमशेषम् $=\frac{चशे}{११}$ । ततः 'स्वनगभागयुतेन दशाहतत्रयदिनोर्ध्वरितेन कलान्वित' इति भास्करविधिना कलात्मकं फलं षष्ट्या विभज्य जातमवमशेषसमुद्भवमंशात्मकं फलम् $= \frac{८० चशे}{७ \times ११ \times ६०} = \frac{८ \times ३ \times चशे}{७ \times ११ \times ६ \times ३} = \frac{३ चशे}{\frac{७ \times ११ \times ६ \times ३}{८}} = \frac{३ चशे}{\frac{६९३}{४}}$
$= \frac{३ चशे}{१७३}$ स्वल्पान्तरात् । शेषोपपत्तिर्भास्करोक्त्या ज्ञेयेति ॥ ४५ ॥

इदानीं भौमबुधशीघ्रोच्चानयनमाह ।

**एकादशलिप्तांशा भौमः शरसप्तवसुभि८७५रिन्दुयमैः २१ ।**
**कृतगुणितद्युगणांशाः पञ्चरसैः ६५ षड् बुधः शीघ्रम् ॥ ४६ ॥**

भौमः $= \frac{११ अह}{२१}$ भागाः $+ \frac{११ अह}{८७५}$ कलाः ।

आचार्यमतेन कलादिका भौमगतिः = ३१ । २६ । २८ । ७ ।

इयमेव भास्करोक्ता च ॥

बुधशीघ्रोच्च भगणाद्यम् $= ४ अह + \frac{६ अह}{६५}$ ।

आचार्यमतेन भागादिका बुधशीघ्रोच्चगतिः = ४ । ५ । ३२ ।
१८ । २८ ।

इयमेव भास्करोक्ता च ॥

अनयोरप्यानयनोपपत्तिरपि सुगमा ॥ ४६ ॥

इदानीं गुरुशुक्रशीघ्रोच्चानयनमाह ।

**द्युगणे पृथग्लिप्ता जीवः कृतशरगुणैः शरकलोनः ।**
**भागकलाः सितशीघ्रं विपर्ययैर्वसवो द्विपञ्चाष्टौ ॥ ४७ ॥**

कलात्मको गुरुः $= \text{५अह} + \frac{\text{५ अह}}{\text{३५४}}$

रूपाहर्गणेन कलादिका गुरुगतिः = ४ । ५९ । ९ । ९ ।

भास्करोक्तापीयमेव ॥

एवं शुक्रशीघ्रोच्चम् $= \frac{\text{८ अह}}{\text{५}}$ अंशाः $+ \frac{\text{८ अह}}{\text{६७}}$ कलाः ।

रूपाहर्गणे भागादिका गतिः = १ । ३६ । ७ । ४४ । ३१ ।

भास्करमतेन ३१ स्थाने ३५ आगच्छन्त्यन्तिमावयवे ॥

अत्रोपपत्तिरतिसुगमा रव्याद्यानयनोपपत्तियुक्त्या ॥ ४७ ॥

इदानीं शनि-चन्द्रोच्चानयनमाह ।

**द्विगुणः कला दिनगणस्तिथिरामैर्हृ कले च सूर्यसुतः ।**
**नवभिर्भागः सागरशून्यवेदैश्च चन्द्रोच्चम् ॥ ४८ ॥**

कलात्मकः शनिः $= \text{२ अह} + \frac{\text{२ अह}}{\text{३१५}}$ ।

आचार्यमते कलादिका गतिः = २ । ० । २२ । ५१ ।

इयमेव भास्करोक्तापि ॥

चन्द्रोच्च भागाद्यम् $= \frac{\text{अह}}{\text{९}} + \frac{\text{अह}}{\text{४००४}}$ ।

आचार्यमते कलादिका गतिः = ६ । ४० । ५३ । ५६ ।

भास्करोक्तापीयमेव ॥

अत्रोपपत्तिश्च पूर्ववत् ॥ ४८ ॥

इदानीं चन्द्रपातानयनमिष्टदिने ग्रहानयनं चाह ।

**भागो नन्दरसाङ्कैः शशिशून्यस्वरयमैश्च शशिपातः ।**
**रविमण्डलान्तिकयुता मध्या भ्रमणान्तगाः शेषाः ॥ ४९ ॥**

भागात्मकश्चन्द्रपातः $= \frac{\text{अह}}{१६} + \frac{\text{अह}}{७७०१}$ ।

आचार्यमते कलादिका गतिः = ३ । १० । ४८ । २२ ।

भास्करमतेऽन्तिमावयवे २२ स्थाने २० आयाति ॥

रविमण्डलान्ते रविभगणान्तेऽर्थाद्व्यब्दान्ते ये ग्रहाः पूर्वमनुपातेन सिद्धास्ते रविमण्डलान्तिकाः कथ्यन्ते। तैरहर्गणोद्भवा युता इष्टदिने उदयकाले ग्रहा भवन्ति । शेषा मन्दोच्चादयो गत्यल्पत्वाद्भगणान्तगा रव्यब्दान्तोद्भवा एवेष्टदिने ज्ञेया इति ।

पातसाधनोपपत्तिर्ग्रहानयनोपपत्तिवदन्यस्यातिसुगमेति ॥ ४९ ॥

इदानीं ग्रहानयने विशेषं प्रतिपादयति ।

**पादार्धविपाददिनै रात्र्यर्धास्तमयदिनदलौदयिकाः ।**
**ऊनाः कृत्वा तिथयो देशान्तरनाडिकोनयुताः ॥ ५० ॥**

अत्र चतुर्वेदाचार्य. । 'पादार्धविपाददिनैरूनीकृत्य तिथयो यथासङ्ख्यं रात्र्यर्धास्तमयदिनदलौदयिका ग्रहा आगच्छन्ति । एतदुक्तं भवति । यास्तिथयोऽहर्गणानयने दीयन्ते ता यदि पादेनोना दीयन्ते पञ्चदश भिर्घटिकाभिरूना इत्यर्थः । तदा तत्र योऽहर्गणो भवति तेन ये ग्रहा आनीयन्ते तेऽतीतार्धरात्रकालिका भवन्ति' ।

एव दिनार्धोनादहर्गणाद्ये ग्रहास्तेऽतीतास्तकालिकाः । विपाद दिनोनादहर्गणाद्ये ग्रहास्तेऽतीतदिनार्धकालिका । दिनोनादहर्गणाच्च ये तेऽतीतदिनोदयिका भवन्तीत्यर्थः ।

एव प्रागपरत्र देशान्तरनाडिकोनयुतास्तिथयो यद्यहर्गणार्थे दीयन्ते तदा स्वदेशे तत्तत्कालिका ग्रहा भवन्तीत्यर्थः ॥ ५० ॥

इदानीं कलिगतादेव शुद्ध्याद्यानयनाय विशेषं रविमण्डलान्तिकग्रहानयनार्थं प्रकारान्तरं चाह ।

**कलिगतशुद्धिः प्राग्वत्**
**शुक्राद्योऽब्दाधिपोऽब्दभगणवधात् ।**

क्षितिजस्य खत्रयाष्टर-
सससवसुखाग्निवेदपुतात् ४३२०८७६८००० ॥ ५१ ॥
बुधशीघ्रस्य खखाम्बर-
रसनन्दाष्टाष्टवसुयमोदधिभिः ४२८८८८६०००।
खचतुष्टययमशरगुण-
शशित्रिवेदैः ४३१३५२०००० सुरेन्द्रगुरोः ॥ ५२ ॥
भार्गवशीघ्रस्याम्बर-
खखाष्टवेदाब्धिखाग्निकृतैः ४३०४४८००० ।
भास्करसुतस्य खत्रय-
रविगुणशरखदहनसमुद्रैः ४३०५३१२००० ॥ ५३ ॥
शून्यचतुष्टयपक्षे-
न्दुरामगुणनवभि ९३३१२०००० रर्कमन्दस्य ।
इन्दोः खत्रययमशर-
नवपञ्चव्योमशरचन्द्रैः१५०५९५२००० ॥ ५४ ॥
खत्रययमनवपञ्चा-
ष्टरामधृतिभिः १८३८५९२००० शशाङ्कपातस्य ।
कल्पगतभगणघातात्
कुजादिमन्दोच्चपातानाम् ॥ ५५ ॥
भगणादि कल्पवर्षैर्लब्धं रविमण्डलान्तिका मध्याः ।
मेषादिद्युगणफलाधिका भवन्तीष्टदिनमध्याः ॥ ५६ ॥

कलेर्येऽब्दा गतास्ते कलिगतास्तेभ्य. शुद्धिः कलिगतशुद्धिः प्राग्वत् साध्या । अर्थात् कल्पगताब्देभ्यो यथा पूर्वं शुद्धिरानीता तथा कलिगताब्देभ्यः साध्या किन्तु तत्र कल्यादौ शुक्रवारस्थितत्वादब्दाधिपगणना शुक्रवारात् कार्या । अब्दभगणवधादिति । कलिगताब्दानां ग्रहभगणानां च वधात् पाठपठितस्वस्वक्षेपयुतात् कल्पवर्षैर्यद्भगणादि तत्र ते रविमण्डलान्तिका मध्या ग्रहा भवन्ति । ते च मेषादिद्युगणफलेन वर्षस्य

गंणाभवन्त्वेटैरधिका इष्टदिने मध्या ग्रहा भवन्ति । शेषं स्पष्टार्थम् ।

अत्रोपपत्ति. । कलिगतशुद्ध्यादीनामति सुगमा । इष्टाब्दान्ते ग्रहा-नयनाय कल्पगताब्दाना खण्डद्वय कृतमाचार्येण कल्पात् कल्यादिपर्यन्त-मेक कलेरिष्टवर्षपर्यन्त द्वितीयम् । ततोऽनुपातो यदि कल्पाब्दैरेभिर्भग णास्तदा कल्पगताब्दै. कि जातोऽभीष्टवर्षान्ते भगणादिर्ग्रहः $= \frac{\text{कगव} \cdot \text{यभ}}{\text{कव}}$

$$= \frac{\text{कल्पात् कल्यादिपर्यन्तवर्ष} \times \text{ग्रभ}}{\text{कव}} + \frac{\text{कलेर्गतव} \times \text{ग्रभ}}{\text{कव}}$$

अत्र प्रथमखण्डे यद्भगणशेषं तस्यैव क्षेपसंज्ञा कृताऽऽचार्येण ।

यथा कुजभगणाः $=$ २२९६८२८५२२

कल्यादौ गतवर्षगणः $=$ १९७२९४४०००

अनयोर्घातः $=$ ८१९९१८२०४३५९९२६८ $\times$ ४३२०००

कल्पवर्षैः ४३२०००००००विभक्तं लब्धम् $=$ ८१९९१८२०४३५

शेष क्षेप $=$ ४२८८८९६००० । एवमन्येषा क्षेपा उत्पाद्या. ॥५१ ५६॥

इदानीं इष्टाब्दान्तचैत्रादिमध्ये कियन्ति सावनदिनानि तदर्थमाह ।

शुद्धीशवधे शुद्धेऽवमशेषात् सावनद्युगणसिद्धिः ।
व्येकावमं गृहीत्वा गुणखमुनियुताच्च शुद्धिश्चेत् ॥ ५७ ॥

शुद्धेरीशानामेकादशाना च वधेऽवमशेषाद्द्व्यब्दान्ते प्रागानीताव-मशेषात् यमनवरसगुणितात् खखरसनवहृतात् शुद्ध तत. सावनाहर्गणसि द्धिः 'कृताग्निवागै फलावमविहीना' इत्यादिना चैत्रादावहर्गणसिद्धि-र्भवतीत्यर्थः । यत्रावमशेषादेकादशशुद्धिवधस्य न शुद्धिर्विशोधन भवेत्तदा इष्टाब्दान्ते कल्पावमान्यवमानि तानि व्येकानि कृत्वा गुणखमुनि ७०३यु तादवमशेषात्तद्वध विशोधयेत–इति ।

अत्रोपपत्तिः । चैत्रादितिथि' शून्यमिता भवति तदा विपरीतशोध नेन ० – शु = – शु । ततो 'ऽवमशेषो यमनवरसगुणितेभ्यो विभ

$$\text{क्तेभ्य' इत्याद्याचार्योक्तेनावमशेषम्} = \frac{\frac{\text{९९५ क्षये}}{\text{६६००}} - \text{११ शु}}{\text{७०३}} = \text{इक्षये ।}$$

अत्र यदि $\frac{\text{६८२ यवशे}}{\text{६६००}} < \text{११ शु}$ तदा ऋणात्मशेषं भवति तदा लब्धौ रूपाल्पा भवति । ऋणात्मके शेषे धनार्थं रूपयोजनेन $\text{१} + \frac{\frac{\text{६८२ यवशे}}{\text{६६००}} - \text{११ शु}}{\text{७०३}}$

$= \frac{\text{७०३} + \frac{\text{६८५ यवशे}}{\text{६६००}} - \text{११ शु}}{\text{७०३}}$ इदं चैत्रादावमशेषं भवति—इति स्फुटमेव । एवं रव्यब्दात् प्राक् चैत्रशुक्लादौ विपरीताहर्गणस्य सिद्धिर्भवति । अयमेव चैत्राद्यहर्गण इति लल्लाद्यैरुच्यत इति ॥ ५७ ॥

इदानीं चैत्रादेरहर्गणं ततो मध्यग्रहानयनमाह ।

**चैत्रसिताद्योऽब्दपतिः शुद्ध्यूनाया दिनाब्दरूपयुतेः ।**
**तद्द्युगणाद्दिनवारः शुद्ध्यूना मध्यमाः प्राग्वत् ॥ ५८ ॥**

दिनानां पूर्वसाधितदिनाद्यस्य—अब्दानां कल्पगताब्दानां रूपस्य च या युतिः सा दिनाब्दरूपयुतिस्तस्याः शुद्ध्यूनायाश्चैत्रसिताद्योऽब्दपतिः साध्य । अर्थाद्दिनाब्दरूपयुतेः शुद्ध्यूनाया यच्छेषं तत्सप्ततष्टं च रव्यादिकश्चैत्रादौ वारो भवेत्तच्चैत्रादेर्योऽहर्गणो भवेत्तत्र चैत्रादिवाराद्दिनवारो ज्ञेयस्तस्माद्ये ग्रहास्ते शुद्ध्यूनाः शुद्धिदिनोद्भवखेटैरूनास्तदा सौराब्दान्तात् पूर्वसाधिताः प्राग्वत् मध्यमा ग्रहाः स्युः । यदि कश्चिदिष्टवर्षे चैत्रादेरहर्गणं ततो ग्रहान् ततश्च सौराब्दात् मध्यमान् ग्रहान् ज्ञातुमिच्छति तेनैवमुपरि प्रतिपादितेन प्रकारेण कार्यमित्यर्थः ।

अत्रोपपत्तिः । अमान्तरव्यब्दान्तमध्ये या इष्टतिथयस्ता अधिशेषतिथयस्ताभ्यो वर्षान्तक्षयशेषघटिका विशोध्य शुद्धिसंज्ञा कृता सैवामान्तवर्षान्तमध्ये सावनदिनानि ।

कल्पादेरिष्टसौरवर्षान्तं सावनानि दिनानि = ३६५ गव + दिनादि एभ्योऽमान्तरव्यब्दान्तमध्ये यानि सावनानि शुद्धिमितानि तानि विशोध्य चैत्रादौ सावनदिनानि = ३६५ गव + दिनादि − शु

एतानि सप्ततष्टानि वर्तमानवारार्थं सैकानि जातश्चैत्रादावर्कोद्वार: = गव + दिनादि + १ – शु । अत उपपन्नम् । शेषस्य वासना स्पष्टा । लघ्वहर्गणानयने कथं वारगणना कार्या इत्यत्र कमलाकरविशेषस्तत्त्वविवेके द्रष्टव्यः । तेन कदाचिदुपयोगं विनैव चैत्रादौ वारो जायते । वारार्थमहर्गण: सैको निरेक: कार्य इति मर्म ज्योतिर्विदां स्फुटमेव किं लेखप्रयासेन ॥ ५८ ॥

इदानीं ग्रहाणां बीजकर्माह ।

खखखार्क१२०००हृताब्देभ्यो
गतगम्याल्पाः खशून्ययमल२००हृताः ।
लब्धं त्रि३सायक५हतं
कलाभिरूनौ सदार्केन्दू ॥ ५९ ॥
शशिवत् जीवे द्वि२हतं
चन्द्रोच्चे तिथि१५हतं तु सितशीघ्रे ।
द्वीषु५२हतं च बुधोच्चे
द्वि२कु१वेद४हतं च पातकुजशनिषु ॥ ६० ॥

जीवे गुरौ शशिवत् फलं देयम् । यथोक्तचन्द्रे तद्वैव लिप्तिकाद्य गुरावप्यृणं कार्यम् । शेषं स्पष्टार्थम् । 'खाभ्रखार्कहृताः कल्पयाताः समा' इत्यादि भास्करोक्तमेतदनुरूपमेव ।

* अत्रोपलब्धिरेव वासना । 'यद्वर्षसहस्रषट्कं यावदुपचयस्ततोऽपचय इत्यत्रागम एव प्रमाणं नान्यत् कारणं वक्तुं शक्यते' इति भास्करो वदतीत्यत्र । 'द्विकुवेदहतं' चेत्यस्य स्थाने 'द्विकुवेदैः' इति पाठः साधुश्छन्दोऽभङ्गात् ॥ ५९–६० ॥

इदानीमार्यभटमतीयेन्दुपातोच्चयोर्दूषणमाह ।

अकृतार्यभटः शीघ्रगमिन्दूच्चं पातमल्पगं स्वगतेः ।
तिथ्यन्तग्रहणानां ध्रुवाचरं तस्य संवादः ॥ ६१ ॥

आर्यभटमते चन्द्रोच्चभगणाः कल्पे = ४८८२१९०००

आचार्यमते चन्द्रोच्चभगणा कल्पे = ४८८१०५८५८ ततोऽल्पाः ।

अत आर्यभट इन्दूच्च शीघ्रग शीघ्रगति स्वगतेराचार्योक्तगते रक्त कृतवान् ।

एवमार्यभटमते चन्द्रपातभगणा. कल्पे = २३२२२६००० 

आचार्यमते चन्द्रपातभगणा कल्पे = २३२३११६८ ततोऽधिकाः ।

अत आर्यभटेनाचार्यनिर्णीतपातगते' स्वपातमल्पगमल्पगति कृतवान् । अतस्तस्य मते यदि कदाचित्तिथ्यन्तग्रहणाना मध्ये आचार्येण सह सवाद ऐक्य भवेत्तद् घुणाक्षर ज्ञेयम् । यथा काष्ठावयवभक्षणे कदाचित् ककाराद्यक्षराकृतिरुत्पद्यते परन्तु तदक्षर घुणेन न बुद्धा लिखित तथैव चार्यभटस्य ग्रहगादिष्वैक्य न तद्बुद्धिभवमित्यात्मप्रशसा ऽऽचार्येण कृतेति ॥ ६१ ॥

भगणादिष्वार्यभटव्याख्यानि च ।

युगरविभगणा. ख्युघृ शशि चयगियिङुशुछ्लृ कु ङिशिबुणॢख्षृ प्राक् ।
शनि ढुङ्विघ्व गुरु खिच्युभ कुज भद्लिझुनुखृ भृगुबुध सौरा. ॥ १ ॥
चन्द्रोच्च जुष्खिध बुध सुगुशिथृन भृगु जषबिखुछृ शेषार्का. ।
बुफिनच पातविलोमा बुधाह्न्यजार्कोदयाच्च लङ्कायाम् ॥ २ ॥
(आर्यभटस्य सख्याप्रकाशनार्थं सङ्केतो गणकतरङ्गिण्या द्रष्टव्य. )

इदानीमात्मप्रशसामाह ।

**मध्यगतिज्ञं वीक्ष्य श्रीषेणार्यभटविष्णुचन्द्रज्ञाः ।**
**सदसि न भवन्त्यभिमुखाः सिंहं दृष्ट्वा यथा हरिणाः ॥ ६२ ॥**

मध्यगतिज्ञमाचार्यमध्यग्रहानयनवेत्तार वीक्ष्य श्रीषेण-आर्यभट-विष्णुचन्द्रोक्ताना मध्यग्रहानयनवेत्तारः सदसि अभिमुखा न भवन्ति यथा हरिणाः सिह दृष्ट्वा तस्याभिमुखा न भवन्तीति स्पष्टोऽर्थः ॥ ६२ ॥

इदानीं मध्यमाधिकारस्योपसहारमाह ।

**युगभगणमानयाताहर्गणदिनवारमध्यमाद्येषु ।**
**मध्यमगतिर्क्षिप्त्यार्याणां प्रथमः कृतोऽध्यायः ॥ ६३ ॥**

इति श्रीब्राह्मस्फुटसिद्धान्ते मध्यमाधिकारः प्रथमः ॥ १ ॥

आर्याणां त्रिषष्ट्याऽयं मध्यमगतिरध्यायः कृत इति ॥ ६३ ॥

मधुसूदनसूनुनोदितो यस्तिलकः श्रीपृथुनेह जिष्णुजोक्ते ।
हृदि तं विनिधाय नूतनोऽयं रचितो मध्यगतौ सुधाकरेण ॥

इति श्रीकृपालुदत्तसूनुसुधाकरद्विवेदिविरचिते ब्राह्मस्फुटसिद्धान्त-
नूतनतिलके मध्यमाधिकारः प्रथमः ॥ १ ॥



# अथ स्पष्टाधिकारः ।

तत्रादौ तदारम्भप्रयोजनमाह ।

यस्मान्न मध्यतुल्यः प्रतिदिवसं दृश्यते ग्रहो भगणे ।
तस्माद्दृक्तुल्यकरं वक्ष्ये मध्यस्फुटीकरणम् ॥ १ ॥

भगणे भवलये । शेष स्पष्टार्थम् ॥ १ ॥

इदानीमर्धज्या आह ।

अर्धज्या मनुयमला मुनियमवेदा वसुज्वलनषट्काः ।
रसकृतवसवः शशिपञ्चखेन्दवश्चन्द्रशरसूर्याः ॥ २ ॥
षड्दधिमनवो भूताग्निरसशशाङ्का मुनीन्दुवसुचन्द्राः ।
इन्दुनवनन्दचन्द्रा रसतिथियमला रविस्त्रियमाः ॥ ३ ॥
छिद्रेषुजिनाः कृतनवपञ्चयमा नन्दचन्द्रमुनिपक्षाः ।
दन्ताष्टयमा गुणरामनवयमाः शशियमखरामाः ॥ ४ ॥
ऋतुनवखगुणा नवशरचन्द्रगुणाः सप्तशून्ययमदहनाः ।
द्विजिनगुणास्त्रिरसरदाः खसप्तयमवह्नयो व्यस्ताः ॥ ५ ॥

मनुयमला इत्याद्यर्धज्याश्चतुर्विंशतिर्वृत्तपादे सन्ति । व्यस्ता उत्क्रमज्या इत्यस्यापि संबन्धः ।

अर्धज्याः क्रमज्याश्च चतुर्विंशतिः ।

२१४ । ४२७ । ६३८ । ८४६ । १०५१ । १२५१ । १४४६ । १६३५ ।
१८१७ । १९९१ । २१५६ । २३१२ । २४५९ । २५९४ । २७१९ । २८३२ ।
२९३३ । ३०२१ । ३०९६ । ३१५९ । ३२०७ । ३२४२ । ३२६३ । ३२७० ।

इदानीमुत्क्रमज्या आह ।

मुनयोऽष्टयमास्त्रिरसा रुद्रशशाङ्काः समुद्रमुनिचन्द्राः ।
नववेदयमा मुनिगुणहुताशना वसुगुणसमुद्राः ॥ ६ ॥
भूमीन्द्रियेषवो रसनगर्तवश्चन्द्रशीतकरवसवः ।

शरवसुनन्दाः सागररुद्रशशाङ्का नवाङ्कार्काः ॥ ७ ॥
त्रिविषयवेदशशाङ्काः पञ्चाग्निरसेन्दवोऽब्धियमधृतयः ।
अतिधृतिरवयमा नवशशियमपक्षाः सागराब्धिजिनाः ॥ ८ ॥
रदरसयमला गुणवेदवसुयमाः षड्विषयशून्यगुणाः ।
खमुनिरदा व्यासार्धं नवरदचन्द्रा जिनांशज्या ॥ ९ ॥

उत्क्रमज्याश्चतुर्विंशतिश्च वृत्तपादेऽधो लिखिताः सन्ति ।

० । २८ । ६३ । १११ । १७४ । २४९ । ३३७ । ४३८ ।
५५१ । ६७६ । ८११ । ९८५ । १११४ । १२९९ । १४५३ । १६३५ ।
१८२४ । २०१९ । २२१९ । २४२४ । २६३२ । २८४३ । ३०५६ । ३२७० ।

नवरदचन्द्रा = १३२९ जिनांशानां परमक्रान्त्यंशानां ज्याऽस्यैव सततोपयोगित्वात् पठितेत्यर्थः ।

अत्रोपपत्तिः । वृत्तपादे चतुर्विंशति क्रमज्या उत्क्रमज्याश्च $\frac{९०°}{२४} = \frac{९० \times ६०'}{२४} = २२५'$ कलावृद्ध्या आचार्येण खमुनिरद ३२७० व्यासार्धे ज्योत्पत्तिविधिनाऽऽनीय पठिता इति सुगमा । तद्यथा । भास्करादीनां मते वसुपावकवेदराम ३४३८ व्यासार्धे प्रथमज्या स्वल्पान्तरात् २२५ । इय माचार्योक्तव्यासार्धेन ३२७० नेन गुणा वसुपावकवेदराम ३४३८ हृता लाताऽऽचार्योक्ता प्रथमज्या $= \frac{२२५ \times ३२७०}{३४३८} = \frac{२५ \times ३२७०}{३८२} = \frac{२५ \times १६३५}{१९१}$ $= \frac{४०८७५}{१९१} = २१४\frac{१}{१९१} = २१४$ स्वल्पान्तरात् । एवमन्याः क्रमज्या उत्क्रमज्याश्च सिध्यन्ति ।

आचार्येण किमर्थं त्रिज्या खमुनिरद ३२७० मिता गृहीता इत्यस्य मीमांसा भूमिकायां भविष्यति । एवं पठिताभिर्ज्याभिश्चतुर्विंशतिभागानां ज्या १३२९ एतावती परमक्रान्तिज्या भवतीति स्फुटा वासना ॥ ७-९ ॥

इदानीं चापात् ज्यानयनमाह ।

लिप्तास्तत्त्वयमहृता लब्धज्या ज्यान्तराहतात् शेषात् ।

**तिथिकृतिहृतात् फलयुता लब्धज्या ज्याग्रहणमेवम् ॥ १० ॥**

तिथिकृतिः शतद्वयाधिका पञ्चविंशतिः = २२५। शेषं स्फुटार्थम्।

अत्रोपपत्तिः। 'तत्त्वाश्विभक्ता असवः कला वे'त्यादि भास्करानयनेनोपपत्तिश्च स्फुटा ॥ १० ॥

इदानीं जीवातश्चापानयनमाह।

**ज्यां प्रोह्य शेषगुणितास्तत्त्वयमा ज्यान्तरोद्धृता लब्धम्।**
**क्षेप्यं विशुद्धजीवासंख्यातिथिकृतिवधे चापम् ॥ ११ ॥**

स्पष्टार्थमुपपत्तिश्च ज्यासाधनवैपरीत्येन सुगमा ॥ ११ ॥

इदानीं मन्दशीघ्रकेन्द्रे केन्द्रबाहुकोटिज्ये चाह।

**मध्याद्विशोध्य मन्दं शीघ्रात्संशोध्य मध्यमं केन्द्रम्।**
**अयुजि गतयेययोर्युजि पदेऽन्यथा बाहुकोटिज्ये ॥ १२ ॥**

अयुजि पदे गतयेययोर्गतगम्ययोर्बाहुकोटिज्ये साध्ये। अर्थात् विषमपदे गताद्भुजज्या गम्यात् कोटिज्या साध्या। युजि समे पदेऽतोऽन्यथाऽर्थात् गम्याद्भुजज्या गतात्कोटिज्या साध्या। शेषं स्पष्टार्थम्।

अत्रोपपत्तिः। 'मृदूच्चेन हीनो ग्रहो मन्दकेन्द्र'मित्यादि भास्करोक्तविधिना स्फुटा ॥ १२ ॥

इदानीं स्पष्टपरिध्यानयनमाह।

**त्रिज्याहृता भुजज्या युगयुक्परिधिद्वयान्तरगुणाप्त्या।**
**युग्मान्तपरिधिरधिको हीने हीनोऽधिके स्पष्टः ॥ १३ ॥**

भुजज्या केन्द्रज्या युगयुक्परिधिद्वयान्तरेण युग्मान्तौजान्तपरिध्योरन्तरेण गुणा त्रिज्याहृता। आप्त्या लब्ध्या युग्मान्तपरिधिरधिकः कार्यो यद्योजान्तपरिधेर्युग्मान्तपरिधिस्त्वो भवेदधिके च लब्ध्या हीनः कार्यस्तदा स्पष्टः परिधिर्भवेत्।

अत्रोपपत्तिः। त्रिज्यातुल्यया केन्द्रभुजज्यया यदि युग्मान्तौजपरिध्यन्तरं लभ्यते तदेष्टकेन्द्रज्यया किं लब्धं परिध्यन्तरस्य चयापचयवशात्

धनर्णमित्यादिवासना सुगमा ॥ १३ ॥

इदानीं भुजकोटिफले स्पष्टां कोटिं चाह ।

**तद्गुणिते ज्ये भांशैर्हृते फले कोटिफलयुता त्रिज्या ।**
**आद्यन्तयोर्विहीना पदयोर्द्वितृतीययोः कोटिः ॥ १४ ॥**

ज्ये भुजकोटिज्ये तेन स्पष्टपरिधिना गुणिते भांशै ३६० र्हृते फले भुजकोटिफले भवतः । त्रिज्याऽऽद्यन्तयोः पदयोरर्थात् मृगादिकेन्द्रे कोटिफलेन युता कार्या । द्वितृतीययोः पदयोरर्थात् कर्क्यादिकेन्द्रे त्रिज्या कोटिफलेन विहीना कार्या तदा कोटिः स्पष्टा कोटिर्भवतीत्यर्थः ।

अत्रोपपत्तिः । 'स्वेनाहते परिधिना भुजकोटिजीवे' तथा 'त्रिज्या तथा कोटिफलेन युक्ता' इत्यादि भास्करोक्तेन विधिना स्फुटा ॥ १४ ॥

इदानीं कर्णानयन प्रकारान्तरेण भुजफलानयनं चाह ।

**तद्भुजफलकृतियोगात् मूलं कर्णः पदेष्वयुग्युग्मु ।**
**स्वपरिधिगुणा क्रमोत्क्रमजीवा भांशैर्हृता मन्दे ॥ १५ ॥**

तस्याः स्फुटकोटेर्भुजफलस्य च कृत्योर्योगात् मूलं कर्णो भवेत् । अयुक्पदे क्रमज्या केन्द्रक्रमज्या स्वपरिधिगुणा युग्मपदे केन्द्रोत्क्रमज्या स्वपरिधिगुणा भपक्ष भांशै३६०र्हृता, मन्दे इत्यस्यापि संबन्धः । एवमुत्क्रमज्यातो यत्फलं तत्परमे भुजफले हीनं कार्यमित्यध्याहार्यम् ।

अत्रोपपत्तिः । कर्णानयने भास्करोक्तैव । प्रथमपदे गतांशानां क्रमज्या स्वपरिधिगुणा भांशहृता पूर्वप्रकारेण भुजफलं स्फुटमेव । द्वितीयपदे गम्यांशानां क्रमज्या गतोत्क्रमज्योनत्रिज्यासमा सा परिधिगुणा भांशहृता जातं भुजफलम् $=$ $\frac{\text{परि (त्रि–उत्क्रमज्या)}}{\text{भांश}}$

$=$ परमभुजफल $-$ $\frac{\text{परि × उत्क्रमज्या}}{\text{भांश}}$ । एवं युग्मपदे उत्क्रमज्यातो यत्फलं तेन परमं भुजफलं हीनं तदा वास्तवं भुजफलम् । एवं क्रमेण चतुर्ष्वपि पदेषु भुजफलम् ।

प्रथमपदे

$\frac{\text{क्रमज्या}\cdot\text{प}}{\text{भाग}}$, पदान्ते परमं भुजफलम्

द्वितीयपदे

परमं भुजफलम् $- \frac{\text{उत्क्रमज्या}\cdot\text{प}}{\text{भाग}}$

पदान्ते शून्यं भुजफलम् ।

तृतीयपदे

$\frac{\text{क्रमज्या}\cdot\text{प}}{\text{भाग}}$, पदान्ते परमं भुजफलम्

चतुर्थपदे

परमं भुजफलम् $- \frac{\text{उत्क्रमज्या}\cdot\text{प}}{\text{भाग}}$

पदान्ते शून्यं भुजफलम् ।

अत्रोत्क्रमज्यागतं फलं परमे भुजफले ऋणं कार्यमित्याध्याहारश्चतुर्वेदाचार्यमतः । वस्तुत आचार्यसूत्रतो नायमर्थ उत्पद्यते ॥ १५ ॥

इदानीं पूर्वागतफलस्य क्षयत्वे धनत्वे ततो भुजफलं च संस्कारेणाह ।

**क्षयधनधनक्षयास्तत्फलानि शीघ्रेऽन्यथा धनं धनयोः ।**
**ऋणमृणयोर्योगोऽन्तरमृणधनयोस्तुल्ययोः शून्यम् ॥ १६ ॥**

पूर्वागतफलानि मन्दे मन्दकर्मणि पदक्रमेण क्षय-धन-धन-क्षया भवन्ति । शीघ्रे शीघ्रकर्मणि चान्यथाऽर्थात् पदक्रमेण धनक्षयक्षयधनानि भवन्ति । ततो धनयोर्योगो धनमृणयोर्योगश्च ऋणं तथा ऋणधनयोरन्तरं च संस्कारवशतो धनर्णं भुजफलं भवति । धनर्णयोस्तुल्ययोर्वशात् शून्यमेव भुजफलमित्यर्थतः सिध्यति ।

अत्रोपपत्तिः । प्रथमद्वितीयपदयोर्मेषादिकेन्द्रम् । तृतीयचतुर्थपदयोश्च तुलादिकेन्द्रम् । मेषादिकेन्द्रे मन्दकर्मणि भुजफलचापसमं मन्दफलमृणं तुलादिकेन्द्रे च धनम् । अतः प्रथमे पदे भुजफलमृणं द्वितीये च ऋणम् । एवं तृतीयचतुर्थपदयोर्भुजफलं धनं यतस्तस्मादुक्तमन्दफलमुत्पद्यते ।

द्वितीयपदे भुजफलं पूर्वागतम् = परमभुजफ $- \frac{\text{प}\cdot\text{उत्क्रमज्या}}{\text{भाग}}$ धनर्णव्यत्यासेन भुजफलम् = − परमभुजफ $+ \frac{\text{प}\cdot\text{उत्क्रमज्या}}{\text{भाग}}$ । एवं चतुर्थपदे पूर्वागतं भुजफलं धनम् = परमभुजफ $- \frac{\text{प}\cdot\text{उत्क्रमज्या}}{\text{भाग}}$ । प्रथमे पदे ऋणं तृतीये धनं मेषतुलादिकेन्द्रत्वात् प्रसिद्धमेव । एवं पदक्रमेण फलानि मन्दे क्षयधन-

धनक्षयाख्यानि भवन्ति । शीघ्रे च व्यस्तशोधनेन केन्द्रं साधितमतस्तत्र मेषादिकेन्द्रे धनं तुलादिकेन्द्रे ऋणं फलं भवति । अतस्तत्रान्यथा भुजफलं साधितम् ॥ १६ ॥

इदानीं मन्दफलं शीघ्रफलं चाह ।

**तच्चापं मन्दफलं फलयोगान्तरवशात् धनमृणं वा ।**
**शीघ्रफलं तद्गुणिताद्व्यासार्धात् कर्णलब्धधनुः ॥ १७ ॥**

तस्य मन्ददोःफलस्य चापं मन्दफलं पूर्वसाधितयोः फलयोर्योगान्तरवशात् धनं वा ऋणं भवति । व्यासार्धात् तेन पूर्वागतेन शीघ्रभुजफलेन गुणितात् शीघ्रकर्णेन तस्माद्यल्लब्धं तस्य धनुः शीघ्रफलं भवति ।

अत्रोपपत्तिः । भास्करमन्दशीघ्रफलसाधनविधिना स्फुटा ॥ १७ ॥

इदानीं स्फुटौ रविचन्द्रावाह ।

**देशान्तरे खमध्ये भुजफलचापे भुजान्तरे च कृते ।**
**उन्मण्डलेऽर्कचन्द्रौ स्पष्टौ रविचरदले क्षितिजे ॥ १८ ॥**

यदि खमध्ये स्पष्टमध्याह्ने स्फुटौ रविचन्द्रावपेक्षितौ तदा मध्ये रवौ चन्द्रे वा भुजफलचापे मन्दफले भुजान्तरे देशान्तरे च संस्कृते सति रविचन्द्रौ स्फुटौ भवतः । एवमुन्मण्डले स्वनिरक्षक्षितिजे च फलत्रयसंस्कारेण स्फुटौ रविचन्द्रौ भवतस्तत्र रविचरदले रविचरार्धफले च संस्कृते स्वक्षितिजे रविचन्द्रौ स्फुटौ स्तः । अर्कोदयास्तमययोरित्यग्रिमश्लोकेन सम्बन्ध इति ।

अत्रोपपत्तिः । भास्करविधिना स्फुटा ॥ १८ ॥

इदानीं चरार्धसंस्कारे विशेषमार्यभटदूषणं चाह ।

**अर्कोदयास्तमययोर्विना चरार्धेन रात्रिदिनदलयोः ।**
**न स्फुटमार्यभटोक्तं स्पष्टीकरणं स्फुटोक्तिरतः ॥ १९ ॥**

रात्रिदिनदलयोरर्धरात्रे दिनार्धे च चरार्धेन विना विना चरसंस्कारेण स्फुटौ रविचन्द्रौ भवतः ।

आर्यभटोक्त स्पष्टीकरणं न स्फुटमतः स्फुटोक्ति स्फुटीकरणस्यो क्तिः कथन युक्ताऽस्ति—इत्यस्मस्फुटीकरणारम्भे कारणं कथयति ब्रह्म गुप्त इति ।

अत्रोपपत्तिः । गोलयुक्त्या स्वदेशनिरतयो रात्र्यर्धे दिनार्धे च युग-पदेव भवति । अतस्तत्र चरसंस्काराभाव इति स्फुटं गोलविदामिति ॥ १९ ॥

इदानीं स्पष्टीकरणार्थं रविचन्द्रयोर्मन्दपरिधिभागानाह ।

**सूर्यस्य मनुद्वितयं त्र्यंशोनं दिनदले नतस्य प्राक् ।**
**तिथिघटिकाभिस्त्र्यंशाधिकोनमूनाधिकं पश्चात् ॥ २० ॥**
**द्युदले जिनलिप्तोनं दशनद्वितयं द्विशरकलोनं प्राक् ।**
**पश्चात् युतोनमिन्दोः सूर्य इव ऋणे धने परिधिः ॥ २१ ॥**

ऋणे वा धने मन्दफले सूर्यस्य द्विनदले मनुद्वितय त्र्यशोन कार्यम् । अर्थात् चतुर्दश भागा द्विधोभयत्र भागत्र्यशेन हीनास्तदा ते ऋणे वा धने मन्दफले मध्याह्ने मन्दपरिधिभागा भवन्ति । ऋणे धने च फले मध्याह्नत. प्राक् पञ्चदशघटिकाभिर्नतस्य रवेर्दिनदलपरिधिमान यथासंख्य त्र्यशा-धिकोन कार्यम् । पश्चिमे कपाले च पञ्चदशभिर्घटिकाभिर्नतस्य रवेर्ऋणे धने च फले तद्दिनदलपरिधिमानं यथासंख्य भागत्र्यशेनोनाधिक कार्य-म् । एव प्राक् पश्चादुन्मण्डलस्थे रवौ तस्य मन्दपरिधिभागा भवन्ति । एव चन्द्रस्य ऋणे धने च फले दशनद्वितय जिनलिप्तोन तदा द्युदले मन्दपरिधिभागा भवन्ति । सूर्य इव प्राक् पश्चात् पञ्चदशघटिकाभि र्नते विधौ ऋणे च फले तद्दिनदलपरिधिमान द्विशरकलोनम् । धने फले ताभिर्घटिकाभिः प्राक् पश्चान्नते विधौ तद्दिनदलपरिधिमान द्विशरक लाभि. क्रमेण युतोन तदा प्राक् पश्चादुन्मण्डलस्थे विधौतस्य मन्दप रिधिभागा भवन्ति ।

| एवं रवेर्ऋणफले | | धने मन्दफले | |
|---|---|---|---|
| प्रागुन्मण्डलस्थे रवौ | = १४° । ०′ | प्रागुन्मण्डलस्थे रवौ | = १३° । २०′ |
| मध्याह्ने | = १३ । ४० | मध्याह्ने | = १३ । ४० |
| पश्चिमोन्मण्डलस्थे रवौ | = १३ । २० | पश्चिमोन्मण्डलस्थे | = १४ । ० |

| चन्द्रस्य ऋणफले | | धने फले | |
|---|---|---|---|
| प्रागुन्मण्डलस्थे विधौ | = ३०° । ४४′ | प्रागुन्मण्डलस्थे विधौ | = ३०° । ४४′ |
| मध्याह्ने | = ३१ । ३६ | मध्याह्ने | = ३१ । ३६ |
| पश्चिमोन्मण्डलस्थे | = ३२ । २८ | पश्चिमोन्मण्डलस्थे | = ३० । ४४ |

अत्र भास्कराचार्यः । 'चतुर्वेदाचार्येणाप्युपलब्धिरेव वासनेत्यभिहितम् । यदीदृश्युपलब्धिरस्ति तदाऽस्माभिः किं नाङ्गीकर्त्तव्यमिति भावः ॥ २१ ॥

इदानीमभीष्टे नते स्फुटपरिध्यानयनमाह ।

**तद्द्युदलपरिध्यन्तरगुणा हृता त्रिज्यया च नतजीवा ।**
**ऊने धनमृणमधिके दिनार्धपरिधौ स्फुटः परिधिः ॥ २२ ॥**

स्पष्टार्थमुपपत्तिश्च त्रैराशिकेन स्फुटा । 'सिध्यन्तनाडीनतकाद्गुणोत्था लब्ध्यार्कशीतांशुफले विनिघ्ने' इति भास्करोक्तं द्रष्टव्यं स्पष्टाधिकारे ॥ २२ ॥

इदानीं मन्दफलस्य धनर्णत्वमाह ।

**भुजफलचापं केन्द्रे षड्भाश्यूने रवावृणं मध्ये ।**
**स्वभुजफलचापमेवं षड्भाश्यधिके धनं भवति ॥ २३ ॥**

षड्भाश्यूने केन्द्रे मेषादिकेन्द्रे षड्भाश्यधिके तुलादिकेन्द्रे मध्ये रवौ भुजफलचापं मन्दफलं क्रमेण ऋणं धनं कार्यमिति ।

अत्रोपपत्तिः । 'तुलाजादिकेन्द्रे फलं स्वर्णमेवं मृदु ज्ञेयं' मित्यादि भास्करोक्त्या स्फुटा ॥ २३ ॥

इदानीं रविचन्द्रस्फुटीकरणे विशेषमाह ।

**देशान्तराद्यमेवं स्पष्टीकरणं दिनार्धपरिधिभ्याम् ।**
**कृत्वा तत्सिध्यन्तस्फुटपरिधिभ्यां स्फुटावसकृत् ॥२४॥**

एवं पूर्वोक्तं रविचन्द्रयोर्दिनार्धपरिधिभ्यां देशान्तराद्यं स्पष्टीकरणं कृत्वा स्फुटाभ्यां रविचन्द्राभ्यां यद्वा सिध्यन्तं साधयेत् । ततस्तत्सिध्यन्तकालिकाभ्यां रविचन्द्रयोः स्फुटपरिधिभ्यां पुनः स्पष्टौ रवि

चन्द्रौ कार्यौ ताभ्यां पुनस्तिथ्यन्तस्ततः पुनः स्फुटपरिधिभ्यां स्फुटौ रविचन्द्रौ। एवमसकृत् स्फुटौ रविचन्द्रौ ग्रहणोपयोगिनौ भवत इति भास्करोक्त आचार्याभिप्रायः स्फुटः।

श्रीब्रह्मगुप्तोक्तं नतकर्म सकृद्विधिनैव यथा स्यात् तथाऽत्र प्रदर्श्यते। कल्प्यते गणितागततिथ्यन्तकालस्यासकृत्साधितनतकर्मसंस्कृतरविचन्द्रोत्पन्नतिथ्यन्तकालस्य चान्तरगता घट्यः = या। तत्सम्बन्धिनोंऽशाः = ६ या। गणितागततिथ्यन्तकाले रवेर्नतकालांशाः = न। अनयोः संस्कारो वास्तवनतकालांशाः = न ± ६ या। यदि षष्ट्या घटीभिर्गत्यन्तरकला लभ्यन्ते तदा 'या' घटीभिः का इति जाता 'या' घटीषु रविचन्द्रयोरन्तरकलाः $= \frac{(\text{चगक} - \text{रगक})\,\text{या}}{\text{६०}} = \text{ग}\cdot\text{या}$। $\left(\text{अत्र ग} = \text{गत्यन्तरम्} = \frac{\text{चगक} - \text{रगक}}{\text{६०}}\right)$

अथ 'तिथ्यन्तनाडीनतबाहुमौर्व्या' इत्यादि भास्करोक्तविधिना वास्तवं नतकर्म सूर्यस्य $= \frac{\text{रफ}\cdot\text{ज्या}\,(\text{न} \pm \text{६या})}{\text{४९२०}} = \text{रफ}'\cdot\text{ज्या}\,(\text{न} \pm \text{६या})$

चन्द्रस्य $= \frac{\text{चफ}\cdot\text{ज्या}\,(\text{न} \pm \text{६या})}{\text{४३७५}} = \text{चफ}'\,\text{ज्या}\,(\text{न} \pm \text{६या})$।

विधिना उज्या६या = $\frac{२१^{२} \times ३^{२} या^{२}}{१०^{२} \times ६०}$ ॥ अथ 'चापयोरिष्टयोर्दोर्ज्ये' इत्यादिना ज्या (न ± ६या) = $\frac{\text{ज्यान कोज्या६या}}{\text{त्रि}} \pm \frac{\text{कोज्यान. ज्या६या}}{\text{त्रि}}$

$$= \text{ज्यान} - \frac{\text{ज्यान· उज्या६या}}{\text{त्रि}} \pm \frac{\text{कोज्यान ज्या६या}}{\text{त्रि}}$$

$$= \text{ज्यान} - \frac{\text{ज्यान}\cdot २१^{२} \times ३^{२} या^{२}}{१०^{२} \times ६० \times १२०} \pm \frac{\text{कोज्यान } २१ \times ६या}{१० \times १२०}$$

$$= \text{ज्यान} - \frac{\text{ज्यान या}^{२}}{\left(\frac{२००}{२१}\right)^{२} \times २} \pm \frac{\text{कोज्यान या}}{\frac{२००}{२१}}$$

$$= \text{ज्यान} - \frac{\text{ज्यान या}^{२}}{२ \text{हा}^{२}} \pm \frac{\text{कोज्यान या}}{\text{हा}} \quad \left(\text{अत्र हा} = \text{हरः} = \frac{२००}{२१}\right)$$

पूर्वरीत्या, $प = \frac{\text{ज्या}(न \pm ६या)}{या} = \frac{\text{ज्यान}}{या} - \frac{\text{ज्यान या}}{२\text{हा}^{२}} \pm \frac{\text{कोज्यान}}{\text{हा}}$ ।

उभयत्र हरेण गुणनात् । ध्रु = ध्रुवः = परः × हरः = $\frac{\text{ज्यान हा}}{या} - \frac{\text{ज्यान या}}{२ \text{हा}}$ ± कोज्यान । समशोधनेन ज्यान-भक्तेन च । ± च = चपरः = $\frac{\text{ध्रु} \mp \text{कोज्यान}}{\text{ज्यान}} = \frac{\text{हा}}{या} - \frac{या}{२ \text{हा}}$ । छेदगमेन । २ हा$^{२}$ − या$^{२}$ = ± २ च हा·या । समशोधनेन । या$^{२}$ ± २ च हा·या = २ हा$^{२}$ । वर्गपूरणेन, या$^{२}$ ± २ च·हा या + च$^{२}$ हा$^{२}$

= च$^{२}$ हा$^{२}$ + २ हा$^{२}$ = हा$^{२}$ (च$^{२}$ + २) । मूलग्रहणेन या ± च·हा = हा $\sqrt{च^{२} + २}$ । अतः या = हा ($\sqrt{च^{२} + २}$ ∓ च) एतेन—

गत्यन्तरकला. षष्टिभक्ता गत्यन्तरं भवेत् ।
फललिप्ताः स्वहाराप्ता रवीन्द्वोश्च फलं क्रमात् ॥

गत्यन्तरं फलवियोगहृतं विधोः प्राक्
स्वे तत्फलेऽन्यसमये युतिहृत् पराख्यम् ।
बाणाश्विनो विधुकरैर्विहृता हरस्त-
स्मिन् परेण भवति ध्रुवसंज्ञकं तत् ॥

स्वीयध्रुवो नतजकोटिगुणेन हीनो
मौर्व्या नतासुभवया विहृतोऽपरोऽस्य ।
वर्गात् पदं करयुतादपरोनितं त-
द्धाराघ्नमेवमिह दण्डमुखं विधोः प्राक् ॥
स्वे फले रविफलात् स्वफलस्य बाल्ये
हीनान्यथा च सहितेष्टफलेन नूनम् ।
तिथ्यन्तदण्डमितिरत्र भवेत् स्फुटा सा
प्राक् चेद्विधोर्धनफलाल्पमथात्र सौरम् ॥
तर्हि ध्रुवात् स्वनतकोटिगुणाद्विहान्यः
साध्यो विदा गणितगोलविदा मुदैव ।
कोऽप्यत्रगुप्तनतकर्म भवेत् सुपुष्ट-
मेवं सकृत् सकलसज्जनरञ्जनार्थम् ॥

इति मदुक्तमुपपद्यते । अत्र विधोः प्रागित्यादिभिर्यो विशेषोऽभिहितस्तस्योपपत्तिर्धनर्णगणितेनोह्या । इति ॥

इदानीं ग्रहणे रविचन्द्रयोर्नतकालमाह ।

**प्राक् पश्चाद्वा याभिर्घटिकाभिर्दिनदलान्नतः सूर्यः ।**
**तिथ्यन्ते तद्विहितं त्रिंशद्घटिकावशेषाभिः ॥ २५ ॥**
**विपरीतमर्धरात्रात् चन्द्रग्रहणे शशी रविग्रहणे ।**
**सूर्यो यतो नतस्ताभिरेव घटिकाभिरिन्दुरपि ॥ २६ ॥**

चन्द्रग्रहणे तिथ्यन्ते पूर्णान्तसमये प्राक् वा पश्चाद्याभिर्घटिकाभिर्दिनदलात् दिनार्धतो नतो रविर्भवति तत् सूर्यस्य नतकालमानं विहितं भवति । ताभिर्घटिकाभिः किंविशिष्टाभिस्त्रिंशद्घटिकावशेषाभिर्विपरीतमर्धरात्रात् शशी नतो भवति । अर्थात्तिथ्यन्ते याभिर्घटिकाभी रविर्नतस्ताभ्यस्त्रिंशद्घटिका विशोध्य शेषं शशिनोऽर्धरात्राद्विपरीतं नतं यदि रवेः प्राक् तदा शशिनः पश्चाद्यदि रवेः पश्चात्तदा शशिनः प्राक् नतमर्धरात्राद्भवतीति । रविग्रहणे यतो याभिर्घटिकाभिः सूर्यो नतस्ताभिरेव घटिकाभिस्तस्मिन्नेव कपाले चन्द्रोऽपि नत इत्यर्थः ।

अत्रोपपत्तिः । चन्द्रग्रहणे पूर्णान्ते रविचन्द्रौ षड्भान्तरिताव्रत ऊर्ध्वयाम्योत्तरवृत्ताद्याभिर्घटिकाभी रविर्नतस्त्रिंशता रहिताभिस्ताभि र्विपरीतकपाले शशी नतो भवति । रविग्रहे तु यैरेकराश्याद्यवयवगतत्वादेककपाले समा एव नतघटिका इति सर्वं सिद्धान्तविदा स्फुटमेव ॥ २५–२६ ॥

इदानीं नतकर्माह ।

**दिनदलपरिधिस्फुटतिथि-**
**नतकेन्द्रज्यावधो गुणोऽर्केन्द्वोः ।**
**इन्द्रतिधृति१९१भिर्नवनव-**
**वेदै४९९र्व्यासार्धकृति१०६९२९००भक्तः ॥ २७ ॥**
**फलविकला वा सूर्ये प्राग्णमसकृन्नते धनं पश्चात् ।**
**केन्द्रफलमृणं चन्द्रेऽन्यथा धनं प्राग्णे स्पष्टौ ॥ २८ ॥**

दिनदलपरिधिभ्यां यौ स्फुटौ रविचन्द्रौ ताभ्यां या तिथिस्ति थ्यन्तस्तत्र यो नतो नतकालस्तस्य केन्द्रस्य च ज्ययोर्वधः कार्यः । स यदि रवेस्तर्हि त्रिधृतबभूमिभि१९१र्गुणितश्चन्द्रस्य चेत्तदा नवनववेदै४९९र्गुणि तः । उभयत्र त्रिज्यावर्ग १०६९२९०० भक्तः फल विकला भवन्ति । प्राक् नते सूर्ये तत्फलमृणं पश्चान्नते च धन कार्यम् । चन्द्रे तत्केन्द्रफल पूर्वा-गत विकलात्मक प्राक् कपाले ऋणं मन्दफले धन कार्यमन्यथा प्राक् वा पश्चिमे ऋणमेव विधेयमेवमसकृत्तदा स्फुटौ रविचन्द्रौ वा भवतः । 'तद्द्युदलपरिध्यन्तरगुणा' इत्यादिना पूर्वं नतकर्मानीतमिदानीं पुनः साधितमतो 'वा' शब्दप्रयोगो युक्तः ।

अत्रोपपत्तिः । पूर्वप्रकारेण दिनार्धपरिधिना मन्दफलकला रवेः $= \frac{२२५ \text{ द्विप} \times \text{ज्याकें}}{२१४ \times \text{भाग}}$ । एतद्विकलाः $= \frac{६० \times २२५ \times \text{द्विप} \times \text{ज्याकें}}{२१४ \times \text{भाग}}$ । रवेः परि-ध्यन्तरम् $= \frac{१}{१} \times \frac{\text{ज्यान}}{\text{त्रि}}$ । ततोऽनुपातो यदि दिनार्धपरिधिना पूर्वागता मन्दफलविकलास्तदाऽऽनीतेन परिध्यन्तरेण किं जाताः परिध्यन्तरसंब-

न्धिन्यः फलविकला रवेः

$$= \frac{\text{६०} \times \text{२२५} \times \text{दिप} \times \text{ज्याकें} \times \text{ज्यान}}{\text{३} \times \text{२१४} \times \text{भांश} \times \text{त्रि} \times \text{दिप}} = \frac{\text{२०} \times \text{२२५} \times \text{ज्याकें} \times \text{ज्यान} \times \text{त्रि}}{\text{२१४} \times \text{३६०} \times \text{त्रि}^{2}}$$

$$= \frac{\text{२२५} \times \text{३२७०} \times \text{ज्याकें} \times \text{ज्यान}}{\text{१८} \times \text{२१४} \times \text{त्रि}^{2}} = \frac{\text{२५} \times \text{१६३५}}{\text{२१४}} \times \frac{\text{ज्याकें}\cdot\text{ज्यान}}{\text{त्रि}^{2}}$$

$$= \frac{\text{४०८७५}}{\text{२१४}} \times \frac{\text{ज्याकें ज्यान}}{\text{त्रि}^{2}} = \frac{\text{१९१ ज्याकें ज्यान}}{\text{त्रि}^{2}}$$

। एवं चन्द्रपरिध्यन्तरेण चन्द्रगुणक उत्पद्यते । धनर्णवासना भास्करविधिना स्फुटा ॥ २७–२८ ॥

इदानीं भुजान्तरं स्फुटभुक्तिं चाह ।

**अर्कफलभुक्तिघाताद्भगणकलाप्तं भुजान्तरं रविवत् ।**
**स्फुटभुक्तिरतीतैष्यग्रहान्तरं वर्त्तमानेऽह्नि ॥ २९ ॥**

भगणकला अहोरात्रासवः । अतीतैष्यग्रहान्तरं दिनान्तरस्पष्टग्रहान्तरं वर्त्तमाने दिवसे स्फुटभुक्तिर्भवति । अर्थादद्यतनश्वस्तनस्फुटग्रहयोरन्तरमेव तत्समयान्तराले स्फुटगतिर्भवतीति । शेषं स्पष्टार्थम् ।

अत्रोपपत्तिः । आचार्येण स्वल्पान्तरादर्कफलकलासमा एव भास्वत्फलोत्थासवः स्वीकृतास्ततोऽनुपातेन वासना सुगमा । 'मध्यमार्कोदयात् प्राक् स्फुटार्कोदयः स्याद्दृणे तत्फले' इत्यादिभास्करविधिना धनर्णवासना 'दिनान्तरस्पष्टखगान्तरं स्याद् गतिः स्फुटा तत्समयान्तराले' इत्यादिभास्करोक्तेरेव स्फुटगतिवासना च सुगमेति ॥ २९ ॥

इदानीं नतवशेन रविचन्द्रयोर्गतिफलमाह ।

**क्षयधनहानिधनानि प्राक् पश्चादन्यथा रवेरिन्दोः ।**
**प्राग्वत् पश्चात् स्वगतौ धनक्षयक्षयधनानि प्राक् ॥ ३० ॥**

'दिनदलपरिधिस्फुटतिथिनते'त्यादिनाऽद्यतनश्वस्तनफलविकलानां यदन्तरं तानि विकलात्मकान्यन्तराणि प्राक्कपाले रवेः केन्द्रवशेन क्षयधनहानिधनानि भवन्ति स्वगतौ पूर्वसाधितरविमन्दस्फुटगतौ । पश्चात् कपाले चान्यथाऽर्थात् धनक्षयधनक्षयात्मकानि भवन्ति । इन्दोः पश्चात् कपाले प्राग्वत् । अर्थात् क्षयधनहानिधनानि भवन्ति ।

प्राक्कपाले च तान्येव धनक्षयचयधनानि भवन्ति चन्द्रमन्दफलस्यता-श्चित्यर्थः ।

अत्रोपपत्तिः । प्रथमपदे केन्द्रज्योपचीयते द्वितीये चापचीयते । एवं तृतीये पदे केन्द्रज्योपचीयते चतुर्थे चापचीयते । रवेः प्राक्कपाले नतकर्म ऋणं पश्चिमे च धनं भवति । अतः प्रथमपदे ऋणफलस्योपच-याच्चतकर्मान्तरमृणं द्वितीये ऋणफलस्यापचयाच्चतकर्मान्तरं धनं तृतीये पुनरपि ऋणफलस्योपचयाच्चतकर्म ऋणं चतुर्थे च ऋणफलस्यापचयाद्धु-नम् । पश्चिमकपाले नतकर्मणो धनत्वादन्यथा विपरीतं स्फुटमेव । चन्द्रस्य पश्चिमकपाले ऋणे धने च मन्दफले सर्वदा ऋणमेव नतकर्म । अतः क्षयधनहानिधनानि केन्द्रपदवशात् फलान्युत्पद्यन्ते । प्राक्कपाले प्रथमपदे ऋणमन्दफले नतकर्मणो धनत्वात् केन्द्रज्याया उपचयत्वाच्च नतकर्मान्तरं धनं भवति । द्वितीये पदे केन्द्रज्याया अपचयत्वात् नतक-र्मान्तरमृणं तृतीये पदे मन्दफलं धनं नतकर्म ऋणं भवति केन्द्रज्याया श्चोपचयेऽतो नतकर्मान्तरमृणम् । चतुर्थे केन्द्रज्याया अपचयत्वान्नतकर्म-णश्च क्षयत्वान्नतकर्मान्तरं धनं भवतीति सर्वं निरवद्यम् । दिनान्तरस्थग्र-हगान्तरं स्फुटा गतिरिति नियमात् द्वितीयदिनेऽपि गतदिननतकालसम-एव नतकालस्तेन केन्द्रज्याया एवोपचयापचयवशान्नतकर्मान्तरफलाद्गती-यगतिफलस्य धनर्णत्व मनुचितमेवेति स्फुटं सिद्धान्तविदाम् ॥ ३० ॥

इदानीमात्मप्रशंसामाह ।

**अस्मोक्तमध्यरविशशितदुच्चतत्परिधिभिः स्फुटीकरणम् ।**
**कृत्वैवं स्पष्टतिथिर्दूरभ्रष्टान्यतन्त्रोक्तैः ॥ ३१ ॥**

एवं इस्मोक्तमध्यरविशशितदुच्चतत्परिधिभिः स्फुटीकरणं कृत्वा स्पष्टतिथिः साध्या । यतोऽन्येषामार्यभटादीनां तन्त्रेषु च उक्ता मध्यर-विशशिपरिध्यादयस्ते. स्पष्टतिथिर्दूरभ्रष्टा भवति—इति स्फुटोऽर्थः ॥ ३१ ॥

इदानीं व्यवहारोपयोगि रविचन्द्रयोः स्फुटीकरणमाह ।

**स्वदिनार्धपरिधिभुजफलचापं मध्यार्कचन्द्रयोः कृत्वा ।**

पूर्ववदन्यत् स्पष्टं संव्यवहारार्थमेवं वा ॥ ३२ ॥

स्वदिनार्धपरिधिना यद्भुजफलचापं मन्दफलं तदेव मध्यार्कचन्द्रयोः कृत्वा संस्कृत्य अन्यद्देशान्तरादि पूर्ववत् कृत्वा संव्यवहारार्थमेव वा स्पष्टं स्पष्टीकरणं कार्यम् । ब्रह्मगुप्तेनेदं स्पष्टीकरणं नतकर्मसंस्कारमन्तरा व्यवहारार्थं स्थूलं प्रतिपादितमिति स्फुटमेव परन्तु भास्करेणेदं स्थूलमेव रविचन्द्रयोः स्पष्टीकरणं सूक्ष्मत्वेन सर्वकर्मार्हमङ्गीकृतम् । केवलं रविचन्द्रग्रहणयोरेव नतकर्मसंस्कार आनीतः । वाग्बलादेव 'मुहुः स्फुटातो ग्रहणे रवीन्द्वोस्तिथिस्त्विदं जिष्णुसुतो जगाद' इति भास्करेण ब्रह्मगुप्तमतमन्यथा प्रतिपादितमिति सुधीभिर्भृशं विचिन्त्यम् ॥ ३२ ॥

इदानीं भौमादिस्पष्टीकरणे कारणमाह ।

आर्यभटस्याज्ञानान्मध्यममन्दोच्चशीघ्रपरिधीनाम् ।
न स्पष्टा भौमाद्याः स्पष्टा ब्रह्मोक्तमध्योच्चैः ॥ ३३ ॥

स्पष्टार्थम् ॥ ३३ ॥

इदानीं भौमादीनां मन्दशीघ्रपरिधिभागान् स्फुटीकरणं चाह ।

मन्दोच्चनीचवृत्त-
स्य परिधिभागाः सितस्य विषमान्ते ।
नव ९ युग्मान्ते रुद्राः ११
शीघ्रोजान्तेऽग्निरसयमलाः २६३ ॥ ३४ ॥

युग्मान्तेऽष्टशरयमा २५८मन्दफलान्मध्यमः स्फुटो मध्यः ।
शीघ्रफलात् स्पष्टोऽसकृदेवं स्वफलैर्ज्ञगुरुसौराः ॥ ३५ ॥

बुधमन्दपरिधिभागा
वसुरामाः ३८ सुरगुरोस्त्रयस्त्रिंशत् ३३ ।
रविजस्य शून्यरामा ३०
ज्ञशीघ्रपरिधिर्द्विगुणचन्द्राः १३२ ॥ ३६ ॥

देवगुरोरष्टरसा ६८ भास्करपुत्रस्य शरगुणाः ३५ स्पष्टाः ।
कुजशीघ्रकेन्द्रपदगतयेयाल्पज्या त्रिभागोनैः ॥ ३७ ॥

सप्तभिरंशैर्गुणिता ६ । ४० दला*द्व्यराशिज्ययाप्तांशैः ।
अधिकोनः कुजमन्दो मृगकर्क्यादौ स्फुटो भवति ॥ ३८ ॥
ततः†स्फुटपरिधिः खनगाः ७०
शीघ्रस्फुटपरिधिरात्तभागोनाः ।
वेदजिनाद्र्यंशोनाः २४३ । ४०
स्पष्टीकरणं कुजस्यैवम् ॥ ३९ ॥
मन्दफलं मध्येऽर्धं तच्छीघ्रफलस्य मध्यमे सकले ।
मध्येऽसकृत् क्षितिसुतः स्पष्टो भुक्तिः स्फुटा ग्रहवत् ॥ ४० ॥

शुक्रस्य मन्दनीचोच्चवृत्तस्य परिधिभागा विषमान्ते श्रोजान्ते नव ९। युग्मान्ते रुद्रा एकादश ११। शीघ्रपरिधिभागा श्रोजान्ते २६३ युग्मान्ते २५८। मन्दफलान्मध्यमः संस्कृतः स्फुटो मध्यो मन्दस्पष्टो भवति। शीघ्रफलात् मन्दस्पष्टः संस्कृतः स्पष्टोऽसकृत्। अर्थात् स्पष्टग्रहात् पुनर्मन्दफलमानीय तत्संस्कृतो मध्यो मन्दस्पष्टः साध्यस्तस्मान्मन्दस्पष्टात्पुनः शीघ्रफलं विधाय तत्संस्कृतो मन्दस्पष्टः स्पष्टग्रहो भवति। पुनरस्मात् स्पष्टग्रहात् पूर्ववन्मन्दस्पष्टस्पष्टौ साध्यौ यावदविशेष इति। एवं बुधगुरुशनयः स्फुटा भवन्ति शुक्रश्चैवमित्यर्थेन एव सिध्यति। बुधमन्दपरिधिभागाः ३८। गुरोः ३३। शनेः ३०। एते श्रोजान्ते युग्मान्ते च। अर्थाद्बुधगुरुशनिमन्दपरिधिभागेषु संस्काराभावः। बुधशीघ्रपरिधिभागाः १३२। सुरगुरोः ६८। भास्करपुत्रस्य शनेः ३५। एतेषु बुधगुरुशनिशीघ्रपरिधिभागेष्वपि संस्काराभावः सर्वेऽचलत्वात् ॥ कुजशीघ्रकेन्द्रे यस्मिन् पदे स्यात्तत्र गतैष्ययोर्गतगम्ययोर्यैऽल्पा भागास्तेषा ज्या कार्या, सा त्रिभागोनैः सप्तभिरंशैर्गुणिता दलाऽद्व्यराशिज्यया पञ्चवेदभागज्यया भक्ता। आप्तांशैर्मृगकर्क्यादिशीघ्रकेन्द्रे कुजमन्दः कुजमन्दोच्चं क्रमेणाधिको हीनश्च कार्यः। एवं स्पष्टी-

* 'द्विवार्धराशिज्ययाप्तांशै'–इति पाठान्तरम्।
द्विवार्धराशिज्यया = सार्धराशिज्यया इति चतुर्वेदाचार्यः।
† स्फुटमन्दनीचोच्चवृत्तपरिधि'।

करणोपयोगि कुजमन्दोच्चं स्फुटं भवति । तत्स्फुटपरिधिस्तत्स्फुटमन्दपरिधिः । अर्थात् भौमस्य मन्दपरिधिभागाः ७० । त्र्यंशोना वेदजिना २४३° । ४०′ भागा मन्दोच्चसंस्कारार्थं ये पूर्वमाप्ता भागास्तैः सर्वदा ऊनास्तदा भौमस्य स्फुटः शीघ्रपरिधिः स्यात् । तत एवं यत्नमार्गं कुजस्य स्पष्टीकरणं भवति । मध्ये गणितागते मध्यमभौमे प्रथमं मन्दफलमर्धं धनं वा ऋणं यथागतं देयम् । ततो मध्यमेऽर्धमन्दफलसंस्कृतमध्यमभौमेऽर्धमन्दफलसंस्कृतान्मध्यभौमाद्यच्छीघ्रफलं तस्यार्धं यथागतं धनं वा ऋणं देयम् । पुनरर्धफलद्वयसंस्कृतान्मध्याद्यन्मन्दफलं तत्संस्कृतान्मध्याद्यच्छीघ्रफलं च ते सकले सम्पूर्णे मध्ये गणितागते भौमे देये ततो ज्ञगुरुशनिवदसकृत् कार्यं यावदविशेषः । एवं क्षितिसुतो भौमः स्पष्टो भवति । स्फुटा भुक्तिश्च ग्रहवत् साध्या । अर्थात् दिनान्तरस्पष्टखगान्तरमेव तत्समयान्तराले ग्रहस्फुटभुक्तिर्भवति । भास्कराचार्योक्तस्पष्टीकरणे सर्वमेतदनुरूपमेव । किन्तु शनेर्मन्दपरिधिभागा अत्र ३० भास्करेण ५० गृहीताः । एवमत्र शनेः शीघ्रपरिधिभागा ३५ भास्करेण च ४० गृहीताः । केन हेतुना भास्करेण भास्करगुरुणा परिधिभागेषु वैषम्यं कृतमिति सुधीभिर्विभावनीयम् । चतुर्वेदाचार्यटीकायां यादृशः पाठस्तादृश एवास्माभिर्मूले निवेशितः ।

अत्रोपपत्तिः । पृथूदकस्वामिना चतुर्वेदाचार्येणोपलब्धिरेवाभिहिता । यदीदृशी ग्रहोपलब्धिस्तर्हि यदि दृग्गणितैक्यकृत्तर्हि मान्यैवेति ॥ ३४-४० ॥

इदानीं मन्दस्पष्टां स्फुटां गतिं चाह ।

ग्रहमन्दकेन्द्रभुक्ति-
ज्यान्तरगुणिताऽऽद्यजीवया २१४ भक्ता ।
लब्धं स्फुटपरिधिघ्नं
भगणांशहृतं कलाभिस्तु ॥ ४१ ॥

मृगकर्क्यादावूनाधिका स्वमध्यमगतिः स्फुटाऽर्केन्द्वोः ।
शीघ्रगतिं मन्दफलस्फुटभुक्त्यूनां कुजादीनाम् ॥ ४२ ॥

शीघ्रफलं भोग्यज्यासङ्गुणितं त्वाद्यजीवया विभजेत् ।
फलगुणितं व्यासार्धं विभाजयेत् शीघ्रकर्णेन ॥ ४३ ॥
लब्धोना शीघ्रगतिः स्फुटभुक्तिर्भवति लब्धमधिकं चेत् ।
शीघ्रगतेः शीघ्रगतिं लब्धात् संशोध्य वक्रगतिः ॥ ४४ ॥

मन्दकेन्द्रज्याक्रियमाणे यद्भोग्यखण्डं तदत्र ज्यान्तरशब्देनोच्यते । तेन ज्यान्तरेण ग्रहमन्दकेन्द्रगतिर्गुणिताऽऽद्य २१४ जीवया भक्ता लब्धं स्फुटमन्दपरिधिगुणितं भगणांशैर्हृतं लब्धाभिः कलाभिर्मृगकर्क्यादिकेन्द्रे स्वमध्यमगतिरूनाधिका तदा रवीन्द्वोः स्फुटा भुक्तिरन्येषां कुजादीनां मन्दस्पष्टा गतिर्भवति ।

शीघ्रगतिः शीघ्रोच्चगतिः स्वमन्दस्पष्टगत्यूना तदा कुजादीनां शीघ्रकेन्द्रगतिर्भवति । तां शीघ्रफलस्य ज्यायां क्रियमाणायां या भोग्यजीवा ज्यान्तरं तया सङ्गुणितां कृत्वाऽऽद्यजीवया भजेत् । यल्लब्धं तेन व्यासार्धं सङ्गुण्य शीघ्रकर्णेन विभाजयेत् । शीघ्रोच्चगतिर्लब्धोना कुजादिकानां स्फुटभुक्तिर्भवति । चेल्लब्धं फलं शीघ्रोच्चगतेरधिकं तदा लब्धात् शीघ्रोच्चगतिं विशोध्य शेषं कुजादीनां वक्रगतिर्भवतीति ।

अत्रोपपत्तिः । त्रैराशिकेन । यदि शरद्विदस्र २२५ मितेन चापेन भोग्यखण्डं लभ्यते तदाऽद्यतनश्वस्तनकेन्द्रान्तरेण केन्द्रगतिमितेन किम् । लब्धमद्यतनश्वस्तनकेन्द्रज्ययोरन्तरम् । मन्दगतिफलसाधने तत्स्फुटमन्दपरिधिगुणं भांशैर्हृतं भुजफलान्तरं भवति । तत् पञ्चद्विदस्रगुणमाद्यजीवया भक्तं स्वल्पान्तराज्जातमद्यतनश्वस्तनमन्दफलान्तरं गतिफलम्
$$= \frac{\text{केग} \times \text{भोखं}}{२२५} \cdot \frac{\text{स्फुप}}{३६०} \cdot \frac{२२५}{\text{चाज्या}} = \frac{\text{केग भोख}}{\text{चाज्या}} \cdot \frac{\text{स्फुप}}{३६०}$$
। एवं शीघ्रकर्मणि शीघ्रफलस्य शीघ्रकेन्द्रगत्यधिकशीघ्रफलस्य च ज्ययोरन्तरम् $= \frac{\text{शीकेग} \times \text{शी फ भोखं}}{२२५}$ इदं त्रिज्यागुणं शीघ्रकर्णाहृतं स्थूलं स्फुटकेन्द्रज्यान्तरं भवति तदाद्यचापगुणमाद्यज्याहृतं जाता स्थूला स्पष्टकेन्द्रगतिः
$$= \frac{\text{शीकेग} \cdot \text{भोखं}}{२२५} \cdot \frac{\text{त्रि}}{\text{शीक}} \cdot \frac{२२५}{\text{चाज्या}} = \frac{\text{शीकेग भोख}}{\text{चाज्या}} \cdot \frac{\text{त्रि}}{\text{शीक}}$$
इत्यानयनमुपपद्यते ।

शेषोपपत्तिर्भास्करविधिना स्फुटा । इदं सर्वं स्थूलं तात्कालिक-भोग्यखण्डेन सूक्ष्ममित्येतदर्थे 'कलाग्राङ्कान्तरशिञ्जिनीघ्नी' त्यादि भास्करविधिस्तथा तदुपपत्तिप्रकारश्च मदीयसत्त्वविवेकटिप्पण्यां विलोकनीय इति ॥ ४१–४४ ॥

इदानीमिदं स्पष्टीकरणं कस्मै न देयमित्याह ।

**देयमसुताय नेदं शपथैरपि दत्तसुकृतनाशाय ।**
**यात्राविवाहजातकफलस्फुटत्वं यतः स्पष्टैः ॥ ४५ ॥**

यतो दत्तस्य सुकृतं दत्तसुकृतं तस्य नाशाय भवति । तथा स्पष्टैः खेटैरेव यात्राविवाहजातकफलानां स्फुटत्वं भवति । अतः शपथैरपीदं स्पष्टीकरणमसुताय न देयम् । अर्थात्सुताय चिरोषिताय शिष्याय परीक्षिताय देयमित्यर्थः ॥ ४५ ॥

इदानीमार्यभटादीनां दूषणमाह ।

**मेषादितः प्रवृत्ता नार्यभटस्य स्फुटा युगस्यादौ ।**
**श्रीषेणस्य कुजाद्याः *खेटाः सर्वे हि विष्णुचन्द्रस्य ॥ ४६ ॥**
**दूरभ्रष्टाः स्पष्टाः श्रीषेणार्यभटविष्णुचन्द्रेषु ।**
**यस्मात्† कुजादयस्ते विदुषां नैवादरस्तस्मात् ॥ ४७ ॥**

आर्यभटस्य श्रीषेणस्य विष्णुचन्द्रस्य च सर्वे खेटाः कुजाद्या युगस्यादौ मेषादितो न प्रवृत्ता अतस्ते स्फुटा न सन्तीत्यर्थः । तेषां मते युगादौ कुजाद्याः सर्वे खेटा मेषादौ नासन् ॥ ४६ ॥

यतः श्रीषेणार्यभटविष्णुचन्द्रेषु अर्थात्तेषां तन्त्रेषु ते कुजादयः स्पष्टा दूरभ्रष्टा न दृग्योग्यास्तस्माद्विदुषां मध्ये तेषां तन्त्राणां नादर इति ॥ ४७ ॥

इदानीं भौमादीनां वक्रावक्रत्वमाह ।

**अग्न्यष्टिभि १६३ रिषुमनुभिः १४५**
**शरसूर्यै १२५ रिषुरसेन्दुभि १६५ स्त्रिभवैः ११३ ।**

---

* सूर्याद्या विष्णुचन्द्रस्येति पाठान्तरम् ।

† यस्मात् कुजादयस्तेषु न विदुषामादरस्तस्मात्–इति पाठान्तरम् ।

**शीघ्रफलं भोग्यज्यासङ्गुणितं त्वाद्यजीवया विभजेत् ।**
**फलगुणितं व्यासार्धं विभाजयेत् शीघ्रकर्णेन ॥ ४३ ॥**
**लब्धोना शीघ्रगतिः स्फुटभुक्तिर्भवति लब्धमधिकं चेत् ।**
**शीघ्रगतेः शीघ्रगतिं लब्धात् संशोध्य वक्रगतिः ॥ ४४ ॥**

मन्दकेन्द्रज्याक्रियमाणे यद्भोग्यखण्डं तदत्र ज्यान्तरशब्देनोच्यते । तेन ज्यान्तरेण ग्रहमन्दकेन्द्रगतिर्गुणिताऽऽद्य २१४ जीवया भक्ता लब्धं स्फुटमन्दपरिधिगुणितं भगणांशैर्हृतं लब्धाभिः कलाभिर्मृगकर्क्यादिकेन्द्रे स्वमध्यमगतिरूनाधिका तदा रवीन्द्वोः स्फुटा भुक्तिरन्यथा कुजादीनां मन्दस्पष्टा गतिर्भवति ।

शीघ्रगतिः शीघ्रोच्चगतिः स्वमन्दस्पष्टगत्यूना तदा कुजादीनां शीघ्रकेन्द्रगतिर्भवति । सा शीघ्रफलस्य ज्यायां क्रियमाणायां या भोग्यजीवा ज्यान्तरं तया सङ्गुणिता कृत्वाऽऽद्यजीवया भजेत् । यल्लब्धं तेन व्यासार्धं सङ्गुण्य शीघ्रकर्णेन विभाजयेत् । शीघ्रोच्चगतिर्लब्धोना कुजादिकानां स्फुटभुक्तिर्भवति । चेल्लब्धं फलं शीघ्रोच्चगतेरधिकं तदा तस्मात् शीघ्रोच्चगतिं विशोध्य शेषं कुजादीनां वक्रगतिर्भवतीति ।

अत्रोपपत्तिः । चैराशिकेन । यदि शरद्विदस्र २२५ मितेन चापेन भोग्यखण्डं लभ्यते तदाऽद्यतनश्वस्तनकेन्द्रान्तरेण केन्द्रगतिमितेन किम् । लब्धमद्यतनश्वस्तनकेन्द्रज्ययोरन्तरम् । मन्दगतिफलसाधने तत्स्फुटमन्दपरिधिगुणं भांशैर्हृतं भुजफलान्तरं भवति । तत् पञ्चद्विदस्रगुणमाद्यजीवया भक्तं स्वल्पान्तराज्जातमद्यतनश्वस्तनमन्दफलान्तरं गतिफलम्
$= \frac{\text{कें ग} \times \text{भोख}}{२२५} \cdot \frac{\text{स्फुप}}{३६०} \cdot \frac{२२५}{\text{आज्या}} = \frac{\text{कें ग भोख}}{\text{आज्या}} \cdot \frac{\text{स्फुप}}{३६०}$ । एवं शीघ्रकर्मणि शीघ्रफलस्य शीघ्रकेन्द्रगत्यधिकशीघ्रफलस्य च ज्ययोरन्तरम् $= \frac{\text{शीकें ग} \times \text{शी फ भोखं}}{२२५}$ इदं त्रिज्यागुणं शीघ्रकर्णहृतं स्थूलं स्फुटकेन्द्रज्यान्तरं भवति तदाद्यचापगुणमाद्यज्याहृतं जाता स्थूला स्पष्टकेन्द्रगतिः
$= \frac{\text{शीकें ग भोख}}{२२५} \cdot \frac{\text{त्रि}}{\text{शीक}} \cdot \frac{२२५}{\text{आज्या}} = \frac{\text{शीकें ग भोखं}}{\text{आज्या}} \cdot \frac{\text{त्रि}}{\text{शीक}}$ इत्यानयनमुपपद्यते ।

शेषोपपत्तिर्भास्करविधिना स्फुटा । इद सर्वं स्थूलं तात्कालिक भोग्यखण्डेन सूक्ष्ममित्येतदर्थं 'फलांशखाङ्कान्तरशिञ्जिनीघ्नी' त्यादि भास्करविधिस्तथा तदुपपत्तिप्रकारश्च मदीयस्तत्वविवेकटिप्पण्या विलोकनीय इति ॥ ४१–४४ ॥

इदानीमिद स्पष्टीकरण कस्मै न देयमित्याह ।

**देयमसुताय नेदं शपथैरपि दत्तसुकृतनाशाय ।**
**यात्राविवाहजातकफलस्फुटत्वं यतः स्पष्टैः ॥ ४५ ॥**

यतो दत्तस्य सुकृत दत्तसुकृत तस्य नाशाय भवति । तथा स्पष्टैः खेटैरेव यात्राविवाहजातकफलाना स्फुटत्व भवति । अत शपथैरपीद स्पष्टीकरणमसुताय न देयम् । अर्थाद्भक्ताय विरोचिताय शिष्याय परीक्षिताय देयमित्यर्थः ॥ ४५ ॥

इदानीमार्यभटादीना दूषणमाह ।

**मेषादितः प्रवृत्ता नार्यभटस्य स्फुटा युगस्यादौ ।**
**श्रीषेणस्य कुजाद्याः *खेटाः सर्वे हि विष्णुचन्द्रस्य ॥ ४६ ॥**
**दूरभ्रष्टाः स्पष्टाः श्रीषेणार्यभटविष्णुचन्द्रेषु ।**
**यस्मात्† कुजादयस्ते विदुषां नैवादरस्तस्मात् ॥ ४७ ॥**

आर्यभटस्य श्रीषेणस्य विष्णुचन्द्रस्य च सर्वे खेटा, कुजाद्या युगस्यादौ मेषादितो न प्रवृत्ता अतस्ते स्फुटा न सन्तीत्यर्थ. । तेषा मते युगादौ कुजाद्या. सर्वे खेटा मेषादौ नासन् ॥ ४६ ॥

यत श्रीषेणार्यभटविष्णुचन्द्रेषु अर्थात्तेषा तन्त्रेषु ते कुजादय. स्पष्टा दूरभ्रष्टा न दृग्गोचरास्तस्माद्विदुषा मध्ये तेषा तन्त्राणा नादर इति ॥ ४७ ॥

इदानीं भौमादीना वक्रावक्रत्वमाह ।

**अन्त्यष्टिभि १६३ रिषुमनुभिः १४५**
**शरसूर्यैं १२५ रिषुरसेन्दुभि १६५ स्त्रिभवैः ११३ ।**

---

* मूर्धाद्या विष्णुचन्द्रस्येति पाठान्तरम् ।

† यस्मात् कुजादयस्तेषु न विदुषामादरस्तस्मात्-इति पाठान्तरम् ।

शीघ्रान्त्यकेन्द्रभागै-

भौमादीनां भवति चक्रम् ॥ ४८ ॥

चक्रांशकै३६०स्तदूनैरनुवक्रं तदधिकोनभागकलाः ।

मन्दफलस्फुटभुक्त्यूनशीघ्रभुक्त्या हृता दिवसाः ॥ ४९ ॥

मन्दफलस्फुटभुक्तिर्मन्दस्पष्टा गतिस्तदूना शीघ्रगतिः शीघ्रोच्च गतिः शीघ्रकेन्द्रगतिर्भवति । तया तदधिकोनभागकला हृता गतैष्या दिवसा भवन्ति । शीघ्रान्त्यकेन्द्रभागैरसकृद्विधिनाऽविशेषकर्मणि स्थिरीभूतैः केन्द्रांशैरिति । शेषं स्पष्टार्थम् । द्राक्केन्द्रभागैस्त्रिनृपैः शरेन्द्रैरित्यादि तथा 'चक्रचक्रास्तमयोदयोक्तभागाधिकोना.' इत्यादि च भास्करोक्तमे तदनुरूपमेव । गणिताध्यायस्पष्टाधिकारस्य ४१–४४ श्लोकौ द्रष्टव्यौ ।

अत्रोपपत्त्यर्थं मत्कृता यहलाघवभासना विलोक्या ॥ ४८–४९ ॥

इदानीं वक्रातिवक्रानुवक्रपरिभाषामाह ।

शीघ्रात् स्फुटग्रहोनाच्छेषे मध्यस्फुटान्तरार्धं वा ।

अधिके धनमृणमूने स्फुटग्रहान्मध्यमे चापि ॥ ५० ॥

राशिषु चतुर्षु वक्रं षट्स्वतिवक्रमनुवक्रमष्टासु ।

अप्राप्ताऽतीतकला भुक्त्यास्यैवोद्धृता दिवसाः ॥ ५१ ॥

स्फुटग्रहोनात् शीघ्रात् शीघ्रोच्चात् यच्छेषं तस्मिन् स्फुटग्रहान्मध्यमे ग्रहेऽधिके मध्यस्फुटयोरन्तरार्धं धनं स्फुटग्रहान्मध्यमे ऊने तदन्तरार्धं हीनं कार्यम् । एवं संस्कृतेषु चतुर्षु राशिषु वक्रं षट्सु राशिषु अतिवक्रमष्टासु राशिषु अनुवक्रं च ज्ञेयम् । तत्राप्यप्राप्तातीतकलाः । अर्थात् यथा वक्रज्ञाने इष्टदिने 'शीघ्रात् स्फुटग्रहोना' दित्यादिविधिना शेषं मध्यस्फुटान्तरार्धसंस्कृतं यदि राशिचतुष्कादल्पं तदा संस्कृतस्य राशिचतुष्कस्य चान्तरे याः कलास्ता अप्राप्तकलाः । एवं चेत् संस्कृतं राशिचतुष्कादधिकं तदा तयोरन्तरे अतीतकला भवन्ति । ता एष्यगताः कलाः । अस्य संस्कृतस्य भुक्त्यैव अर्थात् गतैष्यदिनयोः 'शीघ्रात् स्फुटग्रहोना' दित्यादिविधिनाऽऽनीतयोः संस्कृतयोरन्तरतुल्यया भुक्त्या हृता दिवसा भवन्ति ।

अत्रोपपत्तिः । फलार्थं वक्रातिवक्रानुवक्राणां संज्ञा संहिताकारैरुपनिबद्धा । एष्यातीतदिवसानयनं त्रैराशिकेन सुगमम् ॥ ५०-५१ ॥

इदानीं भौमादीनामुदयास्तसंभवमाह ।

**अष्टयमैः २८ कृतचन्द्रैः १४**
**मुनीन्दुभि १७ र्भौमजीवरविजानाम् ।**
**उदयः प्रागस्तमय-**
**स्तदूनचक्रांशकैः ३६० पश्चात् ॥ ५२ ॥**
**खशरै५ र्जिनै २४ र्ज्ञसितयो-**
**रिपुतिथिभि १५५ र्मुनिनगेन्दुभिः १७७ पश्चात् ।**
**उदयास्तमयौ व्यस्तौ**
**मण्डलभागै ३६०स्तदूनैः प्राक् ॥ ५३ ॥**

मण्डलभागैश्चक्रांशैस्तदूनैः प्राक् व्यस्तावुदयास्तौ भवतः । अर्थात् बुधशुक्रयोः पश्चादुदयकेन्द्रांशैरूनाश्चक्रांशास्तयोः प्रागस्तकेन्द्रांशा भवन्ति । एवं पश्चादस्तकेन्द्रांशैर्हीनाश्चक्रभागाः प्रागुदयकेन्द्रांशा भवन्ति । शेषं स्पष्टार्थम् । 'प्राच्यामुदेति क्षितिजोऽष्टदस्रै'रित्यादि भास्करोक्तमेतदनुरूपमेव । (गणिताध्यायस्पष्टाधिकारस्य ४१ श्लोको द्रष्टव्यः ।)

अत्रोपपत्त्यर्थं मदीया ग्रहलाघववासना निरीक्षणीयेति ॥ ५२-५३ ॥

इदानीं स्वदेशे कथं स्पष्टा भवन्तीत्येतदर्थमाह ।

**स्पष्टा द्युरात्रिदलयो रव्युदयास्तमययो रविचरार्धात् ।**
**एष्ये ह्यधिकेऽतीतादवक्रितो वक्रितो हीने ॥ ५४ ॥**

पूर्वं ये भौमाद्याः साधितास्ते द्युरात्रिदलयोर्दिनार्धे वा निशीथे यथागताः स्पष्टाः स्युः । अर्थात् तत्र चरसंस्काराभावः । यदि रव्युदये वा रव्यस्तमये साधितास्तदा रविचरार्धात् रविचरफलसंस्कारात् स्वदेशे उदये वाऽस्तमये ते स्पष्टा भवन्ति । अतीताद्ग्रहाद्यदि एष्य आगामिदिनोद्भवः स्पष्टो ग्रहोऽधिकस्तदाऽवक्रितो मार्गी यदि हीनस्तदा वक्रितो वक्रो ज्ञेय इति सर्वं स्फुटम् ।

अत्रोपपत्तिः स्फुटा ॥ ५४ ॥

इदानीं पञ्चज्यानयनमाह ।

जिनभागज्यागुणिता सूर्यज्या व्यासदलहृता लब्धम् ।
इष्टापक्रमजीवा विषुवदुदग्दक्षिणा सवितुः ॥ ५५ ॥
इष्टापक्रमवर्गं त्रिज्यावर्गाद्विशोध्य शेषपदम् ।
विषुवदुदग्दक्षिणतः स्वाहोरात्रार्धविष्कम्भः ॥ ५६ ॥
क्रान्तिज्या विषुवच्छायया गुणा द्वादशोद्धृता क्षितिजा ।
स्वाहोरात्रेऽनष्टा व्यासार्धेनाहता भक्ता ॥ ५७ ॥
स्वाहोरात्रार्धेन क्षयवृद्धिज्याधनुश्चरप्राणाः ।
ते*षड्हृता विनाड्यो विनाडिका नाडिकाः षष्ट्या ॥ ५८ ॥

सूर्यज्या रविभुजज्या । इष्टापक्रमवर्गमिष्टक्रान्तिज्यावर्गम् । स्वाहोरात्रार्धविष्कम्भो द्युज्या । स्वाहोरात्रे द्युज्यावृत्ते क्षितिजा क्षितिज्याऽर्थात् कुज्या साऽनष्टा पृथक् स्थाप्या । स्वाहोरात्रार्धेन द्युज्यया । क्षयवृद्धिज्या चरज्या । शेषं स्पष्टार्थम् । 'युगायनांशादपमः प्रसाध्यः' इत्यादि भास्करोक्तमेतदनुरूपमेव । (गणिताध्याय स्पष्टाधिकारस्य ४० श्लोको द्रष्टव्यः) ।

अत्रोपपत्तिश्च भास्करोक्ता सिद्धान्तविदां स्फुटा ।

रविभुजज्या, क्रान्तिज्या, द्युज्या, क्षितिज्या, चरज्या—इति पञ्चज्यानयनमत्र । आचार्यमतेऽयनभागाभावोऽतो यथागतरविरेव सायनो रविः । भास्करेण सायनरवेर्भुजज्या साधिता । इत्येव तन्मते विशेष इति ॥ ५५–५८ ॥

इदानीं चरकर्माह ।

चरदलघटिकागुणिता भुक्तिः षष्ट्या हृता कलाद्यम् ।
ऋणमुदयेऽस्तमये धनमुत्तरगोलेऽन्यथा याम्ये ॥ ५९ ॥

स्पष्टार्थम् । 'चरघ्नभुक्तिर्द्युनिशासुभक्ता' इत्यादि भास्करोक्तमेत

---

* षट्कोद्धृता—इति पाठान्तरम् ।

वनुरूपमेव । (गणिताध्याय स्पष्टाधिकारस्य ५३ श्लोको द्रष्टव्यः ।)

अत्रोपपत्तिश्च त्रैराशिकेन स्फुटा ॥ ५९ ॥

इदानीं दिनरात्रिमानमाह ।

**दिनमानरात्रिघटिकाश्चरार्धघटिकाभिरुत्तरे गोले ।**
**पञ्चदश युक्तहीना याम्ये हीनाधिका द्विगुणाः ॥ ६० ॥**

स्पष्टार्थम् । 'चरघटीसहिता रहिताः क्रमा' दित्यादि भास्करोक्तमेतदनुरूपमेव । (गणिताध्याय-स्पष्टाधिकारस्य ५२ श्लोको द्रष्टव्यः ।)

अत्रोपपत्तिश्च गोलयुक्त्या स्फुटा ॥ ६० ॥

इदानीं ग्रहाणां नक्षत्रानयनमाह ।

**भान्यश्विन्यादीनि ग्रहलिप्ताः खखवसूद्धृता८००लब्धम् ।**
**भुक्तिहृते गतगम्ये दिवसाः षष्ट्या गुणे घटिकाः ॥ ६१ ॥**

गतगम्ये गतगम्यकले भुक्तिहृते गतगम्या दिवसा भवन्ति । तच्छेषे षष्ट्या गुणे पुनर्भुक्त्या हृते घटिका भवन्ति । 'ग्रहकलाः स्वरवीन्दुकला हृताः खखगजै.' इत्यादि भास्करोक्तेन शेषा व्याख्योपपत्तिश्च स्फुटा ॥ ६१ ॥
(गणिताध्याय-स्पष्टाधिकारस्य ६७ श्लोको द्रष्टव्यः ।)

इदानीं तिथ्यानयनमाह ।

**अर्कोनचन्द्रलिप्ताः खयम*स्वरभाजिताः फलं तिथयः ।**
**गतगम्ये षष्टिगुणे भुक्त्यन्तरभाजिते घटिकाः ॥ ६२ ॥**

स्पष्टार्थम् । 'रविरहितविधोर्लवा हृता.' इत्यादि भास्करोक्तं चिन्त्यम् ॥ ६२ ॥ (गणिताध्याय स्पष्टाधिकारस्य ६६ श्लोको द्रष्टव्य. ।)

इदानीं योगानयनमाह ।

**रविचन्द्रयोगलिप्ताः खखवसुभिर्भाजिताः फलं योगाः ।**
**गतगम्ये षष्टिगुणे भुक्तिसमासोद्धृते नाड्यः ॥ ६३ ॥**

स्पष्टार्थम् । सम्प्रत्युपलभ्यचतुर्वेदाचार्यटीकायामियमार्या नोपलभ्यते ॥ ६३ ॥

---

* खयमनगैर्भाजिता इति पाठान्तरम् ।

इदानीं रविचन्द्रान्तरमाह ।

**राश्यंशकलाविकलाः स्फुटमासान्तेऽशलिप्तिकाविकलाः ।**
**पक्षान्ते तिथ्यन्ते समा रवीन्द्वोः कलाविकलाः ॥ ६४ ॥**

स्पष्टार्थम् । 'यातैष्यनाडीगुणिता स्वभुक्ति' रित्यादि भास्करोक्तं तथा 'मासान्ते रविशशिनौ समौ भवेता' मित्यादि लल्लोक्तं च विचिन्त्यम् ।

—

अत्रोपपत्तिः । रविचन्द्रयोरन्तरं यदा द्वादशभागसमं तदैका तिथिरिति ज्योतिर्विदां परिभाषा । स्फुटमासान्ते त्रिंशत् तिथयः । अतो रविचन्द्रान्तरभागाः ( $= ३० \times १२ = ३६०^{\circ}$ ) वा शून्यसमाः । अतो राश्याद्यवयवै रविचन्द्रौ समौ । पक्षान्ते पञ्चदशतिथयः । अतो रविचन्द्रान्तरम् $= १५ \times १२^{\circ} = १८०^{\circ} = ६$ राशयः । अतो रविचन्द्रावंशाद्यवयवैः समौ । अन्यथा कथं तयोरन्तरे केवलं राशय एव भवन्ति । एवं कस्मिन्नपि तिथ्यन्ते रविचन्द्रयोरन्तरभागा द्वादशापवर्त्त्या एव । अतस्त दन्तरे कलाविकलासमत्वादेव केवलं भागा उत्पद्यन्त इति गणितविदां स्फुटमेव ॥ ६४ ॥

इदानीं स्थिरकरणान्याह ।

**कृष्णचतुर्दश्यन्ते शकुनिः पर्वणि चतुष्पदं प्रथमे ।**
**तिथ्य*र्धेऽन्ते नागं किंस्तुघ्नं प्रतिपदाद्यर्धे ॥ ६५ ॥**

स्पष्टार्थम् । 'शकुनितोऽसितभूतदलादनु' इति भास्करोक्तमेत दनुरूपमेव ॥ ६५ ॥ ( गणिताध्याय-स्पष्टाधिकारस्य ६६ श्लोको द्रष्टव्यः । )

इदानीं चरकरणान्याह ।

**व्यर्केन्दुकला भक्ताः खरसगुणैर्लब्धमूनमेकेन ।**
**चरकरणानि ववादीन्यगहृतशेषे तिथिवदन्यत् ॥ ६६ ॥**

अत्राचार्येण व्यर्केन्दुकला गृहीता भास्करेण 'रविरसैर्विधोन्तु नवा हृताः' इत्याद्यात्मप्रकारे रविचन्द्रान्तरांशा गृहीताः । अतस्तत्र

* तिथ्यन्तेऽर्धे इति पाठान्तरम् ।

षड् हरोऽत्र वह्निगुणाः खरसगुणाः ३६० । शेषं सर्वं भास्करोक्तं चिन्त्यम् ॥ ६६ ॥ (गणिताध्याय-स्पष्टाधिकारस्य ६६ श्लोको द्रष्टव्यः ।)

इदानीमवशिष्टं स्फुटगत्युत्तराध्याये वक्ष्यामीत्येतदर्थमाह ।

**इह नोक्तानि बहुत्वात् स्पष्टगतेरुत्तरेऽभिधास्यामि ।**
**सङ्क्रान्तिभतिथिकरणव्यतिपाताद्यन्तगणितानि* ॥६७॥**

स्पष्टार्थम् ॥ ६७ ॥

इदानीमध्यायोपसंहारमाह ।

**ज्यापरिधिस्पष्टीकरणदिनगतिचरार्धभतिथिकरणेषु ।**
**स्फुटगतिरध्यायः सप्तषष्टिरार्या द्वितीयोऽयम् ॥ ६८ ॥**

**इति श्रीब्राह्मस्फुटसिद्धान्ते स्पष्टाधिकारो द्वितीयः ॥ २ ॥**

स्पष्टार्थमार्या ॥ ६८ ॥

मधुसूदनसूनुनोदितो यस्तिलकः श्रीपृथुनेह जिष्णुजोक्ते ।
हृदि तं विनिधाय नूतनोऽयं रचितः स्पष्टगतौ सुधाकरेण ॥

इति श्रीकृपालुदत्तसूनुसुधाकरद्विवेदिविरचिते ब्राह्मस्फुटसिद्धान्त-
नूतनतिलके स्पष्टाधिकारो द्वितीयः ॥ २ ॥



---

* करणानि इति पाठान्तरम् ।

# अथ त्रिप्रश्नाधिकारः ।

अथादौ दिग्ज्ञानमाह ।

**पूर्वापरयोर्बिन्दू तुल्यच्छायाग्रयोर्दिगपराऽऽद्यः ।**
**पूर्वान्यः क्रान्तिवशात् तन्मध्याच्छङ्कुतलमितरे ॥ १ ॥**

पूर्वापरकपालयोस्तुल्यच्छायाग्रयोर्यौ बिन्दू तत्राऽऽद्योऽपरः पश्चिमा दिक् । अन्यः पश्चिमकपालस्थे रवौ य उत्पन्नः स पूर्वा दिक् । अत्र पूर्वापरकपालयोस्तुल्यच्छायाग्रयोर्यं क्रान्तौ तयोर्वशाद्भेद उत्पद्यत इत्यध्याहार्यम् । तयोश्छायाग्रयोर्मध्यं तन्मध्यं तस्माच्छङ्कुतलं शङ्कुमूलपर्यन्तं या रेखा तच्चेतरे याम्यासौम्ये भवत इत्यर्थः । अत्रैतदुक्तं भवति । जलवत् समीकृतायां भूमावभीष्टदिने तद्दिनमाध्याह्निकच्छायाप्रमाणतोऽधिकेन कर्कटकेन वृत्तमुत्पाद्य वृत्तमध्ये द्वादशाङ्गुलशङ्कुं निवेश्य । तस्य प्राक्कपालस्थे सवितरि यत्र पश्चिमभागे वृत्तपरिधौ छायाग्रं लगति तत्राद्यो बिन्दुः कार्यः । पुन पश्चिमकपालस्थे रवौ तस्यैव शङ्कोर्भाग्रं यत्र पूर्वभागे वृत्तपरिधौ निर्गच्छति तत्रान्यो बिन्दुः कार्यः । आद्यः परोऽन्यः पूर्वा दिग्व्यवहारोपयोगिनी ज्ञेया । तद्गता रेखा पूर्वापरा तस्या तयोश्छायाग्रयोर्मध्यं यत्तस्माच्छङ्कुमूलगामिनी रेखा दक्षिणोत्तरा । तत्र याम्योत्तरे भवत इति बुद्धिमतानुक्तमपि ज्ञायते । अत्र क्रान्तिवशाद्दिक्साधने कथं भेद उत्पद्यते इत्येतदर्थं चतुर्वेदाचार्येण कर्णवृत्ताग्रान्तरं यत् स्वटीकायां साधितं तदेव भास्करेण 'तत्कालापमजीवयोस्तु विवराङ्गाकर्णमित्याहता' इत्यादिनोपनिबद्धम् । 'वृत्तेऽम्भःसुसमीकृतक्षितिगते' इत्यादि भास्करोक्तमेतदनुरूपमेव ।

अत्रोपपत्तिर्भास्करोक्तैव स्फुटा । कर्णवृत्ताग्रान्तरदानेनापि न स्फुटा प्राची भास्करादिविधिना भवतीत्येतदर्थं मदीया दिग्मीमांसा विलोकनीया किमत्र गौरवेणेति ॥ १ ॥

इदानीं भाभ्रमरेखां तद्वशतोऽपि दिग्ज्ञानमाह ।

**त्रिच्छायाग्रजमत्स्यद्वयमध्यगसूत्रयोर्युतिर्यत्र ।**
**सोत्तरगोले याम्या शङ्कुतलाद्दक्षिणे सौम्या ॥ २ ॥**

**छायाग्रभ्रमरेखा सूत्रयुतेर्वृत्तपरिधिरग्रस्पृक् ।**
**मध्यच्छायाऽन्तरमुदगितरद्वा शङ्कुमण्डलयोः ॥ ३ ॥**

इष्टेऽह्नि दिग्मध्यस्थशङ्कोश्छायात्रयं ज्ञात्वा तद्वशेन मत्स्यद्वयमुत्पाद्य तन्मुखपुच्छमध्यगरेखयोर्यत्र युतिः सोत्तरगोले याम्या दिग् ज्ञेया । यदि जिनाल्पाक्षे देशे कदाचिच्छङ्कुमूलाद्दक्षिणे छायाग्रे सा युतिर्भवति तदा सा सौम्या ज्ञेया ॥ २ ॥ सूत्रयुतेर्मत्स्यद्वयमुखपुच्छनिर्गतसूत्रयुतेर्यो वृत्तपरिधिः सोऽग्रस्पृक् छायाग्रस्पृक् भवति । अतः परिधिरेव छायाग्रभ्रमरेखा भाभ्रमरेखा भवति । शङ्कुमण्डलयोः शङ्कुमूलभाभ्रमरेखयोर्यदन्तरं सैव मध्यच्छाया दिनार्धे छाया भवतीति । सा चोदग् वेतरद् दक्षिणा भवति । अथाक्षे जिनाधिकाक्षदेशे मध्यच्छाया सर्वदोत्तरा भवति । उत्तरगोले जिनाल्पाक्षे देशे यदा रवेरुत्तरा क्रान्तिरक्षाधिका तदा शङ्कोर्मध्याह्ने छाया दक्षिणाभिमुखी भवति । 'इष्टेऽह्नि मध्ये प्राक् पश्चाद्धृते बाहुत्रयान्तरे । मत्स्यद्वयान्तरयुतेस्त्रिस्पृक् सूत्रेण भाभ्रमः' । इति संप्रतिप्रसिद्धसूर्यसिद्धान्तेऽप्येवमेव । लल्लादिभिरप्येवमेवोदितं स्वतन्त्रे । भास्करेणाप्येव 'भाचितयाद्भ्रमणं न सदस्माद् दिक् फलाढ्यं चे'त्यादिना भाभ्रमणस्य खण्डनं कृतम् ।

मेरौ यदि रविक्रान्तिरेकस्मिन् दिने स्थिरा स्यात्तर्हि भाभ्रमरेखा वृत्तपरिध्याकारा स्यात् । वस्तुतोऽभीष्टदेशे भाभ्रमरेखा कीदृशी—इत्येतदर्थं मत्कृतं भाभ्रमरेखानिरूपणं द्रष्टव्यम् ॥ ३ ॥

इदानीं द्वादशाङ्गुलशङ्कोर्भुजानयनमाह ।

**छायावृत्तेऽर्काग्रा कर्णगुणा व्यासदलहृताऽर्काग्रा ।**
**विषुवच्छाया याम्या तदन्तरैक्यं भुजोऽस्याग्रे ॥ ४ ॥**

अर्काग्रा कर्णगुणा छायाकर्णगुणा व्यासदलहृता सदा छायाग्रे छायाव्यासार्धाद्वृत्तेऽर्काग्राऽर्थात् कर्णवृत्ताग्रा भवेत्तथा विषुवच्छाया पलभा सदा याम्या भवेत्तदन्तरैक्यं भुजः स्यात् । भिन्नदिशोरन्तरमेकदिशोर्योगः सस्कारदिक्को भुजः स्यादिति ।

अत्रोपपत्तिः । 'त्रिभज्याहृताग्राथवा कर्णनिघ्नी भवेत् कर्णवृत्ताग्रका व्यस्तगोला' इत्यादि भास्करविधिना स्फुटा । भास्करेण छायाग्रप्राच्यपरयोरन्तरं भुज इत्यङ्गीकृत्य कर्णवृत्ताग्रा व्यस्तगोला पलभा सौम्या च कल्पिता । इहाऽऽचार्येण लघुशङ्कुमूलप्राच्यपरयोरन्तरं भुज इति स्वीकृत्याग्रापलभे यथा दिक्के एव स्थापिते इति सिद्धान्तविदां स्फुटम् ।

अस्य भुजस्याग्रे इत्यग्रे संबन्धः ॥ ४ ॥

इदानीं कोटिसाधनमाह ।

**शङ्कुः प्राच्यपरायाश्छायाभुजकृतिविशेषमूलं यत् ।**
**तत् प्राच्यपरा छायाभुजाग्रयोरन्तरं कोटिः ॥ ५ ॥**

प्राच्यपरारेखायाः सकाशाद्यथादिग्गतस्य भुजस्याग्रे शङ्कुः शङ्कुमूलमिति ज्ञेयम् । छायाभुजकृत्योर्विशेषादन्तरान्मूलं यद्भवेत्तदेव छायाभुजाग्रयोरन्तरं प्राच्यपरा पूर्वापररेखारूपा कोटिर्भवेदिति ।

अत्रोपपत्तिः । शङ्कुमूलप्राच्यपरयोर्यदन्तरं तदेव दिग्वैपरीत्येन दिग्मध्यगतस्य शङ्कोश्छायाग्रस्य पूर्वापररेखायाश्चान्तरमतो 'दिक्सूत्रसम्पातगतस्य शङ्कोश्छायाग्रपूर्वापरसूत्रमध्यम् । दोर्दोःप्रभावर्गवियोगमूलं कोटिर्भवेत् प्रागपरा ततः स्या'दिति भास्करोक्त्यावशिष्टा वासना स्फुटा । इह शङ्कुमूलस्य प्राच्यपरायाश्चान्तरं भुजः । शङ्कुमूलाद्दिङ्मध्यावधिच्छाया तद्वर्गान्तरपदं पूर्वापररेखाया छायाग्रभुजाग्रयोरन्तरं कोटिरिति सर्वं स्फुटम् ॥ ५ ॥

इदानीं शङ्कुच्छायाग्रयोः स्थितिमाह ।

**दिङ्मध्ये छायाग्रं कृत्वा शङ्कोर्यथादिशं भ्रमणम् ।**
**दिङ्मध्यस्थितशङ्कोश्छायाग्रं भ्रमति विपरीतम् ॥ ६ ॥**

पूर्वापररेखातः शङ्कुमूलं यद्दिक् भवति तद्विपरीत दिग्मध्यस्थित शङ्कोश्छायाग्र भवतीति स्फुटोऽर्थः ।

वासना च पूर्वश्लोकतः स्फुटाः ॥ ६ ॥

इदानीं विषुवत्कर्णमाह ।

**शङ्कुर्लम्बश्छायाक्षज्या तद्वर्गसंयुतेर्मूलम् ।**
**विषुवति विषुवत्कर्णश्छायाकर्णोऽन्यदा शङ्कुः ॥७॥**

विषुवति विषुवद्दिने मध्याह्ने द्वादशाङ्गुलशङ्कुरेव लम्बो लम्बज्या कल्प्या । तत्र या छाया साऽक्षज्या च कल्प्या । तद्वर्गसयुतेर्यन्मूल स विषुवत्कर्णो भवति । अन्यदाऽन्यस्मिन् दिने मध्याह्नादन्यस्मिन् काले वा पूर्वविधिना य. कर्णो उत्पद्यते स द्वादशाङ्गुलशङ्कोश्छायाकर्णो भवति ।

अत्रोपपत्तिः । 'क्रियतुलाधरसङ्क्रमपूर्वतोऽयनलवोत्थदिनैर्विषुवद्दिनम्' इति भास्करोक्तेन तत्र मध्याह्ने छाया विषुवती । ततः शङ्कुपलभावर्गयोगपदान्मूल विषुवत्कर्ण. स्फुट एव । त्रिज्या कर्ण. । लम्बज्या कोटिः । अक्षज्या भुजः । इत्यक्षक्षेत्रस्य सजातीयमपवर्तित लघु पलभाक्षेत्रमतोऽस्य कोटिभुजयोर्लम्बाक्षज्ये नामनी समुचिते एवेति । शङ्कुरित्यस्याग्रे सबन्धः ॥ ७ ॥

इदानीं सज्ञाविशेषानाह ।

**उन्नतजीवा कोटिश्छाया दृग्ज्या भुजो नतज्या वा ।**
**कर्णश्छायावृत्ते व्यासार्धं द्वयमतोऽन्यत्र ॥ ८ ॥**

शङ्कु. । उन्नतजीवा वा कोटिः । इत्येकपर्यायिन' शब्दाः । एव छाया दृग्ज्या नतज्या वेते शब्दा एकपर्यायाः । यत्रैते भुजकोटी तस्मिन् छायावृत्तेऽनयोर्भुजकोट्योर्वशेन यः कर्णस्तदेव व्यासार्धं ज्ञेयम् । अतोऽस्मादन्यत्रापि द्वय ज्ञेयम् । अर्थात् कोटिर्भुजश्चेति यद्द्वय तद्द्वयं तयोर्वर्गयोगपदव्यासार्धाद्वृत्ते कल्पनीयमिति ॥ ८ ॥

इदानीं लम्बाक्षज्ये आह ।

**शङ्कुच्छायाकृत्योस्त्रिज्याकृतितत्समासगुणहृतयोः ।**

**मूले लम्बाक्षज्ये तदंशकास्तद्धनुर्भागाः ॥ ९ ॥**

शङ्कुशब्देन द्वादशाङ्गुलशङ्कुस्तथा छायाशब्देनात्र पलभा गृह्यते । तेनायमर्थः । द्वादशकृतिः पलभाकृतिश्च त्रिज्याकृतिगुणा । उभयत्र तत्कृतिसमासेन तयोः शङ्कुपलभयोर्वर्गयोगेन हृता । तन्मूले क्रमेण लम्बाक्षज्ये भवतः । तयोर्धनुर्भागाश्च तदंशका लम्बाक्षभागा भवन्ति ।

अत्रोपपत्तिः । यदि पलकर्णवर्गेण द्वादशवर्गः कोटिवर्गः पलभावर्गश्च भुजवर्गो लभ्यते तदा त्रिज्यावर्गेण किं जातो

लम्बज्यावर्गः $= \frac{१४४ \ त्रि^2}{१४४ + प^2}$ । तथाऽक्षज्यावर्गः $= \frac{त्रि^2 प^2}{१४४ + प^2}$ ।

अत उपपन्नं मूलोक्तम् । अन्यत्सुगममिति ॥ ९ ॥

इदानीं प्रकारान्तरेण लम्बाक्षज्ये आह ।

**विषुवत्कर्णहृते वा शङ्कुच्छायाहते पृथक् त्रिज्ये ।**
**अक्षज्येतरजीवे लम्बाक्षांशोत्क्रमज्योने ॥ १० ॥**

त्रिज्ये पृथक् शङ्कुच्छायाहते द्वादशपलभाहते विषुवत्कर्णहृते वा लम्बाक्षज्ये भवतः । लम्बाक्षांशोत्क्रमज्योने त्रिज्ये वाऽक्षज्येतरजीवे अक्षज्यालम्बज्ये भवतः । अर्थाल्लम्बोत्क्रमज्योना त्रिज्याऽक्षज्या । अक्षोत्क्रमज्योना त्रिज्या लम्बज्या ।

अत्रोपपत्तिः । पूर्वार्धस्यानन्तरोक्तप्रकारान्तर्गता । उत्तरार्धस्य ज्योत्पत्त्या सुगमा ॥ १० ॥

पुनः प्रकारान्तरेण लम्बाक्षज्ये आह ।

**नवतेर्लम्बाक्षांशान् प्रोह्य ज्या चेतराऽक्षलम्बज्ये ।**
**शङ्कुच्छायागुणिते छायाद्वादशहृते वान्ये ॥ ११ ॥**

लम्बाक्षांशान् नवतेः प्रोह्य हित्वा ज्या साध्या तदा सा वा प्रकारान्तरेणेतरा ज्या स्यादर्थाल्लम्बांशोननवतेर्ज्याऽक्षज्या । अक्षांशोननवतेर्ज्या लम्बज्या । अक्षलम्बज्ये शङ्कुच्छायागुणिते द्वादशपलभाहते ततः क्रमेण छायाद्वादशहृते पलभाद्वादशहृते तदा वा प्रकारान्तरेणाऽन्ये

लम्बाक्षज्ये भवत । अर्थादक्षज्या द्वादशगुणा पलभाहृता लम्बज्या भवति । लम्बज्या पलभाहता द्वादशहृताऽक्षज्या भवति ।

अत्रोपपत्ति । पूर्वार्धस्य क्षेत्रोत्पत्त्या सुगमा । उत्तरार्धस्यालक्षेत्रानुपातेनातिसुगमा ॥ ११ ॥

इदानीं पुन प्रकारान्तरेणाह ।

**लम्बाक्षज्यावर्गं प्रोह्य त्रिज्याकृतेः पदं वान्या ।**
**अन्यत्र सर्वदोन्नतनतजीवांशानयनमेवम् ॥ १२ ॥**

त्रिज्याकृतेर्लम्बज्यावर्गं प्रोह्य पद यान्ह साऽन्याऽक्षज्या भवेत् । एव त्रिज्याकृतेरक्षज्यावर्गं प्रोह्य पद याऽन्या लम्बज्या भवेदिति । एवमन्यत्र सर्वदा नतोन्नतजीवांशानयन कार्यम । अर्थादुन्नतज्यावर्गोनात् त्रिज्यावर्गात् पद नतज्या । नतज्यावर्गोनात् त्रिज्यावर्गात पदमुन्नतज्या ततश्चापात्तयोर्भागा भवन्ति ।

अत्रोपपत्ति । लात्यक्षसिद्धान्तेन स्फुटा । 'त्रिज्ये पृथक् कोटि भुजाहते ते कर्णाहृते लम्बपलज्यके स्त ' इत्यादि भास्करप्रकार लम्बाक्षज्यानयने आचार्यप्रकारसमा एव ॥ १२ ॥ (गणिताध्यायत्रिप्रश्नाधिकारस्य १८ श्लोको द्रष्टव्य ।)

इदानीं दिनार्धनतांशक्रान्त्यंशज्ञाने सति पलज्ञानमाह ।

**इष्टदिनार्धनतांशक्रान्त्यंशैक्यान्तरं क्रियतुलादौ ।**
**अक्षांशा याम्यायां छायायामन्तरमजादौ ॥ १३ ॥**

क्रियतुलादौ सवितरि क्रमेणेष्टदिनार्धे नतांशना क्रान्त्यंशाना चैक्यमन्तर वाक्षभागा भवन्ति । अजादौ मेषादौ रवौ मध्याह्नच्छायाया याम्याया सत्या नतांशक्रान्त्यंशान्तरमेव पलभागा भवन्ति ।

अत्रोपपत्ति । 'नतांशापमांशान्तर तुल्यदिक्त्वे युतिर्भिन्नदिक्त्वे पलांशा भवेयु ' इति भास्करविधिना स्फुटा ॥ १३ ॥ (गणिताध्याय-त्रिप्रश्नाधिकारस्य ७१श्लोको द्रष्टव्य ।)

इदानीं मेषादिराशीनां चरखण्डसाधनमाह ।

मेषवृषमिथुनजीवा स्वाहोरात्रार्धचरदलप्राणान् ।
प्राग्वत् कृत्वा स्वाधो विशोध्य चरखण्डकप्राणाः ॥ १४ ॥

मेषवृषमिथुनजीवातः स्वाहोरात्रार्धे गुण्यास्ते प्राग्वत् स्पष्टाधिकारोक्तविधिना 'जिनभागज्यागुणिता' इत्यादिना चरासून् कृत्वा तान् स्वाधो विशोध्य चरखण्डप्राणा मेषादिराशित्रयस्य ज्ञेया इति ।

अत्रोपपत्तिः । 'मेषादिराशित्रितयस्य यानि चराख्यखण्डान्यसवः परिशोधितानी'त्यादिभास्करविधिना स्फुटा (स्पष्टाधि० गणिता० ) ॥ १४ ॥

इदानीं लङ्कोदयसाधनमाह ।

मिथुनाहोरात्रार्धं क्रियाद्यहोरात्रदलहृतं गुणितम् ।
तज्ज्याभिरासचापान्तराणि लङ्कोदयप्राणाः ॥ १५ ॥

स्पष्टार्थम् ।

उपपत्तिश्च 'मेषादिजीवा त्रिगृहद्युमौर्व्या क्षुण्णा हृता स्वस्वदिनज्यया वा' इत्यादिविधिना स्फुटा (स्प० अधि० गणि० भा० ) ॥ १५ ॥

इदानीं प्रकारान्तरेण लङ्कोदयसाधनमाह ।

ज्यावर्गात् क्रान्तिज्यावर्गोनात् स्वपदाहता त्रिज्या ।
स्वाहोरात्रार्धहृता चापमपोन्तराण्यथवा ॥ १६ ॥

स्पष्टार्थम् ।

अत्रोपपत्तिः । 'एकस्य राशेर्बृहती ज्यका या द्वयोस्त्रिभस्यापि कृतीकृतानाम्, इत्यादि भास्करविधिना स्फुटा । (गणिताध्याय स्पष्टाधिकारस्य ५४ श्लोको द्रष्टव्यः ।)

इदानीं स्वदेशोदयसाधनमाह ।

स्वचरासुभिरूनयुताः क्रमोत्क्रमस्थैः क्रमोत्क्रमस्थास्ते ।
उदयप्राणा व्यस्ताश्चार्के तात्कालिकं कृत्वा ॥ १७ ॥

ते पूर्वप्रकारागता मेषादिराशित्रयोदयाः क्रमशः उत्क्रमश्च धार्याः । ततस्ते यथाक्रम क्रमोत्क्रमस्थैः स्वचरासुभिरूनयुताः क्रमो मेषा-

पूर्वापरखेटतः शङ्कुमूलं यद्दिक् भ्रमति तद्विपरीतं दिग्मध्यस्थित शङ्कोश्छायाग्रं भ्रमतीति स्फुटोऽर्थः ।

वासना च पूर्वश्लोकतः स्फुटा ॥ ६ ॥

इदानीं विषुवत्कर्णमाह ।

**शङ्कुर्लम्बश्छायाक्षज्या तद्वर्गसंयुतेर्मूलम् ।**
**विषुवति विषुवत्कर्णश्छायाकर्णोऽन्यदा शङ्कुः ॥७॥**

विषुवति विषुवद्दिने मध्याह्ने द्वादशाङ्गुलशङ्कुरेव लम्बो लम्बज्या कल्प्या । तत्र या छाया साऽक्षज्या च कल्प्या । तद्वर्गसंयुतेर्यन्मूलं स विषुवत्कर्णो भवति । अन्यदाऽन्यस्मिन् दिने मध्याह्नादन्यस्मिन् काले वा पूर्वविधिना यः कर्ण उत्पद्यते स द्वादशाङ्गुलशङ्कोश्छायाकर्णो भवति ।

अत्रोपपत्तिः । 'क्रियतुलाधरसङ्क्रमपूर्वतोऽयनलवोत्थदिनैर्विषुवद्दिनम्' इति भास्करोक्तेन तत्र मध्याह्ने छाया विषुवती । ततः शङ्कुपलभावर्गयोगपदान्मूलं विषुवत्कर्णः स्फुट एव । त्रिज्या कर्णः । लम्बज्या कोटिः । अक्षज्या भुजः । इत्यक्षक्षेत्रस्य सजातीयमपवर्तितं लघु पलभाक्षेत्रमतोऽस्य कोटिभुजयोर्लम्बाक्षज्ये नामनी समुचिते एवेति । शङ्कुरित्यस्यापि संबन्धः ॥ ७ ॥

इदानीं संज्ञाविशेषानाह ।

**उन्नतजीवा कोटिश्छाया दृग्ज्या भुजो नतज्या वा ।**
**कर्णश्छायावृत्ते व्यासार्धं द्वयमतोऽन्यत्र ॥ ८ ॥**

शङ्कुः । उन्नतजीवा वा कोटिः । इत्येकपर्यायिनः शब्दाः । एवं छाया दृग्ज्या नतज्या चेति शब्दा एकपर्यायाः । यश्चैते भुजकोटी तस्मिन् छायावृत्तेऽनयोर्भुजकोट्योर्योगेन यः कर्णस्तदेव व्यासार्धं ज्ञेयम् । अतोऽस्मादन्यत्रापि द्वयं ज्ञेयम् । अर्थात् कोटिर्भुजश्चेति यद्द्वयं तद्द्वयं तयोर्वर्गयोगपदव्यासार्धोद्भवे वृत्ते कल्पनीयमिति ॥ ८ ॥

इदानीं लम्बाक्षज्ये चाह ।

**शङ्कुच्छायाकृत्योस्त्रिज्याकृतितत्समासगुणहृतयोः ।**

इदानीं मेषादिराशीनां चरखण्डसाधनमाह ।

**मेषवृषमिथुनजीवा स्वाहोरात्रार्धचरदलप्राणान् ।**
**प्राग्वत् कृत्वा स्वाधो विशोध्य चरखण्डकप्राणाः ॥ १४ ॥**

मेषवृषमिथुनजीवातः स्वाहोरात्रार्धं द्युज्यावृत्ते प्राग्वत् स्पष्टाधिकारोक्तविधिना 'जिनभागज्यागुणिता' इत्यादिना चरासून् कृत्वा तान् स्वाधो विशोध्य चरखण्डप्राणा मेषादिराशित्रयस्य ज्ञेया इति ।

अत्रोपपत्तिः । 'मेषादिराशित्रितयस्य यानि चराण्यधोऽधः परिशोधितानी'त्यादिभास्करविधिना स्फुटा (स्पष्टाधि॰ गणिता॰) ॥ १४ ॥

इदानीं लङ्कोदयसाधनमाह ।

**मिथुनाहोरात्रार्धं क्रियाद्यहोरात्रदलहृतं गुणितम् ।**
**तज्ज्याभिरासचापान्तराणि लङ्कोदयप्राणाः ॥ १५ ॥**

स्पष्टार्थम् ।

उपपत्तिश्च 'मेषादिजीवा त्रिगृहद्युमौर्व्या गुण्या हृता स्वस्वदिनज्यया वा' इत्यादिविधिना स्फुटा (स्प॰ अधि॰ गणि॰ भ॰) ॥ १५ ॥

इदानीं प्रकारान्तरेण लङ्कोदयसाधनमाह ।

**ज्यावर्गात् क्रान्तिज्यावर्गोनात्तत्पदाहता त्रिज्या ।**
**स्वाहोरात्रार्धहृता चापश्चापान्तराण्यथवा ॥ १६ ॥**

स्पष्टार्थम् ।

अत्रोपपत्तिः । 'एकस्य राशेर्बृहती ज्यका या द्वयोस्त्रिभस्यापि कृतीकृतानाम्, इत्यादि भास्करविधिना स्फुटा । (गणिताध्याय स्पष्टाधिकारस्य ५४ श्लोको द्रष्टव्य. ।)

इदानीं स्वदेशोदयसाधनमाह ।

**स्वचरासुभिरूनयुताः क्रमोत्क्रमस्थैः क्रमोत्क्रमस्थास्ते ।**
**उदयप्राणा व्यस्ताश्चार्कं तात्कालिकं कृत्वा ॥ १७ ॥**

ते पूर्वप्रकारागता मेषादिराशित्रयोदयाः क्रमस्था उत्क्रमस्थाश्च धार्याः । ततस्ते यथाक्रमं क्रमोत्क्रमस्थैः स्वचरासुभिरूनयुताः सन्तो मेषा-

द्विगुणा स्वदेशे उदया भवन्ति । तत एत एव व्यस्तास्तुलादिषण्णा मुदयप्राणा ज्ञेयाः । 'अर्के तात्कालिकं कृत्वा' इत्यस्याग्रे सम्बन्धः ।

अत्रोपपत्तिः । 'लङ्काद्रिभूषा गुणगोऽद्रिचन्द्राः'-इत्यादिभास्करविधिना स्फुटा (स्प. अधि. गणि. भा.) ॥ १७ ॥

इदानीं स्वदेशे लग्नानयनमाह ।

रविभुक्तहीनराशेः कला गुणाः स्वोदयासुभिर्भक्ताः ।
राशिकलाभिर्लब्धाः प्रश्नासुभ्योऽसवः शोध्याः ॥ १८ ॥
प्रक्षिप्य राश्यभुक्तं शेषासुभ्यः क्रमेण यावन्तः ।
शुध्यन्त्युदयाः सूर्ये तावन्तो राशयः क्षेप्याः ॥ १९ ॥
शेषात्रिंशद्गुणितादविशुद्धस्योदयासुभिर्विभजेत् ।
लब्धं भागादि रवौ प्रक्षेप्यं स्यात्तथाकृते लग्नम् ॥ २० ॥

रविभुक्तहीनराशेः कला भोग्यकला । प्रश्नासुभ्य इष्टकालासुभ्यः । राश्यभुक्तं राशिभोग्यभागान् सूर्ये प्रक्षिप्य संयोज्य । शेषं स्पष्टार्थम् ।

अत्रोपपत्तिः । 'तात्कालिकार्कोदय एतस्य राशेर्भुक्तभागैर्गुणितोदयात् स्यात्' इत्यादि भास्करविधिना स्फुटा । (त्रिप्र. भा. गणि.) ॥ १८-२० ॥

इदानीं लग्नात् कालानयनमाह ।

रविराश्यभुक्तलिप्तास्तदुदयगुणिता हृता गृहकलाभिः ।
लब्धं प्राणाः स्थाप्याः प्रक्षिप्यार्के गृहाभुक्तम् ॥ २१ ॥
तावत्सूर्ये राशीन् क्षिपेत् समं राशिभिर्यावत् ।
क्षिप्तगृहाणां प्राणान् प्रक्षिप्य स्थापितेष्वसुषु ॥ २२ ॥
तदधिककलोदयवधं राशिकलाभिर्भजेत् फलप्राणान् ।
प्रक्षिप्य प्राणेषु प्राणाः सूर्योदयादसकृत् ॥ २३ ॥

गृहाभुक्तं भोग्यकलाः । राशिभिर्लग्नराशिभिः । समं तुल्यम् । तदधिककला लग्नभुक्तकलाः । उदयो लग्नराश्युदयप्राणाः । शेषं स्पष्टार्थम् ।

अत्रोपपत्तिः । 'अर्कस्य भोग्यस्तनुभुक्तयुक्तो मध्योदयाढ्यः समयो विलग्नादि' इत्यादि भास्करविधिना स्फुटा ( त्रि प्र० ग० व )॥ २१–२३॥

इदानीं विलोमलग्न तत कालानयनमाह ।

प्रागुदये प्रश्नासुभिरूनोऽर्को भुक्तराशिभिर्लग्नम् ।
कृत्वैवमूनमर्कं लग्नसमं प्राग् भवेत् कालः ॥ २४ ॥

प्रश्नासुभिः प्राक् पूर्वमुदये लग्नेऽपेक्षिते भुक्तराशिभिर्भुक्तभागैः भुक्तै राशिभिश्चार्क ऊनस्तदा लग्न भवेत् । लग्नात् कालानयने चार्कं लग्नसममून कृत्वा यत्र प्राक् सूर्योदयात् प्राक् काल इष्टकालो भवेत् । यथोक्तैर्भागैर्यैराशिभिरूनोऽर्को लग्नसमो भवेत्तत्सम्बन्धिनामसूना योग इष्टकालो भवेत् ।

अत्रोपपत्तिः । 'भुक्तासुशुद्धैर्विपरीतलग्न भुक्ताशगेहाप्तलवोनितोऽर्कः' इत्यादि भास्करविधिना स्फुटा ( त्रि प्र० ग )॥ २४ ॥

इदानीमिष्टशङ्कुमाह ।

गतशेषाल्पस्याह्नः सौम्येतरगोलयोश्चरार्धेन ।
ऊनाधिकस्य जीवा स्वाहोरात्रार्धसङ्गुणिता ॥ २५ ॥
त्रिज्याहृता युतोना क्षितिज्यया सौम्ययाम्ययोश्छेदः ।
छेदोऽवलम्बकगुणो व्यासार्धविभाजितः शङ्कुः ॥ २६ ॥

अह्नः दिवसस्य गतशेषयोर्योऽल्पस्तस्यायोद्गतकालस्य सौम्येतरगोलयोश्चरार्धेन क्रमेणोनाधिकस्य जीवा सूत्र द्युज्यासङ्गुणा त्रिज्याहृता कला भवतीत्यर्थः । सा सौम्ययाम्ययोर्गोलयोः क्षितिज्यया युतोना छेद इष्टहृतिर्भवति । स छेदोऽवलम्बकेन लम्बज्यया गुणो व्यासार्धेन त्रिज्यया विभाजितः शङ्कुरिष्टो भवेदिति ।

अत्रोपपत्तिः । 'चरोनताढ्यनयुतान्त्यरेणे' त्यादिभास्करविधिना छेदानयन सुगमम् । ततस्त्रिज्यया यदि लम्बज्या कोटिस्तदा छेदेन किं जात इष्टशङ्कुरिति ॥ २५–२६ ॥

इदानीं प्रकारान्तरेण शङ्कु ततो दृग्ज्या चाह ।

विषुवत्कर्णविभक्तश्छेदो वा द्वादशाहतः शङ्कुः ।

**शङ्कुकृतिविहीनाया व्यासार्धकृतेः पदं दृग्ज्या ॥ २७ ॥**

स्पष्टार्थम् । उपपत्तिरत्राप्यनुपातेन स्फुटा ॥ २७ ॥

इदानीं छायाकर्णावाह ।

**दृग्ज्या द्वादशगुणिता विभाजिता शङ्कुना फलं छाया ।**
**व्यासार्धं छेदहृतं विषुवत्कर्णाहतं कर्णः ॥ २८ ॥**

स्पष्टार्थम् ।

अत्रोपपत्तिः । पूर्वार्धस्य 'दृग्ज्यात्रिजीवे रविशङ्कुगे ते शङ्कुद्युति भाश्रवणौ भवेताम्' इत्यादिभास्करविधिना स्फुटा । कर्णानयनेऽनुपातो यदि विषुवत्कर्णेन द्वादश कोटिस्तदा छेदेन किं जात इष्टशङ्कुः । पुनरिष्टशङ्कुना यदि त्रिज्या कर्णस्तदा द्वादशाङ्गुलशङ्कुना किं जातश्छायाकर्णः $= \frac{त्रि \times १२}{इश} = \frac{१२ त्रि}{\frac{१२ छे}{विक}} = \frac{विक \cdot त्रि}{छे}$ । अत उपपन्नं कर्णानयनम् ।

इदानीं प्रकारान्तरेण कर्णानयनमिष्टान्त्यां चाह ।

**गुणितं वा द्वादशभिर्व्यासार्धं शङ्कुना हृतं कर्णः ।**
**जीवा च्यवृद्धिज्यायुतहीना ज्या क्रियतुलादौ ॥ २९ ॥**

जीवा गतशेषाल्पस्य गोलक्रमाच्चरार्धोनयुतस्य । अर्थात् सूत्रम् । सा चयवृद्धिज्यया चरज्यया क्रियतुलादौ युतोना । एवं ज्या-इष्टान्त्या भवेत् ।

अत्रोपपत्तिरतिस्पष्टा ॥ २९ ॥

इदानीं प्रकारान्तरेण छेदाद्यानयनमाह ।

**स्वाहोरात्रार्धगुणा व्यासार्धविभाजिताऽथवा छेदः ।**
**शङ्क्वादि प्राग्वज्ज्यास्वाहोरात्रार्धघातहृता ॥ ३० ॥**

सा पूर्वसाधितेष्टान्त्या द्युज्यागुणा त्रिज्याहृताऽथवा प्रकारान्तरेण छेद इष्टहृतिः स्यात्ततः प्राग्वत् शङ्क्वादि भवेत् । ज्याया इष्टान्त्यायाः स्वाहोरात्रार्धस्य द्युज्यायाश्च यो घातस्तेन हृता का व्यासार्धकृतिरित्यग्रे संबन्धः ।

अत्रोपपत्तिः । पूर्वार्धस्यातिसुगमा । उत्तरार्धस्याग्रिमश्लोकेन सह भविष्यति ॥ ३० ॥

इदानीं प्रकारान्तरेण छायाकर्णं शङ्कुं चाह ।

**व्यासार्धकृतिर्गुणिता विषुवत्कर्णेन वा भवेत् कर्णः ।**
**लम्बगुणो वा घातः शङ्कुर्व्यासार्धकृतिभक्तः ॥ ३१ ॥**
**घातो वाऽर्कगुणस्त्रिज्याविषुवत्कर्णवधहृतः शङ्कुः ।**
**कर्णकृतेः संशोध्य द्वादशवर्गं पदं छाया ॥ ३२ ॥**

घात इष्टान्त्याद्युज्याघात । शेषं स्पष्टार्थम् ।

अत्रोपपत्तिः । इष्टान्त्या द्युज्यागुणा त्रिज्याहृता जातश्छेदः $= \frac{\text{ज्या द्यु}}{\text{त्रि}}$ । ततो 'व्यासार्धं छेदहृतं विषुवत्कर्णाहतं कर्णं' इत्यादिना छायाकर्णः $= \frac{\text{त्रि}^2 \text{ विक}}{\text{ज्या द्यु}}$ । 'त्रिज्यार्कघातः श्रुतिहृच्चरः स्या'दित्यादि भास्करोक्तेन विधिना इष्टशङ्कुः $= \frac{१२ \text{ त्रि} \times \text{ज्या द्यु}}{\text{त्रि}^2 \text{ विक}} = \frac{१२ \text{ ज्या द्यु}}{\text{त्रि विक}}$

$= \frac{१२ \text{ त्रि}}{\text{विक}} \cdot \frac{\text{ज्या द्यु}}{\text{त्रि}^2} = \frac{\text{लज्या ज्या द्यु}}{\text{त्रि}^2}$ इत्यनेन शङ्क्वानयनमुपपद्यते । छायानयनोपपत्तिरतिसुगमा ॥ ३१–३२ ॥

इदानीमिष्टच्छेदान्त्ययोर्विशेषमाह ।

**अल्पाः प्रश्नासूनां यदि बहवश्चरदलासवः क्षितिजा ।**
**हृतयोना जीवोना त्वयवृद्धिज्योक्तवच्छेषम् ॥ ३३ ॥**

यदि प्रश्नासूनामिष्टासूना सख्या अल्पाश्चरासवश्च बहवश्च तत्र गोले तदा चरासुभ्य इष्टासूनपास्य शेषस्य जीवा सूत्रसंज्ञा स्यात् । सा द्युज्यागुणा त्रिज्याभक्ता ऽर्थात् कला स्यात् । तया हृतयोना क्षितिजा कुज्या छेदो भवेत् तथा क्षयशङ्कुज्या चरज्या च जीवया सूत्रसंज्ञयोना शेषमिष्टान्त्या स्यात् । तत इष्टहृत्यन्त्याभ्यां शेषं शङ्क्वादि तत्तत्साध्यमित्यर्थः । अत्र चतुर्वेदाचार्यस्यापीदृशी व्याख्या ।

अत्रोपपत्तिः । 'यत्र क्वचिच्छुद्धिविधौ यदेह शोध्यं न शुध्येद्वि-परीतशुद्धा' इत्यादि भास्करविधिना विपरीतशोधनेन स्फुटा ॥ ३३ ॥ (गणिताध्याय-त्रिप्रश्नाधिकारस्य ६३ श्लोको द्रष्टव्यः ।)

इदानीं हृत्यन्त्ययोः साधनमाह ।

**स्वाहोरात्रार्धमुदग्दक्षिणयोः क्षितिजया युतविहीनम् ।**
**द्युदलान्त्यज्या त्रिज्या क्षयवृद्धिज्यायुतोनान्त्या ॥ ३४ ॥**

उदग्दक्षिणयोर्गोलयोः स्वाहोरात्रार्धं द्युज्या क्षितिज्यया यथाक्रमं युतविहीनं तदा द्युदलान्त्यज्या हृतिर्भवेत् । एवं गोलक्रमेण त्रिज्या क्षयवृद्धिज्यया चरज्यया युतोनाऽन्त्या स्यादिति ।

अत्रोपपत्तिः । 'क्षितिज्ययैवं द्युगुणश्च सा हृतिश्चरज्ययैवं त्रिगुणोऽपि सान्त्यका' इत्यादि भास्करविधिना स्फुटा ( त्रि प्र· गणि·) ॥ ३४ ॥

इदानीं प्रकारान्तरेणेष्टकर्णसाधनमाह ।

**छेदहृता द्युदलान्त्या दिनार्धकर्णेन सङ्गुणा कर्णः ।**
**भक्ता ज्ययाथवान्त्या दिनार्धकर्णाहता कर्णः ॥ ३५ ॥**

द्युदलान्त्या हृतिर्दिनार्धकर्णेन दिनार्धच्छायाकर्णेन गुणा छेदेन हृत्या हृता फलं कर्णो इष्टकर्णो भवेत् । अथवाऽन्त्या दिनार्धकर्णगुणा ज्यया इष्टान्त्यया भक्ता कर्णो भवेत् ।

अत्रोपपत्तिः । 'त्रिज्यार्कघातः श्रुतिहृद्भवः स्या' दित्यादिभास्कर-विधिना मध्याह्नशङ्कुः $= \frac{१२ त्रि}{मक}$ । ततोऽनेनानुपातेन यदि हृत्या दिनार्धशङ्कुस्तदेष्टहृत्या किं जात इष्टशङ्कुः $= \frac{१२ त्रि· इहृ}{मक हृ} = \frac{१२ त्रि}{मक} · \frac{इहृ}{हृ}$

ततो 'दृग्ज्यात्रिजीवे रविसङ्गुणे ते शङ्कूद्धृते भाश्रवणौ भवेताम्'-इत्यादि-भास्करोक्तेन इष्टच्छायाकर्णः $= \frac{१२ त्रि· मक· हृ}{१२ त्रि इहृ} = \frac{मक हृ}{इहृ}$

$= \frac{१२ त्रि· मक अं}{१२ त्रि इअं} = \frac{मक· अं}{इअं}$ । अत उपपन्नं सर्वम् ।

हृतिः = $\frac{\text{विक}}{१२}\cdot\frac{१२\ \text{त्रि}}{\text{इकाक}} = \frac{\text{विक त्रि}}{\text{इकाक}}$ । अत कुज्यासंस्कारेण कलानयनं सुगमम् । ततो द्युज्यानुपातेन लब्धं सूत्रम् । तस्य धनुरुन्मण्डलादुन्नतकालस्तत्र चरसंस्कारेण स्वदेशे पूर्वापरकपालयोरुन्नतकाल एव दिनगतशेषप्राणाः । आप्तं सूत्रं नतकालकोटिज्यासमं व्यासार्धात् विशोध्य शेषं नतकालोत्क्रमज्या । उत्क्रमज्याखण्डैस्तच्चापं पूर्वापरकपालयोर्नतप्राणा भवन्तीति सर्वं स्फुटम् ॥ ३८–४० ॥

इदानीं प्रकारान्तरेणोन्नतकालं नतकालं चाह ।

स्वाहोरात्रार्धेन छायाकर्णेन भक्तायाः ।
विषुवत्कर्णगुणाया व्यासार्धकृतेः फलं सौम्ये ॥ ४१ ॥
क्षयवृद्धिज्याहीनं युक्तं याम्ये धनुश्चरप्राणैः ।
सौम्ये युतं विहीनं याम्ये प्रागपरयोः प्राणाः ॥ ४२ ॥
अह्नो गतावशेषाः फलमन्त्याया विशोध्य शेषस्य ।
धनुरुत्क्रमजीवाभिः पूर्वापरयोर्नतप्राणाः ॥ ४३ ॥

विषुवत्कर्णगुणाया व्यासार्धकृतेः स्वाहोरात्रार्धेन द्युज्यया छायाकर्णेन च भक्तायाः फलं ग्राह्यम् । तत् सौम्ये गोले क्षयवृद्धिज्यया चरज्यया हीनं याम्ये युक्तं यद्भवेत्तस्य धनुरुत्तरगोले चरासुभिर्युतं याम्ये विहीनं तदा पूर्वापरकपालयोरह्नो दिवसस्य गतावशेषा उन्नतकालो भवेत् । शेषं स्पष्टार्थम् ।

अत्रोपपत्तिः । इष्टशङ्कु = $\frac{१२\ \text{त्रि}}{\text{इकाक}}$ । अत इष्टहृतिरक्षक्षेत्रानुपातेन = $\frac{\text{विक}}{१२}\cdot\frac{१२\ \text{त्रि}}{\text{इकाक}} = \frac{\text{विक त्रि}}{\text{इकाक}}$ । द्युज्यानुपातेन इष्टान्त्या = $\frac{\text{विक त्रि}^2}{\text{द्युज्या इकाक}}$

अन्यत् सर्वं भास्करत्रिप्रश्नाधिकारतः स्फुटम् ॥ ४१–४३ ॥

इदानीं पुनः प्रकारान्तरेणोन्नतकालं नतकालं चाह ।

दिनदलकर्णगुणान्त्या छायाकर्णोद्धृता फलोनान्त्या ।
शेषस्योत्क्रमजीवा धनुर्दिनार्धान्नतप्राणाः ॥ ४४ ॥

**चरदलजीवोनाधिकफलक्रमज्याधनुश्चरार्धेन ।**
**युतहीनं पूर्वाह्णे दिवसगतं शेषमपराह्णे ॥ ४५ ॥**

अन्त्या दिनार्धकर्णेन गुणा इष्टच्छायाकर्णेन भक्ता यल्लब्धं तत् फलसंज्ञं ज्ञेयम् । शेषं सुगमम् ।

अत्रोपपत्तिः । दिनदलशङ्कुः = १२ त्रि / दिदक । इष्टशङ्कुः = १२ त्रि / इक । दिनार्धशङ्कुकोट्या यदि हृतिर्लभ्यते तदाभीष्टशङ्कुना किं जातेष्टहृतिः = हृ· दिदक / इक । ततो द्युज्यानुपातेनेष्टान्त्या = त्रि हृ दिदक / द्यु इक = अन्त्या दिदक / इक । इष्टान्त्याया एव फलसंज्ञा । गोलक्रमात् चरदलजीवयोरूनमधिकं च फलं सूत्रसंज्ञं भवति तस्य क्रमज्याखण्डैर्धनुरुन्मण्डलादुन्नतकालस्ततो दिनगतशेषानयनं सुगमम् । शेषवासना चातिस्फुटा ॥ ४४–४५ ॥

इदानीं नवत्यधिकचापस्योत्क्रमज्यां त्रिज्यातोऽधिकाया उत्क्रमज्यायाश्चापं चाह ।

**उत्क्रमजीवाभ्यधिकक्रमज्यया संयुतं धनुर्धनुषा ।**
**व्यस्तविशुद्धौ हीनाश्चरासवः पूर्ववच्छेषम् ॥ ४६ ॥**

अत्र व्यासार्धे नवतेः कलाः खवाब्धिबाणाः ५४०० इति द्रुयमध्याहार्यम् । तेनायमर्थः । खवाब्धिबाणेभ्यो यावत्यः कला अभ्यधिकास्तासां क्रमज्यया युतं व्यासार्धं (त्रिज्या) खवाब्धिबाणाधिकचापस्योत्क्रमज्या स्यात् । एवं त्रिज्यातो यावत्यधिकोत्क्रमज्या क्रमज्याखण्डैस्तच्चापं खवाब्धिबाणैः संयुतं धनुः स्यात् । एवमुत्तरगोले चरासुभ्य उन्नतकालासवो यदाल्पास्तदा व्यस्तविशुद्धिस्तस्यां सत्यां धनुषोन्नतकालासुभिश्चरासवो हीनास्तज्ज्या विपरीतं सूत्रसंज्ञं भवेत् । ततः शेषमिष्टहृत्यादिकं पूर्ववज्ज्ञेयं किन्तु धनर्णयोरन्तरमेव योग इति बीजयुक्त्या सुधिया योगे वियोगो विधेयः ।

अत्रोपपत्तिः । विपरीतक्रियया सुगमा ॥ ४६ ॥

इदानीं सममण्डलस्थेऽर्के छायाकर्णसाधनमाह ।

**द्वादशविषुवच्छायागुणिते पृथगक्षलम्बजीवे वा ।**
**क्रान्तिहृते सममण्डलकर्णौ प्राग्वत् पृथक् छाये ॥ ५३ ॥**

अक्षज्या द्वादशगुणा वा लम्बज्या विषुवच्छायागुणा । एते द्वे क्रान्तिहृते क्रान्तिज्याहृते तदा सममण्डलकर्णौ भवतः । ताभ्यां प्राग्वत् पूर्वविधिना पृथक् छाये साध्ये ।

अत्रोपपत्तिः । अक्षक्षेत्रानुपातेन समशङ्कुः $= \frac{\text{त्रि· क्रांज्या}}{\text{अक्षज्या}}$ । ततो 'द्युज्याचितीजीवे रविसङ्गुणे ते शङ्कुद्धृते भाश्रवणौ भवेतां' मित्यादिभास्करविधिना सममण्डलकर्णः $= \frac{\text{१२ त्रि}}{\text{स शं}} = \frac{\text{१२ त्रि· अक्षज्या}}{\text{त्रि क्रांज्या}} = \frac{\text{१२ अक्षज्या}}{\text{क्रांज्या}}$ $= \frac{\text{१२ अक्षज्या लम्बज्या}}{\text{लम्बज्या क्रांज्या}} = \frac{\text{वि· लम्बज्या}}{\text{क्रांज्या}}$ । अत उपपन्नौ प्रकारौ ॥ ५३ ॥

इदानीं कोणशङ्कोरानयनमाह ।

**अर्काग्रावर्गोनं त्रिज्यावर्गार्धमर्ककृतिगुणितम् ।**
**आद्योऽन्योऽग्राद्वादशविषुवच्छायावधो हृतयोः ॥ ५४ ॥**
**विषुवच्छायाकृत्या द्व्यगसंयुतयाऽन्यकृतियुतादाद्यात् ।**
**पदमन्ययुतविहीनं सौम्येतरगोलयोः शङ्कुः ॥ ५५ ॥**
**विदिशोः सौम्येतरयोरुत्तरगोले पदोनयुक्तोऽन्यः ।**
**सममण्डलदक्षिणगे न च्छाया नाडिकाः प्राग्वत् ॥ ५६ ॥**

अस्य व्याख्या 'त्रिज्यावर्गार्धतोऽग्रज्यावर्गोनाद् द्वादशाहता' इत्यादिप्रसिद्धसूर्यसिद्धान्तप्रकारेण स्फुटा ।

अत्रोपपत्तिः । कोणवृत्तस्थेऽर्के शङ्कुमूलप्राचीपरयोरन्तरं शङ्कुमूलदक्षिणोत्तरयोरन्तरेण सममिति क्षेत्रमितितः स्फुटम् । अथ शङ्कुप्रमाणं य । ततोऽनुपातेन शङ्कुतलम् $= \frac{\text{त्रि य}}{\text{१२}}$ । उत्तरदक्षिणगोलयोः क्रमेण भुजमानम् $= \text{अ} \pm \frac{\text{त्रि· य}}{\text{१२}}$ । भुजवर्गो द्विगुणो दृग्ज्यावर्गो $= २\left(\frac{\text{१२ अ} \pm \text{त्रि य}}{\text{१२}}\right)^२$

यद्तिथिकरणेर्त्तदिवसमासानामित्यत्र योगपदाभावात् स्पष्टीक रणाध्याये योगसाधन नाचार्यस्येति स्पष्ट प्रतीयते ॥ ५७-५८ ॥

इदानीं दूषणान्युपसंहरति ।

**इति बहुधा विवदन्ते ग्रहार्थिनः साग्रहा इव प्रसभम् ।**
**ब्राह्मस्फुटसिद्धान्ते रवीन्दुभूयोगमज्ञात्वा ॥ ५६ ॥**

एव ब्राह्मस्फुटसिद्धान्ते आचार्यकृतेऽस्मिन् सिद्धान्ते यो रविः । इन्दुः । भू भूपरिमाणम् । योगो ग्रहयुत्याद्यधिकार । तत् सर्वमज्ञात्वा ग्रहार्थिनो ज्योतिर्विदः प्रसभं हठात् साग्रहा आग्रहिण इव बहुधा विवदन्ते विवाद कुर्वन्ति दृग्गणितैक्ययोरसाम्यादिति आचार्यस्यात्मप्रशंसैव ।

अत्र चतुर्वेदाचार्यः ।
'एतद्वाक्यमाचार्यस्येति' ॥ ५९ ॥

इदानीमितिकर्तव्यतामाह ।

**तन्त्रभ्रंशे प्रतिदिनमेवं विज्ञाय धीमता यत्नः ।**
**कार्यस्तस्मिन् यस्मिन् दृग्गणितैक्यं सदा भवति ॥ ६० ॥**

तन्त्रभ्रंशे सति सदीयतन्त्रगणनया दृग्विरोधे सति एव पूर्वोक्त प्रतिदिन स्पष्टीकरणाद्य वेधादिना विज्ञाय तस्मिन् तन्त्रे बीजादिना तथा यत्नः कार्यो यथा दृग्गणितैक्य भवति । एव यस्मिन् तन्त्रे सदा दृग्गणितैक्य भवति तदेव तन्त्रमादरणीयमिति ।

अत्र चतुर्वेदाचार्यः ।
'मध्यस्थमवलम्ब्य स्वार्थे कुरुत इत्यर्थः' ॥ ६० ॥

इदानीं स्वसिद्धान्तप्रशंसामाह ।

**चन्द्ररविग्रहणेन्दुच्छायादिषु सर्वदा यतो ब्राह्मे ।**
**दृग्गणितैक्यं भवति स्फुटसिद्धान्तस्ततो ब्राह्मः ॥ ६१ ॥**

यतो ब्राह्मे ब्रह्मसिद्धान्ते मद्रचितेऽस्मिन् तन्त्रे चन्द्ररविग्रहणेन्दुच्छायादिषु सर्वदा दृग्गणितैक्य भवति ततस्तस्मादय ब्राह्मो मदीयः एव स्फुटसिद्धान्त आदरणीय इति ॥ ६१ ॥

इदानीं गोलज्ञप्रशंसामाह ।

**गोलज्ञो जानात्येषां सर्वं दूषणानि कथितानि ।**

**आर्यभटाद्युक्तानां तन्त्राणां दूषणाध्याये ॥ ६२ ॥**

सर्वो गोलज्ञ इह दूषणाध्याये एषामार्यभटाद्युक्तानां तन्त्राणां कथितानि दूषणानि जानाति मूर्खाश्च प्राचीनतन्त्रदूषणेन मामुपहसन्तो निन्दयिष्यन्तीत्येवाचार्याशयः ।

अत्र चतुर्वेदाचार्यः ।

'गोलज्ञः सर्वेषामेव सर्वाणि दूषणानि वेत्तीत्यर्थः.' ॥ ६२ ॥

इदानीमुपसंहारमाह ।

**इति कथिततन्त्रगणकान् पठितैरपि दूषणैः करोत्यज्ञान् ।**

**तन्त्रपरीक्षार्याणां त्रिषष्टिरेकादशोऽध्यायः ॥ ६३ ॥**

## इति श्रीब्राह्मस्फुटसिद्धान्ते दूषणाध्यायो नाम एकादशोऽध्यायः ॥ ११ ॥

इत्येवमेषमार्याणां त्रिषष्टिस्तन्त्रपरीक्षानामैकादशोऽध्यायः पठितैर्दूषणैरपि कथिततन्त्रगणकान्—आर्यभट-श्रीषेण-विष्णुचन्द्रानुयायिनोऽज्ञान् मूर्खान् करोति । खण्डनमाकर्ण्य ते विवर्णवदना मूर्खा इव भवन्तीत्यर्थः ॥ ६३ ॥

मधुसूदनसूनुनोदितो यस्तिलकः श्रीपृथुनेह जिष्णुजोक्ते ।
हृदि तं विनिधाय नूतनोऽयं रचितो दूषणके सुधाकरेण ॥

इति श्रीकृपालुदत्तसूनुसुधाकरद्विवेदिविरचिते ब्राह्मस्फुटसिद्धान्तनूतनतिलके तन्त्रपरीक्षाध्यायो नामैकादशोऽध्यायः ॥ ११ ॥



# अथ गणिताध्यायः ।



तत्रादौ तदारम्भप्रयोजनमाह ।

**परिकर्मविंशतिं यः सङ्कलिताद्यां पृथग्विजानाति ।**
**अष्टौ च व्यवहारान् छायान्तान् भवति गणकः सः ॥ १ ॥**

यः सङ्कलिताद्यां परिकर्मविंशतिं छायाव्यवहारान्तानष्टौ व्यवहारांश्च पृथक् पृथग्विजानाति स गणको गोलज्ञत्वाधिकारी भवति । अतस्तद्वर्णनमावश्यकम् ।

सङ्कलितम् । व्यवकलितम् । प्रत्युत्पन्नो गुणनम् । भागहारः । वर्गः । वर्गमूलम् । घनः । घनमूलम् । पञ्च जातयः । त्रैराशिकम् । व्यस्तत्रैराशिकम् । पञ्चराशिकम् । सप्तराशिकम् । नवराशिकम् । एकादशराशिकम् । भाण्डप्रतिभाण्डं चेति कर्मविंशतिः । व्यवहाराश्च—मिश्रकः । श्रेढी । क्षेत्रम् । खातम् । चितिः । क्राकचिकः । राशिः । छाया चेत्यष्टौ ॥ १ ॥

इदानीं सङ्कलितव्यवकलिते चाह ।

**विपरीतच्छेदगुणा राश्योश्छेदांशकाः समच्छेदाः ।**
**सङ्कलितेंऽशा योज्या व्यवकलितेंऽशान्तरं कार्यम् ॥ २ ॥**

राश्योश्छेदांशका विपरीतच्छेदगुणा मिथश्छेदगुणा एव समच्छेदास्तुल्यहरा भवन्ति । शेषं स्पष्टार्थम् । 'अन्योन्यहाराभिहतौ हरांशौ राश्योः समच्छेदविधानमेवम्'—इत्यादि भास्करोक्तमेतदनुरूपमेव ।

अत्र चतुर्वेदाचार्योक्तमुदाहरणम् ।

सत्रिभागं तथा सार्धं रूपं षड्भागसंयुतम् ।
एकीकृतं भवेत् किं स्व रूपत्रयसमन्वितम् ॥

न्यासः । १ १ ३ । १ १ २ । १ १ ६ । ३ यथोक्तकरणेन जातो राशिः ७ ॥

अत्र चतुर्वेदाचार्यः । 'यच्च स्कन्दसेनाचार्येण श्रेढीन्यायेन सङ्कलितं प्रदर्शितं तत् सङ्कलन चेत्रप्रदर्शनाय' ।

इत्यनेन स्कन्दसेनोऽपि कश्चित् प्राचीनो गणक इत्यवगम्यते ॥ २ ॥

'इदानीं प्रत्युत्पन्ने करणसूत्रम् ।

**रूपाणि च्छेदगुणान्यंशयुतानि द्वयोर्बहूनां वा ।**

**प्रत्युत्पन्नो भवति च्छेदवधेनोद्धृतोऽंशवधः ॥ ३ ॥**

रूपाणि छेदगुणानि अंशयुतानि कार्याणि । एवं द्वयोर्वा बहूनां भिन्नानां सवर्णनं भवति । सवर्णनानन्तरं भिन्नयोर्वा बहूनां भिन्नानामंशानां वधश्छेदानां वधेनोद्धृतः फलं प्रत्युत्पन्नो गुणनफलं भवति । 'छेदघ्नरूपेषु लवा धनर्णम्'-इत्यादि तथा 'लवा लवघ्नाश्च हरा हरघ्नाः' इत्यादि 'अंशाहतिश्छेदवधेन भक्ता' इत्यादि च सर्वं भास्करोक्तमेतदनुरूपमेव ॥

अत्र चतुर्वेदाचार्योक्तोद्देशकः ।

दश सार्धा भुजो यत्र कोटिः षड्भागसप्ततिः ।

तचाप्ते फलं किं स्यात वेत्सि शीघ्रं निगद्यताम् ॥

न्यासः । भु $\frac{२१}{२}$ । को $\frac{७०}{६}$ उक्तवज्जातः प्रत्युत्पन्नः १२२ $\frac{१}{२}$ ।

अन्योद्देशकः ।

मरिचानां पलं पड्भिर्यदि सार्धैः पणैर्भवेत् ।

पलर्घाङ्गुशलैर्मूल्यं सदूपाय वद स्फुटम् ॥

इदानीं भागहारे करणसूत्रम् ।

**परिवर्त्य भागहारच्छेदांशौ छेदसङ्गुणच्छेदः ।**

**अंशोऽंशगुणो भाज्यस्य भागहारः सवर्णितयोः ॥ ४ ॥**

भागहारच्छेदांशौ भाजकस्य छेदांशौ परिवर्त्य भाज्यस्य छेदः परिवर्तितच्छेदसङ्गुणश्छेदो भवति । एवं भाज्यस्यांशः परिवर्तितांशगुणोऽंशो भवति । एवं सवर्णितयोर्द्वयोर्भिन्नयोर्भागहारो भवति । सवर्णनं तु 'रूपाणि च्छेदगुणानि'-इति विधिना । भास्करभागहारोऽप्येतदनुरूप एव ।

चतुर्भुजकश्चतुर्वेदोक्तः ।

यत्रायते फलं दृष्टं सार्धेनैवयमेन्दवः ।

सार्धा दश भुजश्चैव कोटिस्तत्राभिधीयताम् ॥

न्यासः । क्षेत्रफलम् १२२ $\frac{1}{2}$ भुजः १० $\frac{1}{2}$ ।

उक्तवज्जाता कोटिः ११ $\frac{2}{3}$ ।

अत्र पुनश्चतुर्वेदाचार्यः ।

'अन्ये पुनरिहापि त्रैराशिकात्मकमुदाहरणं वदन्ति ।

यथा ।

रूपत्रिभागसयुक्तं रूपत्रयं ददौ नृपः ।

दशभ्यो द्विजमुख्येभ्यः किमेकस्य धनं मतं ।' ॥

इदानीं वर्गे मूले च करणसूत्रम् ।

**संवर्णितांशवर्गश्छेदकृतिविभाजितो भवति वर्गः ।**
**संवर्णितांशमूलं छेदपदेनोद्धृतं मूलम् ॥ ५ ॥**

सवर्णितः सवर्णितः । शेषं स्पष्टार्थम् । वर्गे कृतौ इत्यादिभास्करोक्तमेतदनुरूपमेव ।

अत्र चतुर्वेदाचार्योक्तोद्देशकः ।

भुजकोटी समे यत्र सप्तार्धपरिसंख्यया ।

चतुरस्रे समे तत्र क्षेत्रे फलमिहोच्यताम् ॥

सपादाङ्काः फलं यत्र चतुरस्रे समे स्थितम् ।

भुजकोटी समे तत्र ब्रूहि त्वं यदि वर्गवित् ॥

वर्गस्तथा समद्विबधो वर्गं इति चतुर्वेदाचार्यः ।

*इदानीं घने करणसूत्रम् ।*

**स्थाप्योऽन्त्यघनोऽन्त्यकृति-**
**स्त्रिगुणोत्तरसङ्गुणा च तत्प्रथमात् ।**
**उत्तरकृतिरन्त्यगुणा**
**त्रिगुणा चोत्तरघनश्च घनः ॥ ६ ॥**

स्पष्टार्थम् । 'स्याद्घनो घनोऽन्त्यस्य ततोऽन्त्यवर्ग' इत्यादि भास्करोक्तमेतदनुरूपमेव ।

अत्र चतुर्वेदोक्तोद्दिशकः ।

चतुरस्रा समा वापी हस्तत्रिघनसंमिता ।
वेधेन च तथा तस्याः फलं ब्रूहि घनात्मकम् ॥

इदानीं घनमूले करणसूत्रम् ।

**छेदो घनाद्द्वितीयाद्घनमूलकृतिस्त्रिसङ्गुणाप्तकृतिः ।**
**शोध्या त्रिपूर्वगुणिता प्रथमाद्घनतो घनो मूलम् ॥७॥**

अत्र चतुर्वेदाचार्यः ।

'अत्रोद्दिष्टघनराशेः प्रथमस्थानस्य घनसंज्ञा ततो विलोमतः स्थानद्वयस्य अघनसंज्ञा ततः परं पुनरेकस्य घनसंज्ञा ततश्च द्वयोरघनसंज्ञैवमापादसमाप्तेः । एवं स्थिते सूत्रावतारः । आदिभाजकः घनमूलकृतिस्त्रिसङ्गुणा कृत इत्याह । अघनाद् द्वितीयात् ततो यदाप्तं तस्य कृतिः शोध्या किन्तु सा त्रिगुणिता पूर्वगुणिता च कुतः प्रथमादघनात् ततश्च घनतो घनः शोध्यः । एवं कृते घनमूलं भवति ।

अत्रोद्दिशकः ।

घनात्मकं फलं यत्र सप्ताष्टिरग्निभिः समम् ।
पार्श्वोत्सेधाः समास्तत्र चितौ ब्रूहि घनात् पदम् ।

इदानीं प्रथमद्वितीयजात्योः सवर्णनमाह ।

**सदृशच्छेदांशयुतिश्छेदविभक्ता फलं प्रथमजातौ ।**
**अंशैरंशा गुणिताश्छेदैश्छेदा द्वितीयायाम् ॥ ८ ॥**

'सदृशच्छेदांशानां युतिश्छेदविभक्ता समच्छेदहृता फलं प्रथमजातौ सवर्णनं स्यादिति 'योगोऽन्तरं तुल्यहरांशकानां'मित्यादिभास्करोक्तमेव । 'एवं द्वितीयायां प्रभागजातौ अंशा अंशैर्गुणिता अंशो भवति । छेदाश्छेदैर्गुणिताश्छेदो भवतीत्येतदनुरूपमेव 'लवा लवघ्नाश्च हरा हरघ्नाः'-इत्यादि भास्करोक्तम् ।

चतुर्भुजकश्चतुर्वेदोक्तः ।

यत्रायते फलं दृष्टं सार्धनेत्रयमेन्दवः ।
सार्धा दश भुजश्चैव कोटिस्तत्राभिधीयताम् ॥

न्यासः । क्षेत्रफलम् १२२ १/२ भुजः १० १/२ ।

उक्तवज्जाता कोटिः ११ २/३ ।

अत्र पुनश्चतुर्वेदाचार्यः ।

'अन्ये पुनरिहापि त्रैराशिकात्मकमुदाहरणं वदन्ति ।

यथा ।

रूपविभागसंयुक्तं रूपलक्षं ददौ नृपः ।
दशभ्यो द्विजमुख्येभ्यः किमेकस्य धनं ततः' ॥

इदानीं वर्गे मूले च करणसूत्रम् ।

संवर्णितांशवर्गश्छेदकृतिविभाजितो भवति वर्गः ।
संवर्णितांशमूलं छेदपदेनोद्धृतं मूलम् ॥ ५ ॥

संवर्णितः सवर्णितः । शेषं स्पष्टार्थम् । वर्गे कृतौ इत्यादिभास्करोक्तमेतदनुरूपमेव ।

अत्र चतुर्वेदाचार्योक्तोद्देशकः ।

भुजकोटी समे यत्र सप्तार्धपरिसङ्ख्यया ।
चतुरस्रे समे तत्र क्षेत्रे फलमिहोच्यताम् ॥

सपादार्काः फलं यत्र चतुरस्रे समे स्थितम् ।
भुजकोटी समे तत्र ब्रूहि त्वं यदि वर्गवित् ॥

वर्गलक्षणं समद्विवधो वर्ग इति चतुर्वेदाचार्यः ।

*इदानीं घने करणसूत्रम् ।*

स्थाप्योऽन्त्यघनोऽन्त्यकृति-
स्त्रिगुणोत्तरसङ्गुणा च तत्प्रथमात् ।
उत्तरकृतिरन्त्यगुणा
त्रिगुणा चोत्तरघनश्च घनः ॥ ६ ॥

स्पष्टार्थम् । 'स्याप्यो घनोऽन्त्यस्य ततोऽन्त्यवर्ग' इत्यादि भास्करोक्तमेतदनुरूपमेव ।

अत्र चतुर्वेदोक्तोद्देशकः ।

चतुरस्रा समा वापी हस्तत्रिघनसम्मिता ।
वेधेन च तथा तस्याः फलं ब्रूहि घनात्मकम् ॥

इदानीं घनमूले करणसूत्रम् ।

**छेदो घनाद्द्वितीयादघनमूलकृतिस्त्रिसङ्गुणास्कृतिः ।**
**शोध्या त्रिपूर्वगुणिता प्रथमाद्घनतो घनो मूलम् ॥७॥**

अत्र चतुर्वेदाचार्यः ।

'अत्रोद्दिष्टघनराशेः प्रथमस्थानस्य घनसंज्ञा ततो विलोमतः स्थानद्वयस्य अघनसंज्ञा ततः परं पुनरेकस्य घनसंज्ञा ततश्च द्वयोरघनसंज्ञैवमापादसमाप्तेः। एवं स्थिते सूत्रावतारः। आदिभाजकः घनमूलकृतिस्त्रिसङ्गुणा कृत इत्याह । अघनाद् द्वितीयात् ततो यदाप्तं तस्य कृतिः शोध्या किन्तु सा त्रिगुणिता पूर्वगुणिता च कृतः प्रथमादघनात् ततश्च घनतो घनः शोध्यः । एवं कृते घनमूलं भवति ।

अत्रोद्देशकः ।

घनात्मकं फलं यत्र सप्ताष्टित्रिभिः समम् ।
पार्श्वोत्सेधाः समास्तत्र चितौ ब्रूहि घनात् पदम् ।

इदानीं प्रथमद्वितीयजात्योः सवर्णनमाह ।

**सदृशच्छेदांशयुतिश्छेदविभक्ता फलं प्रथमजातौ ।**
**अंशैरंशा गुणिताश्छेदैश्छेदा द्वितीयायाम् ॥ ८ ॥**

' सदृशच्छेदानामंशानां युतिश्छेदविभक्ता समच्छेदहृता फलं प्रथमजातौ सवर्णनं स्यादिति 'योगोऽन्तरं तुल्यहरांशकाना'मित्यादिभास्करोक्तमेव । एवं द्वितीयायां प्रभागजातौ अंशा अंशैर्गुणिता अंशो भवति । छेदाश्छेदैर्गुणिताश्छेदो भवतीत्येतदनुरूपमेव 'लवा लवघ्नाश्च हरा हरघ्नाः'- इत्यादि भास्करोक्तम् ।

अत्र चतुर्वेदोक्तोद्देशकः ।

रूपार्धं रूपषड्भागो रूपांशो द्वादशस्तथा ।

रूपस्य च तुरीयांशः कोऽर्थं सम्पिण्डिते भवेत् ॥

न्यासः । १/२ | १/६  १/१२ | १/४ उक्तवज्जातो योगः १ ।

अन्योद्देशकः ।

द्वियमा रसषड्भागाश्च वसुलोका नगाग्नयः ।

त्रीन्दवः कृतरुद्राश्च छेदस्थाने प्रकल्पिताः ॥

पञ्चभागा नव रूपं च वेदा रुद्रास्त्रयोदशकाः ।

मिलिता यत्र दृश्यन्ते कस्तत्र धनसञ्चयः ॥

न्यासः । ५/२२ | ७/६६ | ९/३८  १/३६ | ४/१३ | ११/११४ उक्तवज्जातो योगः १ ।

प्रभागजातौ चतुर्वेदोद्देशकः ।

पादार्धं पादषड्भागं पादांशद्वादशं तथा ।

दशघ्नादष्टमं पादात् सप्तघ्नात् पञ्चमं तथा ॥

सम्मीड्याऽऽचक्ष्व मे शीघ्रं विगत्यंशैस्त्रिभिर्युतम् ।

धनं तद्दृश्यमस्माभिर्ख्याति शास्त्रविदे सदा ॥

न्यासः । १/४ १/२ | १/४ १/६ | १/४ १/१२ | १०/४ १/८ | ७/४ १/५ | ३/६० ।

सवर्णिते १/८ | १/२४  १/४८  १०/३२ | ७/२०  ३/६० उक्तवज्जातो योगः ३/५२ ।

इदानीं तृतीयजातौ सवर्णनमाह ।

**ऊर्ध्वांशाश्छेदगुणास्तृतीयजातौ द्वयोः प्रथमपरयोः ।**
**छेदैश्छेदा गुणिताः स्वांशयुतानैरूपरिगांशाः ॥ ६ ॥**

ऊर्ध्वांशाश्छेदगुणाः कार्यास्तदा तृतीयजातौ सवर्णनं भवति ।

अत्र चतुर्वेदाचार्यः ।

'ऊर्ध्वांशा उपरि स्थितांशाश्छेदगुणाः सन्तोऽधःस्थितस्य छेदांशा भवन्त्यधःस्थितच्छेदास्त्यज्यन्ते । एवं कृत्वा सदृशच्छेदविधानेन फलं कार्यम् । एतदुक्तं भवति । भाज्यराशिरूर्ध्वांशशब्देनोच्यते । अधःस्थराशिश्च

स्वच्छेदसहितो भागहारस्तेनात्र जातं परिवर्त्य भागहारच्छेदांशौ इत्यादि । द्वयोः प्रथमपरयोरित्येतत् सूत्रखण्डकमुत्तरसूत्रसम्बद्धं भविष्यति ।'

उद्देशकः ।

दिनार्धपादपञ्चांशैः कुल्या याः पूरयं पृथक् ।
वाप्याः कुर्वन्ति ता मुक्ता युगपत् पूरयं कदा ॥

न्यासः । १/१ | १/१/२ | १/१/४ | १/१/५ | ऊर्ध्वांशाश्छेदगुणा इति कृते दर्शनम् । १/१ | २/१ | ४/१ | ५/१ | रूपसञ्योऽयम् १२ । एतावन्ति दिवसप्रमाणानि भवन्ति सर्वकुल्याभिस्तत्त्रैराशिकम् । यदि द्वादशभिः पूरणैर्दिनं भवति तदैकपूरणेन कियत्कालः । फलम् १/१२ । 'एवं भवेच्छिदोंऽशैः'–इति भास्करोक्तमेतदनुरूपम् ।

अन्योद्देशकः ।

दिनत्रिभागेन ददाति रूपं दलेन वान्यः प्रथतो द्विजेभ्यः ।
त्रिरूपदाता दिनपञ्चकेऽन्यः शतं प्रदत्ताः शताः कदा स्युः ॥

न्यासः । १/१/३ | १/१/२ | ३/५/१ | उक्तवद्दिनानि १७ ६/७ ।

प्रथमद्वितीयतृतीयजातिभ्यो ये अन्ये परे जाती द्वे चतुर्थीपञ्चम्यौ तयोर्द्वयोः परयोः सवर्णनार्थमधःस्वच्छेदैरुपरिस्थाश्छेदा गुणिताः । स्वांशयुतोनैस्तैरेव छेदैरुपरिगांशा गुणिताः । अथानुबन्धे स्वांशयुतैर्भागापवाहे स्वांशहीनैश्छेदैरित्यर्थः । 'तलस्थहारेण हरं निहन्यात्'–इति भास्करोक्तमेतदनुरूपमेव ।

अथ चतुर्वेदोद्देशकः ।

वणिजः शिशुरल्पल्पः पादमादाय रूपकात् ।
दिनानि सप्त लाभार्थे पण्यं चक्रे फलादिभिः ॥
स्वार्धत्रिपादभागैश्च पञ्चषट्सप्तमैर्युतम् ।
दिनं प्रतिदिनं तेन कृतं मूल्यं कियद्धनम् ॥
तद्वदन्योऽपि रूपेण रूपैः षड्भिस्तथा परः ।

तयोरपि धनं ब्रूहि यदि भागानुबन्धवित् ॥

न्यासः ।

| | | |
|---|---|---|
| $\frac{१}{१}$ | $\frac{१}{६}$ | $\frac{५}{१}$ |
| $\frac{१}{२}$ | $\frac{१}{२}$ | $\frac{१}{२}$ |
| $\frac{१}{३}$ | $\frac{१}{३}$ | $\frac{१}{३}$ |
| $\frac{१}{४}$ | $\frac{१}{४}$ | $\frac{१}{४}$ |
| $\frac{१}{५}$ | $\frac{१}{५}$ | $\frac{१}{५}$ |
| $\frac{१}{६}$ | $\frac{१}{६}$ | $\frac{१}{६}$ |
| $\frac{१}{८}$ | $\frac{१}{८}$ | $\frac{१}{८}$ |

उक्तवत् क्रमेण धनानि प्रथमस्य १ । द्वितीयस्य ५ । तृतीयस्य २४ ।

भागापवाहे चापि चतुर्वेदोद्धृतकः ।

अष्टौ पलानि घणिका सितचन्दनस्य
नीतानि चोत्तरगिरिं किल कान्यकुब्जात् ।
दानं च दत्तमपि पञ्चसु तेन मान-
स्यार्धत्रिपञ्चनवसप्तदसमं तदा किम् ॥

न्यासः ।

| |
|---|
| $\frac{८}{१}$ |
| $\frac{१}{२}$ |
| $\frac{१}{३}$ |
| $\frac{१}{५}$ |
| $\frac{१}{९}$ |
| $\frac{१}{७}$ |
| $\frac{१}{१०}$ |

उक्तवत् करणेन जातम् १ $\frac{६१}{१३१}$ । अत्र कोलब्रूकसा-हिबेन भ्रमात् $\frac{१११}{१३५}$ इत्युत्तरं वास्तवं लिखितम् ।
(See his translation p 283)
अत्र चतुर्वेदाचार्य. स्वटीकायाम् ।
'ब्रह्मिद्धाचार्येण पञ्चलातम् एवोक्ताः । यतः षष्ठी-ति तदा त्मकैवशात्र गतार्थेति कृत्वा नोक्ता । स्क-न्दसेनादिभिस्तस्या नाम कृतं भागमातेति' ।

भागमातर्थं द्रष्टव्या (मच्छोधिता त्रिशतिका पृ-१२)

इदानीं त्रैराशिकादिषु करणसूत्राणि ।

त्रैराशिके प्रमाणं फलमिच्छाद्यन्तयोः सदृशराशी ।
इच्छा फलेन गुणिता प्रमाणभक्ता फलं भवति ॥१०॥
व्यस्तत्रैराशिकफलमिच्छाभक्तः प्रमाणफलघातः ।
त्रैराशिकादिषु फलं विषमेष्वेकादशान्तेषु ॥ ११ ॥
फलसङ्क्रमणमुभयतो बहुराशिवधोऽल्पवधहृतो ज्ञेयम् ।
सकलेष्वेवं भिन्नेषूभयतश्छेदसङ्क्रमणम् ॥ १२ ॥

अत्र चतुर्वेदाचार्यः । 'अतद्गुणसंविज्ञानोऽयं बहुव्रीहिस्त्रैराशिकोक्तत्वात् । तेनायमर्थः । त्रैराशिकमादौ येषां तानि त्रैराशिकादीनि । पञ्चराशिक–सप्तराशिक–नवराशिकैकादशराशिकानीत्यर्थः । तेषु विषमेष्वेकादशान्तेषु न तु समेषु चतुराद्विष्वित्यर्थः ।'

फलसङ्क्रमणमुभयतोऽन्योऽन्यपक्षनयनं फलयोरेवं भिन्नेषु राशिषु उभयपक्षच्छेदसङ्क्रमणमर्थादन्योऽन्यपक्षनयनं छेदानामपि कार्यम् । शेषं स्पष्टार्थम् । भास्करस्य त्रैराशिकादिसूत्राण्येतदनुरूपाण्येव ।

अत्र चतुर्वेदोक्त उद्देशकः ।

शतमष्टोत्तरं धेनोर्यो ददाति दिनैस्त्रिभिः ।
मासयुक्तेन सोऽब्देन कियतीर्गाः प्रयच्छति ॥

न्यासः । दि ३ । गावः १०८ । दि ३९० । उक्तवत् लब्धा गावः १०५४० ।

अन्योद्देशकः ।

यः पिपीलो दिने याति स्वपञ्चांशं यवाष्टकम् ।
त्र्यंशेन विनिवर्तेत विंशत्यंशं तथाऽङ्गुलम् ॥
आभ्यां गतिनिवृत्तिभ्यां यस्य यातं प्रकल्पितम् ।
योजनानां शतं पूर्णं केन कालेन स व्रजेत् ॥

अत्र चतुर्वेदोक्ता परिभाषा 'अष्टभिर्यवोदरैरङ्गुलं चतुर्विंशत्यङ्गुलैर्हस्तः । चतुर्हस्तं धनुः । अष्टौ धनुसहस्राणि योजनम् ।' अत्रैकदिनगतिर्यवात्मिका = $\frac{8}{5}$ । एकदिननिवृत्तिरङ्गुलात्मिका = $\frac{1}{60}$ । दिनगतिरङ्गुलात्मिका = $\frac{1}{5}$ अनयोरन्तरेण $\frac{11}{60}$ योजनाङ्गुलानि = $1 \times 8000 \times 4 \times 24$ भक्तानि लब्धानि दिनानि = $\frac{8000 \times 4 \times 24 \times 60}{11}$ = $1670181\frac{9}{11}$ ।

अथ त्रैराशिक उद्देशकः ।

षट्सौवर्णिकया भारस्तुलया सम्मितः पुरा ।
पञ्चसौवर्णिकायास्तु तया किं स्याद्वद स्फुटम् ॥

न्यासः । सु॰ ६ । भा॰ १ । सु॰ ५ । लब्धं फलम् = (भा॰ १ पलानि ४०० ।) अत्र चतुर्वेदोक्तेयं परिभाषा । 'षोडशभिर्यवैर्माषकस्तैः षोडशभिः सुवर्णं तैश्चतुर्भिः पलं पलसहस्रद्वयेन भार इति' ।

अन्योद्देशकः ।

सार्धत्रिकेण याः खार्यः प्रस्थानां दश सम्मिताः ।
सार्धपञ्चकमानेन क्रियन्त्यस्ता वदाशु मे ॥

न्यासः । $\frac{७}{२}$ । १० । $\frac{११}{२}$ । उक्तवत् फलम् = (द्रो॰ १ आ॰ १ । मा॰ ३ । मा॰ १ । प्र॰ १ । कु॰ $\frac{१}{११}$ ।) अत्र चतुर्वेदोक्तेयं परिभाषा ।

चतुर्भिः कुडवैः प्रस्थस्तैश्चतुर्भिस्तथाढकम् ।
आढकानां चतुष्केण द्रोणः ख्यातः पुरातनैः ॥
मानिका तैश्चतुर्भिः स्यान्मानिकानां चतुष्टयम् ।
खार्याः प्रमाणमेतत्स्यान्मागधानां प्रसिद्धितः ॥

पञ्चराशिकादौ चतुर्वेदोक्तोदाहरणानि ।

शतस्य दशका वृद्धिस्त्रिभिर्मासैर्निरूपिता ।
पञ्चमासप्रयुक्तायाः षष्टेर्लाभो निगद्यताम् ॥ उक्तवल्लब्धम् १० ।
मासेन सत्रिभागेन सार्धायास्त्रिंशतः फलम् ।
अध्यर्धं यदि वर्षेण सार्धषष्टेर्विमोच्यताम् ॥ उक्तवल्लब्धम् २६ [illegible] ।
शतस्य दशभिर्मासैश्चत्वारिंशत् फलं यदि ।
मासाष्टके शतं लब्धं कस्येयं वृद्धिरुच्यताम् ॥ उक्तवल्लब्धम् ३१२५ मू॰ ध॰ ।
त्रिपञ्चकानि वासांसि त्रीणि षड्भिः पणैर्यदि ।
त्रिषट्कानि गृहीतानि दश मूल्यं वद स्फुटम् ॥ उक्तवन्मूल्यम् ३६ ।
त्रिपञ्चकानि वासांसि त्रीणि षड्भिः पणैर्यदि ।
षट्शत्या कति वासांसि त्रिषट्कानि वदाशु मे ॥
आयामोत्सेधविस्तारैः षोडशाष्टौ तथा दश ।
यासां मूल्यं शतं तासां दीनाराः षट् प्रकीर्तिताः ॥
एकाना तथाऽन्यासामायामाद्यैः पलोनकैः ।
सत गृहीतमस्याभिर्ब्रूहि तद्वद स्फुटम् ॥ उक्तवद्दीनाराः २४११ ।

हस्तिनो दश दैर्घ्येण विस्तारेण तथा नव ।
परिणाहेन षट्त्रिंशद्द्वयोरोक्येन सप्तकम् ॥
तौ चेद्द्रोणाशिनौ स्यातां तदन्ये दश हस्तिनः ।
दीर्घाद्यैः पादसंयुक्तैस्तेषां भोगो निगद्यताम् ॥ उक्तवत् फलं द्रो १२ प्र३ कु१

इदानीं भाण्डप्रतिभाण्डके करणसूत्रम् ।

**प्राग्मूल्यव्यत्यासो भाण्डप्रतिभाण्डकेऽन्यदुक्तसमम् ।**
**परिकर्मान्यघ्नानां व्यवहाराणामभिहितानि ॥ १३ ॥**

'प्राक् प्रथमस्थाने यो मूल्यराशी तयोर्व्यत्यासः कार्य' इति चतुर्वेदाचार्यः । 'तथैव भाण्डप्रतिभाण्डके विधि'रित्यादि भास्करोक्तमेतदनुरूपमेव ।

अत्र चतुर्वेदाचार्योक्तोदाहरणम् ।

पणैर्दशभिराम्राणां दाडिमानां तथाऽष्टभिः ।
शतं शतं तदाऽऽम्रैस्तु विंशत्या कति दाडिमाः ॥
लब्धा उक्तवद्दाडिमाः २५ ।

अत्र चतुर्वेदाचार्यः ।

'एवमालेखेन मार्गेण सङ्कलनादीन्युक्तानि यानि तु करणीगतानि अव्यक्तगतानि धनर्णशून्यगतानि च तान्याचार्य एव कुट्टकाध्याये वक्ष्यति वयमपि तत्रैव तेष्वेव सूत्रेषु व्याख्यास्यामः ।'

इति परिकर्मविंशतिः ।

अथ मिश्रकव्यवहारे करणसूत्रम् ।

**कालगुणितं प्रमाणं फलभक्तं व्येकगुणहृतं कालः ।**
**स्वफलयुतरूपभक्तं मूलफलैक्यं भवति मूलम् ॥ १४ ॥**

प्रमाणं प्रमाणधनं कालगुणितं प्रमाणकालेन गुणितं ततः फलभक्तं प्रमाणफलेन भक्तं यल्लब्धं तद्व्येकगुणहृतं यद्गुणं सकलान्तरं धनमर्पितं तेन व्येकेन हृतं कालो भवति । तावत्कालपर्यन्तं दत्तं धनं सकलान्तरं तद्गुणं भवति ।

अत्र चतुर्वेदोक्तोद्देशकः ।

शतद्वयस्य मासेन षड्द्रम्मा यदि वृद्धितः ।
त्रिगुणा केन कालेन तद्युक्तं तद्द्वनं भवेत् ॥

अत्र $\frac{\text{प्रका} \times \text{प्रध}}{\text{प्रफ}} = \frac{१ \times २००}{६} = \frac{१००}{३} = \text{ल}$ । ततः

कालः $= \frac{१०० \times \text{अगु}}{३} = \frac{२००}{३} = ६६\frac{२}{३}$ मासाः ।

अन्योद्देशकः ।

मासद्वये पणाः पञ्च विंशतेर्यदि वृद्धितः ।
तदष्टार्धगुणं ब्रूहि केन कालेन मे धनम् ॥

अत्र $\frac{\text{प्रका} \cdot \text{प्रध}}{\text{प्रफ}} = \frac{२ \times २०}{५} = ८$ । ततो मासाः $= ८ \times \text{अगु}$
$= ८ \times \frac{१}{२} = ४$ ।

अत्रोपपत्तिः । कल्पन्तेऽभीष्टमासाः = मा । ततोऽनुपातेनैतावद्भि-
र्मासैर्वृद्धिः $= \frac{\text{प्रफ} \times \text{मा}}{\text{प्रमा}}$ । इयं प्रमाणधनयुता कालमभीष्टगुणं
मूलधनम् =
$\text{गु} \cdot \text{प्रध} = \frac{\text{प्रफ} \cdot \text{मा}}{\text{प्रमा}} + \text{प्रध} \therefore \text{मा} = \frac{\text{प्रमा} \cdot \text{प्रध} \ (\text{गु} - १)}{\text{प्रफ}}$ अत उपपन्नम् ।
मूलफलैक्य सकलान्तर धनं स्वफलयुतरूपभक्त रूपस्य तत्कालसंबन्धि यत्
कलान्तर तत् स्वफलं तेन स्वफलेन युतं यद्रूप तेन भक्तं लब्ध मूलं धन
भवति । 'यद्वेष्टकर्माख्यविधेस्तु मूलम्–'इत्यादि भास्करोक्तमेतदनुरूपमेव ।

अत्र चतुर्वेदोक्तोद्देशकः ।

शतेन पञ्चकेनेह मासवृद्ध्या धने स्थिते ।
षट्त्रिंशद्भिर्मासैः प्रवृत्ता मूलमत्र किम् ॥

उक्तवल्लब्धं मूलम् २४ ।

अन्योद्देशकः ।

अर्पित हेमकारस्य सुवर्णानां शताष्टकम् ।
त्रिनाशे कुरु पात्राणि पञ्चसौवर्णिक चतम् ॥

घटनाय त्वया ग्राह्यं कृतं तेन तथैव तत्।

घटितस्य सुवर्णस्य तच्च सङ्ख्यां वदस्व मे॥

उक्तवद्घटितसुवर्णमानम्=$७६१\frac{११}{१६}$ मिश्रात् ८०० विशोध्य घटनप्रमाणम् $३८\frac{५}{१६}$।

मिश्रान्तरे करणसूत्रम्।

**कालप्रमाणघातः परकालहृतो द्विधाऽऽद्यमिश्रवधात्।**
**अन्यार्धकृतियुतात् पदमन्यार्धोनं प्रमाणफलम्॥ १५॥**

कालप्रमाणघातः प्रमाणकालप्रमाणधनघातः परकालेन हृतः फलं द्विधा स्थाप्यम्। आद्यस्थाने स्थापितस्य मिश्रधनस्य च वधः कार्यस्तस्मादन्यस्थापितार्धवर्गयुतात् पदं ग्राह्यं तदन्यार्धेन हीनं प्रमाणफलं भवति।

अत्र चतुर्वेदोक्तोद्देशकः।

अज्ञातवृद्धिकस्यास्य द्रम्माणां शतपञ्चकम्।
वृद्धिर्मासचतुष्कस्य तदीयाऽन्यत्र योजिता॥
कालान्तरेण तेनैव जाताऽष्टासप्ततिस्ततः।
मासैर्दशभिरत्र त्वं प्रमाणस्य फलं वद॥

न्यासः। प्रका = ४। प्रध = ५००। परका = १०। मिश्रध = ७८।

$\frac{\text{प्रका}\cdot\text{प्रध}}{\text{परका}} = \frac{४ \times ५००}{१०} = २००$। $\text{आ}\cdot\text{मि} = २०० \times ७८ = १५६००$

$\sqrt{\frac{\text{अ}^{२}}{४} + \text{आ}\cdot\text{मि}} = \sqrt{१०००० + १५६००} = \sqrt{२५६००} = १६० = \text{प}$।

$\text{प} - \frac{\text{अ}}{२} = १६० - १०० = ६० =$ प्रमाणफलम्।

अत्रोपपत्तिः। प्रमाणफलम् = या। ततो दशभिर्मासैरस्य कलान्तरम् $= \frac{\text{या}^{२} \times \text{परका}}{\text{प्रध} \times \text{प्रका}}$। इदं मूलधनेन यावत्तावन्मितेन युतं जातम्।

$\text{मि} = \frac{\text{परका}\cdot\text{या}^{२} + \text{प्रध}\ \text{प्रका}\cdot\text{या}}{\text{प्रध}\cdot\text{प्रका}}$ समशोधनादिना

$\frac{\text{मि}\ \text{प्रध}\ \text{प्रका}}{\text{परका}} = \text{या}^{२} + \frac{\text{प्रध}\ \text{प्रका}}{\text{परका}}\text{या} = \text{मि}\cdot\text{आ} = \text{या}^{२} + \text{अ}\cdot\text{या}$

# अथ श्रेढीव्यवहारः ।



**पदमेकहीनमुत्तरगुणितं संयुक्तमादिनाऽन्त्यधनम् ।**
**आदियुतान्त्यधनार्धं मध्यधनं पदगुणं गणितम् ॥ १७ ॥**

स्पष्टार्थम् । 'व्येकपदघ्नचयो मुखयुक् स्यादन्त्यधनम्'–इत्यादि भास्करोक्तमेतदनुरूपमेव ।

अत्र चतुर्वेदोक्तोदाहरणानि ।

मुखे द्वे इष्टके यत्र तिस्रस्तिस्रोऽधिकाश्चये ।
पञ्च हाराचितिर्दृष्टा वद तत्रेष्टकाफलम् ॥

आद्यर्धमादौ किल पादवृद्ध्या दत्तं द्विजेभ्यः सततं नृपेण ।
इमं त्रिरात्रं नवभागयुक्तं मध्यान्त्यसर्वाख्यधनानि कानि ॥

केनापि गृहतामातुः षोडशाऽऽद्ये दिने पणाः ।
प्रदत्ताः पुण्यपुण्यार्थं द्विहान्या च ततः क्रमात् ॥
दिवसे नवमे जाते कियन्तस्तस्य ते पणाः ।
सम्योह्यैतत् समाचक्ष्व यदि श्रेढ्यां श्रमः कृतः ॥

अत्र चतुर्वेदाचार्यः । 'इदानीं द्विगुणत्रिगुणादिक्षेत्तरेण फलानयनप्रदर्शनार्थं श्लोकत्रयमस्मदीयमेतावद्ध्यया' ।

इष्टगच्छे दलेऽरूपे वर्गं कल्प्यं न्यसेदतः ।
गच्छेऽत्र शेषता यावत् ततश्चोत्क्रमवर्गतः ॥
गुणकारसमाकल्पे वर्गौ वर्गप्रसिद्धितः ।
व्येकरूप ततो राशिं रूपहीनगुणोद्धृतम् ॥
आद्यसंव्याहतं कृत्वा द्विगुणादौ फलं वदेत् ।
छन्दश्चित्युत्तरादेव प्रकार इह दर्शितः ॥

एतच्छ्लोकत्रयस्य व्याख्या च चतुर्वेदाचार्यकृता तथैव वर्तते यथा भास्करस्य 'विषमे गच्छे व्येके गुणकः स्थाप्य' इत्यादि सूत्रम् ।

अत्र चतुर्वेदाचार्योक्तोद्देशकः ।

त्रिगुणोत्तरया वृद्ध्या रूपवृद्धं दिने दिने ।
यो ददाति दशाहानि दत्तं तेन कियद्भवेत् ॥

अन्योद्देशकः ।

पञ्चार्धगुणया वृद्ध्या यो ददाति दिनत्रयम् ।
सार्धरूपत्रयं तेन कियद्दत्तं धनं वद ॥

अत्रोपपत्त्यर्थे चतुर्वेदाचार्यः । 'गोपगणनया प्रत्यय' इति । गोपानां यादृशी लोष्टकादिना गणना भवति तया प्रतीतिरत्रास्तीत्यर्थः । अत्र भास्करश्रेढीव्यवहारेण सर्वोदाहरणानामुत्तराणि स्फुटान्यतो न लिखितानि मयेति ।

इदानीं गच्छज्ञानाय करणसूत्रम् ।

**उत्तरहीनद्विगुणादिशेषवर्गं धनोत्तराष्टवधे ।**
**प्रक्षिप्य पदं शेषोनं द्विगुणोत्तरहृतं गच्छः ॥ १८ ॥**

द्विगुणश्चासावादिश्च द्विगुणादिः । उत्तरहीनाद्द्विगुणादेर्यः शेषः स उत्तरहीनद्विगुणादिशेषस्तस्य वर्गं धनोत्तराष्टवधे सर्वधनचयाष्टानां वधे प्रक्षिप्य पदं ग्राह्यं तत्पूर्वसाधितशेषोनं द्विगुणचयहृतं गच्छः स्यात् ।

अत्रोपपत्त्यर्थं मत्संशोधितभास्करलीलावती द्रष्टव्या ।

अत्र चतुर्वेदोक्तोद्देशकः ।

मुखे दशेष्टका यत्र पञ्च पञ्चाधिकाश्चये ।
इष्टकानां शतं लग्नं चितौ तत्र पदं वद ॥

न्यासः । आ १० । च ५ । सर्वधनम् १०० ।

करणम् । $\text{शे} = २\text{आ} - \text{च} = २ \times १० - ५ = १५$ ।

$\text{सध} \times \text{च} \times ८ = १०० \times ५ \times ८ = ४०००$

$\text{शे}^२ + \text{सध} \times \text{च} \times ८ = २२५ + ४००० = ४२२५$ अस्य मूलम् ६५ ।

$\frac{\text{मू} - \text{शे}}{२\text{च}} = \frac{६५ - १५}{२ \times ५} = \frac{५०}{१०} = ५ =$ गच्छः ।

तयोरेव कर्णलम्बसिद्धिरन्यत्र स्थलौ कर्णलम्बौ भवत इति रेखागणितेन स्फुटम् । व्याख्या चातिसुगमेति ॥ २३ ॥

इदानीं जात्यक्षेत्रे भुजकोटिकर्णानयनाय करणसूत्रम् ।

**कर्णकृतेः कोटिकृतिं विशोध्य मूलं भुजो भुजस्य कृतिम् ।**
**प्रोह्य पदं कोटिः कोटिबाहुकृतियुतिपदं कर्णः ॥ २४ ॥**

स्पष्टार्थम् । 'तत्कृत्योर्योगपदं कर्णः' इत्यादि भास्करोक्तमेतदनुरूपमेव ।

अत्रोपपत्तिः । रेखागणितप्रथमाध्यायसप्तचत्वारिंशत्प्रतिज्ञया स्फुटा ॥ २४ ॥

इदानीं लम्बकर्णयोरूर्ध्वाधरखण्डानयनाय करणसूत्रम् ।

**कर्णयुतावूर्ध्वाधरखण्डे कर्णावलम्बयोगे वा ।**
**स्वाबाधे स्वयुतिहृते द्विधा पृथक् कर्णलम्बगुणे ॥ २५ ॥**



आकागाघा—चतुर्भुजे आत्रा, कात्रा लम्बौ, आगा, काघा कर्णौ । कर्णयुतिः दा बिन्दौ । कादा, दाघ, काघा कर्णस्य, आदा, दागा, आगाकर्णस्योर्ध्वाधरखण्डे । तत्र घात्रा, मात्रा तथा मागा, मात्रा आबाधे । दामा, दाबिन्दोराधारोपरि लम्बः । एवं लम्बकर्णयुतौ दाबिन्दौ धाबिन्दौ च आत्रा, त्राता तथा तागा, त्राता भ्रमे ॥ अ म धे । तेनायमर्थः । स्वाबाधे कर्णगुणे स्वयुतिहृते स्वाबाधायुतिहृते कर्णयुतावूर्ध्वाधरखण्डे भवतः । एवं स्वाबाधे लम्बगुणे स्वाबाधायुतिहृते कर्णावलम्बकयोगे ऊर्ध्वाधरखण्डे भवतः ।

अत्रोपपत्तिः । क्षेत्रे लिखिततेत्रनः सजात्यानुपातेन स्फुटा ॥ २५ ॥

इदानीं चतुरस्रोपरि वृत्तस्य व्यासज्ञानाय करणसूत्रम् ।

**अविषमपार्श्वभुजगुणः कर्णो द्विगुणावलम्बकविभक्तः ।**
**हृदयं विषमस्य भुजप्रतिभुजकृतियोगमूलार्धम् ॥ २६ ॥**

वर्गैक्ये तथाऽऽयते कर्णे एव व्यास इति स्फुटम्। यच्चाविषमेण तत् समलम्बचतुर्भुजम् (यत्र कर्णौ भुजौ द्वौ च तुल्यौ) उच्यते। तेनायमर्थः। कर्णः पार्श्वभुजेन गुणो द्विगुणावलम्बकविभक्तः फलं हृदयं चतुर्भुजो परिगवृत्तस्य व्यासार्धं भवेत्। विषमचतुर्भुजे यत्र परिगवृत्तं भवितुमर्हति तत्र भुजप्रतिभुजयोर्वधयोगमूलार्धं हृदयं व्यासार्धं भवेत्।

अत्रोपपत्तिः। तुल्यभुजसमलम्बचतुर्भुजे कर्णवशेन त्रिभुजद्वयमेकवृत्तान्तर्गतम्। अत एकत्रिभुजपरिगवृत्तव्यास एवान्यत्रिभुजपरिगवृत्तस्य वा चतुरस्रपरिगवृत्तस्य व्यासो भवति। एकस्मिन् त्रिभुजे कर्णः पार्श्वभुजा भुजौ स्तः लम्ब एव लम्बः। अतो रेखागणितषष्ठाध्यायेन 'त्रिबाहुकबहिर्लग्नवृत्तव्यासदल' मित्येतादिना व्यासद = $\frac{क \times पाभु}{२ लं}$ । वृत्तान्तर्गते विषमचतुर्भुजे यत्र भुजप्रतिभुजयोरथवा संमुखभुजयोरुपरि चापयोर्योगः परिध्यर्धसमस्तत्रैवाऽऽचार्यमतो व्यासदलज्ञानं भवति यतस्तत्रैव भुजाग्रात् प्रतिभुजसमपूर्णज्यादानेन तदुपरिगचापयोगस्य परिध्यर्धसमत्वात् तदुत्पन्नकोणः समकोणस्तदग्रगता रेखा कर्णश्च व्यासो भवति नान्यथेति सुधीभिर्भृशं विचिन्त्यम् ॥ २६ ॥

इदानीं सर्वत्रिभुजे परिगवृत्तस्य व्यासदलज्ञानाय हृद्रज्जुपरिभाषार्थं च सूत्रम्।

त्रिभुजस्य वधो भुजयोर्द्विगुणितलम्बोद्धृतो हृदयरज्जुः।
सा द्विगुणा त्रिचतुर्भुजकोणस्पृग्वृत्तविष्कम्भः ॥ २७ ॥

स्पष्टार्थमुपपत्तिश्चोपरितनप्रकारेण स्फुटा ॥ २७ ॥

इदानीं विषमचतुरस्रस्य कर्णयोरानयनार्थं करणसूत्रम्।

कर्णाश्रितभुजघातैक्यमुभयथाऽन्योऽन्यभाजितं गुणयेत्।
योगेन भुजप्रतिभुजवधयोः कर्णौ पदे विषमे ॥ २८ ॥

स्पष्टार्थं भास्करलीलावतीतः। अनेन प्रकारेण वृत्तान्तर्गतचतुर्भुजस्यैव कर्णौ भवत इत्येतदर्थं मत्संशोधिता भास्करलीलावती द्रष्टव्या ॥ २८ ॥

इदानीं विषमचतुरस्रे लम्बानयनाय करणसूत्रम् ।

**विषमचतुरस्रमध्ये विषमत्रिभुजद्वयं प्रकल्प्य पृथक् ।**
**कर्णद्वयेन पूर्ववदाबाधे लम्बकौ च पृथक् ॥ २९ ॥**

कर्णभुजौ भुजौ भूरेव भूरिति त्रिभुजद्वयं भवति । शेषं स्पष्टार्थम् । 'चतुर्भुजान्तस्त्रिभुजेऽवलम्बः प्राग्वद्भवे'-इत्यादि भास्करोक्तमेतदनुरूपमेव । अत्र विषमचतुर्भुजे चतुर्वदाबाधेया गद्यमथ यदुदाहरणं प्रदर्शितं तदेव भास्करेण 'द्विपञ्चाशन्मितत्र्येकचत्वारिंशन्मितौ भुजौ'-इत्यादि पद्येनोपनिबद्धमिति ॥ २९ ॥

इदानीं विषमचतुरस्रे कर्णयुतितः कर्णोर्ध्वाधरखण्डज्ञानाय करणसूत्रम् ।

**विषमभुजान्तस्त्रिभुजे प्रकल्प्य कर्णौ भुवौ तदाबाधे ।**
**पृथगूर्ध्वाधरखण्डे कर्णयुतौ कर्णयोरधरे ॥ ३० ॥**

विषमभुजान्तर्विषमचतुर्भुजान्तः कर्णौ भूस्तल्लग्नभुजौ भुजौ । एवं द्वे त्रिभुजे परिकल्प्य कर्णयुतौ पृथक् कर्णयोरूर्ध्वाधरखण्डे पूर्वोक्तयुक्त्या साध्ये । कर्णयोरधरे इत्यस्यापि सम्बन्धः । विषमचतुर्भुजे यदा कर्णौ परस्परं लम्बरूपौ तदैवाचार्योक्तप्रकारेण कर्णयोरूर्ध्वाधरखण्डे सिद्धे भवतो नान्यथेति विवेचनया सर्वं स्फुटम् ॥ ३० ॥

इदानीं विषमचतुरस्रे मध्यावलम्बोर्ध्वाधरखण्डज्ञानाय करणसूत्रम् ।

**त्रिभुजे भुजौ तु भूमिस्तल्लम्बो लम्बकाधरं खण्डम् ।**
**ऊर्ध्वमवलम्बखण्डं लम्बकयोगार्धमधरोनम् ॥ ३१ ॥**

कर्णयोर्ये अधरे खण्डे ते एव कस्मिन्नपि त्रिभुजे भुजौ कल्प्यौ । भूमिस्तु चतुर्भुजे या सैव । ततस्तल्लम्बो यस्तदेव लम्बकाधरं मध्यलम्बकाधरं खण्डं भवेत् । चतुर्भुजलम्बयोर्योगार्धं पूर्वानीताधरखण्डोनमूर्ध्वं मध्यलम्बखण्डं भवेत् । एवं चतुर्भुजलम्बयोरन्तरे यद्भूमिखण्डं तन्मध्ये एव कर्णयुतितो मध्यलम्बः पतेत् तदैवाचार्यप्रकारेणैवं मध्यलम्बोर्ध्वाधरखण्डसिद्धिर्नान्यथेति ॥ ३१ ॥

इदानीं सूचीक्षेत्रे करणसूत्रम् ।

**कर्णावलम्बकयुतौ खण्डे कर्णावलम्बयोरधरे ।**
**अनुपातेन तदूने ऊर्ध्वे सूच्यां सपाटायाम् ॥ ३२ ॥**

सपाटायां सपीठायां सूच्यामनुपातेन कर्णावलम्बकयुतौ कर्णावलम्बयोरधरे खण्डे साध्ये कर्णावलम्बमाने तदूने तयोरूर्ध्वे खण्डे भवतः ।

अत्र चतुर्वेदाचार्येण त्रैराशिकेन यत् सर्वं साधितं तदेव भास्करेण सूत्रत्वेनोपनिबद्धम् । भास्करेण स्वसूत्रे नामान्तरमात्रमेव कृतम् । यथा चतुर्वेदाचार्येण यस्य पाटसंज्ञा कृता तस्यैव भास्करेण पीठसंज्ञा । एवं सूचीक्षेत्रानुपातो भास्करलीलावतीतः स्फुटः किं ग्रन्थगौरवेणेति । चतुर्वेदाचार्येण सूचीक्षेत्रे तदेवोदाहरणं लिखितं यद्भास्करेण 'द्विपञ्चाशन्मितत्र्येकचत्वारिंशन्मितौ भुजौ'—इत्यादि विषमचतुर्भुजे लिखितम् । अत्र लम्बादयो भिन्ना भवन्ति तेनात्र भुजादीन् पञ्चगुणान् कृत्वा भास्करेण सूचीक्षेत्रोदाहरणमुपनिबद्धमिति *भास्करस्य कल्पना वस्तुतश्चतुर्वेदोक्तैव* ॥ ३२ ॥

इदानीमिष्टाभ्यां भुजकोटिकर्णानयने करणसूत्रम् ।

**कृतियुतिरसदृशराश्योर्बाहुर्घातो द्विसङ्गुणो लम्बः ।**
**कृत्यन्तरमसदृशयोर्द्विगुणं द्विसमत्रिभुजभूमिः ॥ ३३ ॥**

द्विसमत्रिभुजं समद्विबाहुकं त्रिभुजम् । समद्विबाहुनि शिरःकोणादाधारोपरिलम्बवशेन जात्यत्र्यस्रद्वयं समानं भवेत् तत्र भुजो द्विगुणः समद्विबाहुभूमिर्भवेदत एतदनुरूपमेव भास्करोक्तम्—'इष्टयोराहतिर्द्विघ्नी कोटिर्वर्गान्तरं भुजः' इत्यादि ।

अत्रोपपत्तिः । द्वयो राश्योर्युतिवर्गस्यान्तरवर्गस्य चान्तरं चतुर्गुणघातसमं भवतीति कल्पितौ वर्गात्मकौ राशी $\text{इ}_1^2$, $\text{इ}_2^2$ । अनयोर्योगः कर्णः $= \text{इ}_1^2 + \text{इ}_2^2$ । भुजः $= \text{इ}_1^2 - \text{इ}_2^2$ । अनयोर्वर्गान्तरस्य $४ \, \text{इ}_1^2 \times \text{इ}_2^2$ अस्य मूलं कोटिः $= २ \, \text{इ}_1 \times \text{इ}_2$ ॥ ३३ ॥

इदानीमभीष्टजात्यद्वयेन विषमत्रिभुजानयनाय करणसूत्रम् ।

**इष्टभुजेन भक्तो द्विधेष्टवर्गः फलेष्टयोगार्धे ।**

**विषमत्रिभुजस्य भुजाविघ्नेनफलार्धयोगो भूः ॥ ३४ ॥**

इष्टवर्गो द्विधा स्थाप्य. । एकत्रैकेनेष्टेनापरत्रोऽन्येनेष्टेन भक्तः । फलेष्टयोगार्धे विषमत्रिभुजस्य भुजौ भवतः । इष्टोनफलार्धे आबाधे भवतोऽनयोर्योगो विषमत्रिबाहोर्भूर्भवतीति ।

अत्रोपपत्तिः । इष्टो लम्ब. प्रकल्पितः स च लम्बादुभयतो ये जात्ये तयोः कोटिस्तद्वर्गो भुजकर्णवर्गान्तरसमोऽतो द्वाविष्टौ जात्यद्वये भुजकर्णान्तरसमौ प्रकल्पितौ । ततो 'वर्गान्तर राशिवियोगभक्तम्'—इत्यादिना भुजकर्णयुतिः सिध्यति । ततः संक्रमणेन भुजकर्णौ । अत्र भुजावेव लम्बादुभयत आबाधे अतस्तयोर्योगो विषमत्रिबाहुधारा भवतीति ॥ ३४ ॥

इदानीं जात्यद्वयेनायतानयनाय करणसूत्रम् ।

**इष्टस्य भुजस्य कृतिर्भक्तोनेष्टेन तद्दलं कोटिः ।**
**आयतचतुरस्य क्षेत्रस्येष्टाधिका कर्णः ॥ ३५ ॥**

इष्टस्य भुजस्य कृतिरिष्टेन भक्तेष्टोना च या सह्वा भवति तदर्धमायतचतुरस्रस्य क्षेत्रस्य कोटिर्भवति । सा कोटिरिष्टाधिकाऽऽयतचतुरस्रस्य कर्ण. स्यात् ।

अत्रोपपत्तिः । आयतचतुरस्रे कर्णवशेन जात्यद्वय भवति । तत्रायतभुजो भुजः । आयतकोटिः कोटि. । आयतकर्ण. कर्णः । अत आयतेऽभुज भुज मकल्प्य कोटिकर्णान्तरमिष्ट प्रकल्प्य कोटिकर्णानयन सुगमम् ॥ ३५ ॥

इदानीं समानलम्बचतुर्भुजानयनाय करणसूत्रम् ।

**आयतकर्णौ बाहू भुजकृतिरिष्टेन भाजितेष्टोना ।**
**द्विहृता कोट्यधिका भूर्मुखमूना द्विसमचतुरस्रे ॥ ३६ ॥**

द्विसमचतुरस्रे समानलम्बचतुर्भुजे यत्र भुजौ समौ तस्मिन् कस्याप्यायतस्य कर्णौ बाहू कल्प्यौ । आयतभुजस्य कृतिरिष्टेन भक्तेष्टोना च कार्या ततो द्विहृता कार्या । साऽऽयतकोट्यधिका समानलम्बचतुर्भुजस्य भूर्भवति सैवायतकोट्यूना समानलम्बचतुर्भुजस्य मुख भवति ।




अत्रोपपत्तिः । यत्रायते घाता = जागा कोटिः ।

आता = काजा भुजः । आघा = कागा कर्णः । तद्वयेन समानलम्बे कर्णमितौ भुजौ जातौ । अत्र आगा − गाता = इ ।

आगाताजात्ये आता = आयतस्य भुज एव भुजः । ततो 'भुजाद्वर्गितात् कोटिकर्णान्तराप्तम्'–इत्यादिना गाता–प्रमाणं भवति ततः गाता + घाता = गाघा । गाता − जागा = ताजा = आका । अत उपपन्नम् ॥ ३६ ॥

इदानीमायतेन त्रिसमभुजचतुर्भुजानयनाय करणसूत्रम् ।

**कर्णकृतिस्त्रिसमभुजाश्रयश्चतुर्थो विशोध्य कोटिकृतिम् ।**
**बाहुकृतेस्त्रिगुणाया यद्यधिको भूर्मुखं हीनः ॥ ३७ ॥**

यत्र समानलम्बचतुर्भुजे द्वौ भुजौ भूमिर्वा मुखमिति त्रय मिथः सम तत् त्रिसमभुजचतुर्भुजमुच्यते । तत्राभीष्टायतकर्णकृतिरेव त्रिसमभुजा भवन्ति । त्रिगुणाया आयतभुजकृतेरायतकोटिकृतिं विशोध्य शेषसमस्त तुर्यो बाहुर्ज्ञेयः । स च त्रिसमभुजाधिकस्तदा भूर्हीनस्तदा मुखं भवतीति स्फुटम् ।




अत्रोपपत्तिः । आचार्योक्तजात्यस्य भुजकोटी इष्टौ प्रकल्प्य ३३ सूत्रेण साधितमन्यजात्यम् । तद्वयेनेह समलम्बचतुर्भुजं विरच्यते ।

तत्र आघा = आका = कागा = भु$^{2}$ + को$^{2}$ = क$^{2}$ ।

घाता = जागा = भु$^{2}$ − को$^{2}$ ।

अतः घागा = घाता + ताजा + जागा = ताजा + २ घाता = आका + २ घाता = भु$^{2}$ + को$^{2}$ + २(भु$^{2}$ − को$^{2}$) = भु$^{2}$ + को$^{2}$ + २भु$^{2}$

$-२ को^{२} = ३ भु^{२} - को^{२}$ । अत्र यदि $३ भु^{२} - को^{२} > क^{२}$ तदा $३ भु^{२} - को^{२}$ भूरन्यथा मुखं कल्प्यम् ।

अथ यदा $३ भु^{२} - को^{२} > क^{२}$

$> भु^{२} + को^{२}$

वा $२ भु^{२} > २ को^{२}$

वा $भु^{२} > को^{२}$

यतो यदा $भु > को$ तदा यागा भूमानमन्यथा मुखं ज्ञेयमिति ॥ ३७ ॥

इदानीं जात्यद्वयतो विषमचतुरस्रानयनाय करणसूत्रम् ।

**जात्यद्वयकोटिभुजाः परकर्णगुणा भुजाश्चतुर्विषमे ।**
**अधिको भूर्मुखहीनो बाहुद्वितयं भुजावन्यौ ॥ ३८ ॥**

स्पष्टार्थम् । अभीष्टजात्यद्वयबाहुकोटयः परस्परं कर्णहता भुजा इति –इत्यादि सर्वं भास्करोक्तमेतदनुरूपमेव । यत्र विषमचतुर्भुजे कर्णौ परस्परं लम्बरूपौ तस्यैव जात्यद्वयतो भुजा भवन्तीति चेत्युक्त्या स्फुटम् ॥ ३८ ॥

इदानीं कोण्येकदेशेन युते कर्णे भुजे च दृष्टे कोटिकर्णज्ञानाय करणसूत्रम् ।

**इष्टगुणकारगुणितो गिर्युच्छ्रायः पुरान्तरमनष्टम् ।**
**द्वियुतगुणकारभाजितमुत्पातोऽन्यस्य समगत्योः ॥ ३९ ॥**

अत्र चतुर्वेदाचार्यः । इहोदाहरणम् । कस्यापि पर्वतस्योपरि तपस्विनौ द्वौ प्रतिवसतस्तत्रैकः सिद्धः खगामी । स किल पर्वताग्रादुत्प्लुत्य कियत्यपि दूरे गत्वा कर्णगत्या नगरमासादयति । द्वितीयः पर्वतादवतीर्य पद्भ्यां नगरमासादयति तुल्यश्च गतयस्तयोः । तदिच्छामि ज्ञातुं पर्वतनगरान्तरं कियद्दूरे सिद्धस्योत्पतनं चेत्येवंस्थिते सूत्रं व्याख्यायते । इष्ट एव कश्चिद्गिरेरुच्छ्रायः कल्प्यते स एवाभीष्टगुणकारगुणितोऽध्वा गिरिनगरान्तरे भवति (तदेव पुरान्तरम्)। ततस्तमनष्टं द्वियुतगुणकारेण विभज्यात फलं तत सिद्धस्योत्पातयोजनानि भवन्ति । ततो गिर्युच्छ्रायोत्पातयोगः कोटिः । गिरिनगरान्तरं भुजा । तद्वर्गयोगमूलं कर्णं पुरोत्पातयोरन्तरं स्यादिति । तद्यथा । द्वादशको गिर्युच्छ्रायः १२ । अत्र इष्टगुण

कारेण चतुष्केणानेन ४ गुणितो जातः ४८ । एतत् पर्वतनगरान्तरम् । एतदेव द्वियुतगुणकारेणानेन ६ भाजितम् ८ । एतावानुत्पातः । अत्र कोटिर्जाता २० । अस्या वर्गः ४०० । भुजा ४८ । अस्या वर्गः २३०४ । अनयोर्योगः २७०४ । अतो मूलं कर्णः ५२ । सिद्धमायतार्धम् । अत्रैक सिद्धस्य कोट्युपरितनखण्डभुजयोर्योगोऽध्वा ६० । द्वितीयसिद्धस्योपरितनखण्डकर्णयोर्योगोऽध्वा ६० । एवमनया दिशा क्षेत्रोत्पादनमूह्यम् ।'




एवं 'वृक्षाद्धस्तशतोच्छ्रयात्'-इत्यादिभास्करोक्तोदाहरणमेतदनुरूपमेव । अतो गिउ = ताउ । द·गिउ = पुअ = सअ । ततो 'द्विनिघ्नता लोच्छ्रितिसंयुतं यत् सरोऽन्तरम्'-इत्यादिना

$$\text{उत्पातः} = \text{उड्डीनम्} = \frac{\text{ताउ} \times \text{सअ}}{२\text{ताउ} + \text{सअ}} = \frac{\text{गिउ} \times \text{पुअ}}{२\,\text{गिउ} + \text{द}\,\text{गिउ}} = \frac{\text{पअ}}{२ + \text{द}}$$

अत उपपद्यते । भास्करप्रकारोपपत्त्यर्थम् सग = ताउ + सअ । अत्र तालोच्छ्रितियोजनेन कोटिकर्णयोगः = २ ताउ + सअ । ततः कोटिकर्णान्तरम्

$$= \frac{\text{सअ}^२}{२\text{ताउ} + \text{सअ}} \text{ । कोटिः} = \frac{(२\text{ताउ} + \text{सअ})^२ - \text{सअ}^२}{२(२\text{ताउ} + \text{सअ})}$$

उड्डीनम् = कोटि-

ताउ

$$= \frac{४\,\text{ताउ}^२ + ४\,\text{ताउ}\ \text{सअ}}{२(२\,\text{ताउ} + \text{सअ})} - \text{ताउ} = \frac{\text{ताउ}\ \text{सअ}}{२\,\text{ताउ} + \text{सअ}} \text{ ।}$$

अत उपपद्यते भास्करोक्तम् ॥ ३९ ॥



# अथ वृत्तक्षेत्रगणितम् ॥

तत्र वृत्तपरिधिफलानयनाय सूत्रम् ।

**व्यासव्यासार्धकृती परिधिफले व्यावहारिके त्रिगुणे ।**
**तद्वर्गाभ्यां दशभिः सङ्गुणिताभ्यां पदे सूक्ष्मे ॥ ४० ॥**

व्यासो व्यासार्धकृतिश्चैते त्रिगुणे तदा व्यावहारिके व्यवहारयोग्ये क्रमेण परिधिफले भवतः । तद्वर्गाभ्यां व्यासव्यासार्धवर्गवर्गाभ्यां दशभिः सङ्गुणिताभ्यां पदे मूले ते सूक्ष्मे परिधिफले भवतः ।

अत्रोपपत्तिः । प्रथमप्रकारे व्यासत्रिगुणः परिधिः स्थूलः कल्पितः । द्वितीयप्रकारे व्यासवर्गो दशगुणः परिधिवर्गः कल्पितस्ततः परिधिव्यासघातचतुर्थांशफलमिति सुगमा वासना । वस्तुतः प्रकारद्वय स्थूलमेव । सूक्ष्मार्थं 'व्यासे भनन्दाग्निहते विभक्ते'—इति भास्करप्रकारस्य लीलावत्या मदीयोपपत्तिर्विचिन्त्येति ॥ ४० ॥

इदानीं जीवाव्यासयोरानयनाय करणसूत्रम् ।

**वृत्ते शरोनगुणिताद्व्यासाच्चतुराहतात् पदं जीवा ।**
**ज्यावर्गश्चतुराहतशरभक्तः शरयुतो व्यासः ॥ ४१ ॥**

स्पष्टार्थम् । 'ज्याव्यासयोगान्तरघातमूलम्'—इत्यादि भास्करोक्तमेतदनुरूपमेव ॥ ४१ ॥

इदानीं ज्याव्यासाभ्यां शरानयनाय करणसूत्रम् ।

**ज्याव्यासकृतिविशेषान्मूलव्यासान्तरार्धमिषुरल्पः ।**
**व्यासौ ग्रासोनगुणौ ग्रासोनैक्योद्धृतौ ग्राह्यौ ॥ ४२ ॥**

पूर्वार्धे 'ज्याव्यासयोगान्तरघातमूलं व्यासस्तदूनो दलितः शरः स्यात्'—इत्यादिभास्करोक्तानुरूपमेव । उत्तरार्धव्याख्याया चतुर्वेदाचार्यः । 'वृत्तद्वयोर्यावान् परस्परमनुप्रवेशः स इह ग्रासशब्देनोच्यते । तेनाय-मर्थः । व्यासौ पृथक् संस्थाप्य ग्रासप्रमाणेनोनौ कर्तव्यौ ततस्तावनष्टौ कृत्वा

पृथगृत्यासेनैव गुणनीयौ ततो व्यासोनव्यासयोर्योगेन विभक्तेदुभयतोऽपि-लब्धे फले शरौ लघू भवतः । तयोश्च योऽल्पः स महति वृत्ते यश्च महान् स लघुनि वृत्त इति' ।




अत्रोपपत्तिः । लघुवृत्तकेन्द्रम् के₁ । व्यासार्धम् = के₁घ । ग्रासप्रमाणम् = गघ । घन = शरमानम् । तत्प्रमाणम् = या । ततः गन = ग्रा − या = बृहद्वृत्तस्य शरः । ततः पूर्वविधिना शरघ्नयतोऽर्धज्याकर्गः = नत² = (२ के₁घ − या) या

² = (२ के₂ ग − ग्रा + या) (ग्रा − या)

वा, व्या₁ या − या² = व्या₂ ग्रा − व्या₂ या − ग्रा² + ग्रा या + ग्रा या − या²

= व्या₂ ग्रा − व्या₂ या + २ ग्रा या − ग्रा² − या²

यदि २ के₁ घ = व्या₁ । २ के₂ ग = व्या₂ ।

ततः समशोधनादिना

या (व्या₁ + व्या₂ − २ ग्रा) = ग्रा (व्या₂ − ग्रा)

$$या = \frac{ग्रा\ (व्या_2 - ग्रा)}{व्या_1 - ग्रा + व्या_2 - ग्रा}$$ एतदूनं ग्रासमानं जातो

$$घनसमोऽन्यशरः = \frac{ग्रा\ (व्या_1 - ग्रा)}{व्या_1 - ग्रा + व्या_2 - ग्रा}$$ । अत उपपन्नम् । केन्द्रगामि-के₁के₂रेखातो वृत्तपूर्णज्या रेखागणितयुक्तितो द्विभक्ता भवतीति स्फुटम् ॥ ४२॥

इदानीं वृत्तयोः सम्पर्के जीवाशराभ्यां व्यासयोरानयनाय करणसूत्रम् ।

**इषुशरहृयभक्ते ज्यार्धकृती शरयुते फले व्यासौ ।**
**शरयोः फलयोरैक्यं ग्रासो ग्रासोनमैक्यं तत् ॥ ४३ ॥**

वृत्तसम्पर्के जीवा पूर्वसूत्रस्थक्षेत्रे वर्तमाना । ततो 'जीवार्धवर्गे शरभ-क्तयुक्ते' इत्यादिभास्करविधिना स्वस्वशरतो व्यासानयनं सुगमम् । पूर्वोक्त-क्षेत्रतः शरयोरैक्यं ग्रासः स्फुट एव । फलयोरैक्यं च ग्रासोनमैक्यं व्यास-योगमानं तद्भवति ।

अत्रोपपत्तिः पूर्वप्रदर्शितक्षेत्रतः स्पष्टा ॥ ४३ ॥

इति क्षेत्रव्यवहारः ।

# अथ खातव्यवहारः ।

---

तत्रादौ खातफलानयनाय करणसूत्रम् ।

**क्षेत्रफलं वेधगुणं समखातफलं हृतं त्रिभिः सूच्याः ।**
**मुखतलतुल्यभुजैक्यान्येकाप्तहृतानि समरज्जुः ॥ ४४ ॥**

क्षेत्रफलं वेधेन गाम्भीर्येण हतं समखातस्य घनफलं भवेत् । तद्-घनफलं त्रिभिर्हृतं सूच्या घनफलं भवेत् ।

अत्रोपपत्त्यर्थं मत्संशोधिता भास्करलीलावती द्रष्टव्या ।

उत्तरार्धं चतुर्वेदाचार्यः । 'एकस्यैव खातस्य मुखतलतुल्यभुजस्य मध्ये यदा कतिचिद्धस्ता भिन्नवेधा भवन्ति तदा पृथुत्वभुजस्तावदेक एव सर्वेषां लघुखातकानां दैर्घ्यस्वभुजद्वयस्य स्ववेधस्य च यो घातस्तस्य मुखतलतुल्यभुजैक्यमिति संज्ञा । एवं बहूनां लघुखातानां बाहूनामैक्यानि भवन्ति तानि पृथगेकाप्तहृतानि समरज्जुर्भवति । दीर्घभुजा या खण्डिता सा सकलैकाप्तशब्देनोच्यते' । एवमस्य सूत्रस्य तथैवार्थो यथा च भास्करेण 'गणयित्वा विस्तारं बहुषु स्थानेषु'—इत्यादौ वर्णितम् ।

अत्र चतुर्वेदाचार्योक्तोदाहरणम् ।

त्रिंशद्धस्ता तु या वापी दैर्घ्येणाष्टौ पृथुत्वतः ।
तत्रान्ते पञ्च खातानि वेदाद्यैर्भुजखण्डके ॥
वेधश्च नवसप्ताग्निद्विसङ्ख्यो यथाक्रमम् ।
खातकानां समा रज्जुर्याऽत्र स्याच्छीघ्रमुच्यताम् ॥

न्यासः । (दैर्घ्यम् ३०, पृथुत्वम् ८)

| वे | ध | ध | ध | वे |
| --- | --- | --- | --- | --- |
| ९ | ७ | ७ | ३ | २ |
| ४ | ५ | ६ | ७ | ८ |

अत्र मुखतलभुजैक्यानि क्रमशः ३६ । ३५ । ४२ । २१ । १६ । एतान्येकाप्तेनानेन ३० भाजितानि एकत्रीकृतानि $\frac{१५०}{३०}$ = ५ इयं समा रज्जुः । अनया क्षेत्रफलं २४० गुणितं जातं सकलस्यैव खातस्य घनफलम् = १२०० ।

अत्र पुनश्चतुर्वेदाचार्यः ।

'सूचादरात्रा प्रायेणाद्रुगेणार्थो यत, फलेन सवाद इति' ॥ ४४ ॥

इदानीं खातान्तरे करणसूत्रे ।

**मुखतलयुतिदलगणितं वेधगुणं व्यावहारिकं गणितम् ।**
**मुखतलगणितैक्यार्धं वेधगुणं स्याद्गणितमौत्रम् ॥ ४५ ॥**
**औत्रगणिताद्विशोध्य व्यवहारफलं भजेत् त्रिभिः शेषम् ।**
**लब्धं व्यवहारफले प्रक्षिप्य भवति फलं सूक्ष्मम् ॥ ४६ ॥**

यस्मिन् खाते मुखबाह्वोऽन्याद्र्शास्तलबाहवश्चान्याद्र्शास्तत्र मुखतलबाह्वोर्युतिदल ग्राह्यमेवमन्यस्यां दिशि ततस्तयोर्दलयोर्घातो गणितं तेचफल वेधहत व्यावहारिकं खातफलं भवति । अथ मुखभुजतः फल तल-भुजतोऽपि यत फल तयोरैक्यार्धं वेधगुणमौत्रसञ्ज्ञं खातफलं भवति ।

व्यवहारफलमौत्रगणितादौत्रफलाद्विशोध्य शेष त्रिभिर्भजेल्लब्ध व्यवहारफले प्रक्षिप्य सयोज्य सूक्ष्म खातफल भवति ।

अत्र चतुर्वेदोक्तोदाहरणम् ।

> चतुरस्रा समा वापी दशहस्ता मुखे तु या ।
> तले षडङ्गुलिका सैव त्रिशङ्कुधा विनिर्मिता ॥
> व्यवहारौत्रसूक्ष्माणि तत्र ब्रूहि फलानि मे ।

अत्र मुखबाहु १० । तलबाहु ६ । अनयोर्युतिदलम् ८ । अन्यस्यां दिश्यप्येवम् ८ । आभ्यां गणितम् ६४ । वेधहत व्यवहारफलम् = १९२० ।

अथ मुखफलम् = १०० । तलफलम् = ३६ । अनयोर्योगार्धम् ६८ । वेधहतमौत्रफलम् = २०४० । औफ – व्यफ = १२० । त्रिभिर्हृत लब्धम् ४० । इद व्यवहारफले प्रक्षिप्य जात सूक्ष्म वापीघनफलम् = १९६० ।




अत्र वाप्यां यदि आघा = अ, धादा = क, गाघा = ग, दाता = घ । वे = वेध । तदाऽऽचार्यप्रकारेण व्यवहारफलम् = $\frac{\text{अ}+\text{क}}{२}\cdot\frac{\text{ग}+\text{घ}}{२}\cdot$ वे

औत्रफलम् = $\frac{\text{अ ग}+\text{क घ}}{२}\cdot$ वे

# अथ खातव्यवहारः ।

तत्रादौ खातफलानयनाय करणसूत्रम् ।

क्षेत्रफलं वेधगुणं समखातफलं हृतं त्रिभिः सूच्याः ।
मुखतलतुल्यभुजैक्यान्येकाप्तहृतानि समरज्जुः ॥ ४५ ॥

क्षेत्रफलं वेधेन गाम्भीर्येण हतं समखातस्य घनफलं भवेत् । तद् घनफलं त्रिभिर्हृतं सूच्या घनफलं भवेत् ।

अत्रोपपत्त्यर्थं मच्छोधिता भास्करलीलावती द्रष्टव्या ।

उत्तरार्धं चतुर्वेदाचार्यः । 'एकस्यैव खातस्य मुखतलतुल्यभुजस्य मध्ये यदा कतिचिद्ध्रस्वा भिन्नवेधा भवन्ति तदा पृथुत्वभुजस्तावदेक एव सर्वेषां लघुखातकानां दैर्घ्यस्वभुजखण्डस्य स्ववेधस्य च यो घातस्तस्य मुखतलतुल्यभुजैक्यमिति संज्ञा । एवं बहूनां लघुखातानां बाहूनामैक्यानि भवन्ति तानि पृथगेकाप्तहृतानि समरज्जुर्भवति । दीर्घभुजा या अधिकृता सा सकलैकाप्तशब्देनोच्यते' । एवमस्य सूत्रस्य तथैवार्थो यथा च भास्करेण 'गणयित्वा विस्तारं बहुषु स्थानेषु'–इत्यादौ कथितः ।

अत्र चतुर्वेदाचार्योक्तोद्देशकः ।

चतुरस्रा तु या वापी दैर्घ्येणाष्टौ पृथुत्वतः ।
तत्रान्तः पञ्च खातानि वेदाद्यैर्भुजखण्डकैः ॥
वेधश्च नवसप्तागत्रिद्विमङ्गो यथाक्रमम् ।
खातकानां समा रज्जुर्याऽत्र स्याच्छीघ्रमुच्यताम् ॥

न्यासः ।

३०

| | | | | | |
|---|---|---|---|---|---|
| ८ | वे ९ | ख ७ | ख ७ | ख ३ | वे २ |
| | ४ | ५ | ६ | ७ | ८ |

अत्र मुखतलभुजैक्यानि क्रमशः ३६ । ३५ । ४२ । २१ । १६ । एतान्येकाप्तमानेन ३० भाजितानि एकत्रीकृतानि $\frac{१५०}{३०}$ = ५ इयं समा रज्जुः । अनया क्षेत्रफलं २४० गुणितं जातं सकलस्यैव खातस्य घनफलम् = १२०० ।

अत्र पुनश्चतुर्वेदाचार्यः ।

'सूच्यन्तराणां प्रायेणेदृगेवार्थो यतः फलेन समाद इति' ॥ ४४ ॥

इदानीं खातान्तरे करणसूत्रे ।

**मुखतलयुतिदलगणितं वेधगुणं व्यावहारिकं गणितम् ।**
**मुखतलगणितैक्यार्धं वेधगुणं स्याद्गणितमौत्रम् ॥ ४५ ॥**
**औत्रगणिताद्विशोध्य व्यवहारफलं भजेत् त्रिभिः शेषम् ।**
**लब्धं व्यवहारफले प्रक्षिप्य भवति फलं सूक्ष्मम् ॥ ४६ ॥**

यस्मिन् खाते मुखबाहवोऽन्यादृशास्तलबाहवश्चान्यादृशास्तत्र मुखतलबाह्वोर्युतिदलं यत्समेवमन्यस्यां दिशि ततस्तयोर्दलयोर्घातो गणितक्षेत्रफलं वेधहतं व्यावहारिकं खातफलं भवति । अथ मुखभुजतः फलं तलभुजतोऽपि यत् फलं तयोरैक्यार्धं वेधगुणमौत्रसंज्ञं खातफलं भवति ।

व्यवहारफलमौत्रगणितादौत्रफलाद्विशोध्य शेषं त्रिभिर्भजेल्लब्धं व्यवहारफले प्रक्षिप्य संयोज्य सूक्ष्मं खातफलं भवति ।

अत्र चतुर्वेदोक्तोद्देशकः ।

चतुरस्रा समा वापी दशहस्ता मुखे तु या ।
तले षड्हस्तिका सैव त्रिंशद्वेधा विनिर्मिता ॥
व्यवहारौत्रसूक्ष्माणि तत्र ब्रूहि फलानि मे ।

अत्र मुखबाहुः १० । तलबाहुः ६ । अनयोर्युतिदलम् ८ । अन्यस्यां दिश्यप्येवम् ८ । आभ्यां गणितम् ६४ । वेधहतं व्यवहारफलम् = १९२० ।

अथ मुखफलम् = १०० । तलफलम् = ३६ । अनयोर्योगार्धम् ६८ । वेधहतमौत्रफलम् = २०४० । औफ − व्यफ = १२० । त्रिभिर्हृतं लब्धम् ४० । एवं व्यवहारफले प्रक्षिप्य जातं सूक्ष्मं वापीघनफलम् = १९६० ।




अत्र वाप्यां यदि आघा = अ, धादा = क, गांघा = ग, दाता = घ । वे = वेधः । तदाऽऽर्यप्रकारेण व्यवहारफलम् = $\frac{अ + क}{२} \cdot \frac{ग + घ}{२} \cdot वे$

औत्रफलम् = $\frac{अ \cdot ग + क \cdot घ}{२} \cdot वे$

$$\text{सूक्ष्मफलम्} = \text{व्यफ} + \frac{\text{औफ} - \text{व्यफ}}{३}$$

$$= \frac{\text{वे}}{२}\left\{\frac{(\text{अ}+\text{क})(\text{ग}+\text{घ})}{२} + \frac{२(\text{अ ग}+\text{क घ}) - (\text{अ}+\text{क})(\text{ग}+\text{घ})}{२\times ३}\right\}$$

$$= \frac{\text{वे}}{६}\left\{(\text{अ}+\text{क})(\text{ग}+\text{घ}) + \text{अ ग} + \text{क घ}\right\}$$

अत्र 'मुखजतलजतद्युतिजक्षेत्रफलैक्यं हृतं षड्भिः'–इत्यादि भास्करोक्तमेवाचार्यप्रकारेण घनफलं सूक्ष्ममेव भवति । भास्करप्रकारोपपत्त्यर्थं मत्संशोधिता तल्लीलावती द्रष्टव्या ॥ ४५–४६ ॥

इति खातव्यवहारः ॥



# अथ चितिव्यवहारः ।



तत्रादौ चितौ करणसूत्रम् ।

**आकृतिफलमौच्च्याहतमग्रतलैक्यार्धमौच्च्यदैर्घ्यगुणम् ।**
**घनगणितमिष्टकाघनफलेन हृतमिष्टकागणितम् ॥ ४७ ॥**

अग्रे तले च यत् पृथुत्वं तदैक्यार्धमौच्च्याहतमाकृतिफलं भवेत् पुनस्तदौच्च्यदैर्घ्याहतमौच्च्यसम्बन्धि यद्दैर्घ्यं तेन गुणं चितिघनफलं घनगणिताख्यं भवेत् । तदिष्टकाघनफलेन हृतमिष्टकागणितमिष्टकाप्रमाणं भवति । 'उच्छ्रयेण गुणितं चितेः किल'—इत्यादि भास्करोक्तमेतदनुरूपमेव ।

अत्रोपपत्तिः । अग्रतलपृथुत्वैक्यार्धं मध्यममानेन चितेः पृथुत्वं प्रकल्प्य चितेर्घनफलं साधितं तदिष्टकाघनफलहृतमिष्टकापरिमितिर्भवतीति सुगमा वासना ॥ ४७ ॥

अत्र चतुर्वेदोक्तोद्देशकः ।

शतहस्ता तु दैर्घ्येण मूले पञ्च त्रयो मुखे ।
पृथुत्वेनोच्छ्रितिः सप्त चितेरस्याः फलं वद ॥

अस्याश्चितेर्घनफलम् = २८०० ।

इति चितिव्यवहारः ॥



# अथ क्राकचिकव्यवहारे करणसूत्रे

विस्तारायामाङ्गुलघातो मार्गाहतो द्विवेदहृतः।
किष्क्वङ्गुलानि लब्धं तत् पण्णवतिर्भवति कर्म ॥ ४८ ॥
शाकादिषु शाल्मल्यां शतद्वयं बीजके शतं विंशम्।
शालसरलादिषु शतमथाविदारुषु चतुःषष्टिः ॥ ४९ ॥

विस्तारः काष्ठस्य घनत्वमर्थात् पिण्ड उच्यते। आयामो दैर्घ्यं तेनायमर्थः। काष्ठविस्तारायामयोर्वेध एकपट्टस्याङ्गुलात्मकं फलं तन्मार्गाहतं दारुदारणपथैराहतं सकलपट्टफलं तद्द्विवेद ४२ हृतं फलं किष्क्वङ्गुलानि भवन्ति। ('किष्कुर्हस्ते वितस्तौ च' — इति त्रि० को० नानार्थवर्गे)। अथ मूलयोः पिण्डसाम्यं कल्प्यते तदा 'पिण्डयोगदलमग्रमूलयोः' — इत्यादि भास्करोक्तमेतदनुरूपमेव। भास्करेण वर्गाङ्गुलफले हस्तवर्गाङ्गुलैः षट्स्वरेषु ५७६ विभक्ते करात्मकं फलं प्रकल्पितमिहाचार्येण काष्ठमृदुत्वकठिनत्ववशेन भिन्नं भिन्नं करात्मकं फलं साध्यते। तत्र शाकादिषु हस्तवर्गाङ्गुलानि = ४२ × ९६। शाल्मल्याम् = ४२ × २००। बीजके = ४२ × १२०। शालसरलादिषु = ४२ × १००। आविदारुषु खदिरादिषु च = ४२ × ६४ कल्पितानि। तत्राङ्गुलात्मकं फलं सर्वत्र द्विवेदैर्विभज्य फलं किष्क्वङ्गुलानि जातानि तानि काष्ठविशेषे स्वस्वहारेण विभज्य कर्माणि। कर्मकाराणां सम्बन्धि हस्तकर्म भवति तत एकस्य हस्तकर्मणो यन्मूल्यं तेन गुण्यं सर्वहस्तकर्म भवतीति सर्वं त्रैराशिकेन स्फुटम्।

अत्र चतुर्वेदोक्तोद्देशकः।

'दशहस्तास्तु दैर्घ्येण विस्तारेण षडङ्गुलम्।
मार्गैश्च सप्तभिर्ज्ञेयौ बीजवृक्षस्य काष्ठकम्॥
पर्यायैश्चाष्टभिः कर्म तत्र मूल्यं निगद्यताम्।

न्यासः। पतिताङ्गविस्ताराङ्गुलानि ६। आयामाङ्गुलानि २४०।

अनयोर्घातः १४४० मार्गाहतः १००८० द्विवेदैरेते – ४२ हृतः २४० । एतानि किष्कुघ्नानि बीजहतत्वाद्विशत्यधिकशतेन भागे हृते लब्धं कर्मसङ्ख्येयम् २ । कर्ममूल्येनानेन ८ गुणिता पणसङ्ख्या जाता १६ । एतावन्तः पणाः शिल्पिने देया' इति ॥ ४८–४९ ॥



# अथ राशिव्यवहारः ।

तत्र शूकादिधान्यराशिप्रमाणानयने करणसूत्रम् ।

---

नवमः शूकिषु दशमः स्थूलेष्वेकादशो भवत्यणुषु ।
परिधेर्वेधः परिधेः षडंशवर्गाहतो गणितम् ॥ ५० ॥

स्पष्टार्थम् । 'अनणुषु दशमांशोऽणुष्वथैकादशांशः'—इत्यादि भास्करोक्तमेतदनुरूपमेव ।

अत्रोपपत्तिः । धान्यस्थितिवशेन वृत्ताधारा सूची भवति । तदाधारपरिधिनवमभागादिको धान्यविशेषे वेध उपलब्ध्या स्थिरीकृतः । सूचीघनफलं त्र्याधारफलं वेधत्र्यंशगुणम् । तत्र स्थूलत्वात् परिधित्र्यंशो व्यासः कल्पितः । ततो वृत्तफलम् $= \frac{प \times प}{३ \times ४}$ । वेधत्र्यंशहतं

घनफलम् $= \frac{प^{२} वे}{३६} = \left(\frac{प}{६}\right)^{२} \cdot वे$

अत उपपन्नम् ॥ ५० ॥

इदानीं भित्त्यन्तर्बाह्यकोणसंलग्नराशिप्रमाणानयने करणसूत्रम् ।

द्विचतुःसत्र्यंशगुणो भित्त्यन्तर्बाह्यकोणगः परिधिः ।
प्राग्वत् कृत्वा गणितं तद्भजितं स्वगुणकारहृतम् ॥ ५१ ॥

सत्र्यंशः सैकत्रिभागः । गणितं घनफलम् । शेषं स्पष्टार्थम् । 'द्विवेदसत्रिभागैकनिघ्नात् तु परिधेः फलम्'—इत्यादि भास्करोक्तमेतदनुरूपमेव ॥ ५१ ॥

इति राशिव्यवहारः ।



# अथ छायाव्यवहारः ।

तत्र छायातः इष्टकालार्थमिष्टकालाच्छायानयनार्थं च करणसूत्रम् ।

---

छायानरसैकहृतं द्युदलं प्रागपरयोर्द्युगतशेषम् ।
दिनगतशेषांशहृतं द्युदलं छाया नरघ्नैकम् ॥ ५२ ॥

छाया । नरः शङ्कुर्भोऽष्टः । छायाया यो नरः शङ्कुभागः स सैको यस्तेन द्युदलं हृतं लब्धं प्राक्कपाले द्युगतं पश्चिमकपाले द्युशेषं भवति । एवमेतद्विपरीतेन द्युदलं दिनगतावयवेन वा दिनशेषांशेन हृतं लब्धं व्येकं नरः नरगुणं च पूर्वापरकपालयोः क्रमेण छाया भवति । एवमस्य श्लोकस्य व्याख्या पञ्चसिद्धान्तिकासमता यदि तत्र मध्यच्छाया शून्यमिता कल्प्यते । (द्रष्टव्या पञ्चसिद्धान्तिकाप्रकाशिका पृ २६ वा मच्छोधितमुद्रिता त्रिशतिका पृ ४६)

$$\text{तत्र दिनगतशेषा नाड्यः} = \frac{१२\,\frac{\text{दि}}{२}}{१२ + \text{छाया}} = \frac{\frac{\text{दि}}{२}}{१ + \frac{\text{छाया}}{१२}}$$

अत्र द्वादशाङ्गुलशङ्कुतच्छाययोर्या निष्पत्तिः सैवेष्टशङ्कुतच्छाययोर्निष्पत्तिर्भवतीति छायातन्त्रेण स्फुटम् ।

अत्र चतुर्वेदाचार्यः । इयमार्या निष्प्रयोजना तेन नोदाहृता । निरक्षदेशेऽपि छायानयनं कालानयनं वा न सिध्यति । मनुस्मरणेनाचार्येणोपनिबद्धेति' । वराहमिहिरादीनां रीतिमबुद्ध्वाऽऽचार्यगूढार्थमविज्ञायैव चतुर्वेदस्य यत् कथनं तद्बुद्धिमद्भिर्नादरणीयमिति ।

अस्योपपत्त्यर्थं पञ्चसिद्धान्तिकाया पञ्चसिद्धान्तिकाप्रकाशिका विलोक्या किमत्र ग्रन्थगौरवेण ॥ ५२ ॥

इदानीं छायानयनाय करणसूत्रम् ।

दीपतलशङ्कुतलयोरन्तरमिष्टप्रमाणशङ्कुगुणम् ।
दीपशिखौच्च्याच्छङ्कुं विशोध्य शेषोद्धृतं छाया ॥ ५३ ॥

दीपशिखौच्च्याच्छङ्कुं विशोध्य यच्छेषं तेन शेषेणोद्धृता छाया भवति । शेषं स्पष्टार्थम् । 'शङ्कुः प्रदीपतलशङ्कुतलान्तरघ्न'-इत्यादि भास्करोक्तमेतदनुरूपमेव ।

अत्रोपपत्तिस्त्रैराशिकेन सुगमा ॥ ५३ ॥

इदानीं छायाप्रदीपान्तरदीपौच्च्यानयनाय करणसूत्रम् ।

**छायाग्रान्तरगुणिता छाया छायान्तरेण भक्ता भूः ।**
**भूः शङ्कुगुणा छायाविभाजिता दीपशिखयौच्च्यम् ॥ ५४ ॥**

दीपशिखया उच्चमर्थाद्दीपशिखौच्च्यम् । शेषं स्पष्टार्थम् । 'छाया ययोरन्तरसङ्गुणा भा छायाप्रमाणान्तरहृद्भवेद्वा'-इत्यादि भास्करोक्तमेतदनुरूपमेव ।

अत्रोपपत्तिः । साजात्यत्रिभुजानुपातेन स्फुटा ।

सा यथा ।




तदी = दीपशिखौच्च्यम् । श$_1$मू$_1$ = श$_2$मू$_2$ = शङ्कुः । मू$_1$छ$_1$ = प्रथमच्छाया । मू$_2$छ$_2$ = द्वितीयच्छाया । तछ$_1$ = प्रथमभूः । तछ$_2$ = द्वितीयभूः ।

छ$_1$छ$_2$ = छाययोरन्तरम् । दीच = १ । चजटरेखा तमू$_1$छ$_1$मू$_2$छ$_2$रेखासमानान्तरा । तत सजातीयत्रिभुजानुपातेन

$यल = \frac{प्रछा}{श}$ । $यट = \frac{द्विछा}{श}$ । $लट = यट - यल = \frac{द्विछा - प्रछा}{श}$ । दीप

$= \frac{१ \times य_1 य_2}{लट} = \frac{य_1 य_2 \cdot श}{द्विछा - प्रछा}$ ।

ततः प्रथमभूः $= तय_1 = \frac{दीप \; प्र_1 य_1}{श_1 \; ?_1} = \frac{दीप \; प्रछा}{श} = \frac{य_1 य_2 \cdot प्रछा}{द्विछा - प्रछा}$ ।

एवं द्वितीय भूः $= तय_2 = \frac{य_1 य_2 \cdot द्विछा}{द्विछा - प्रछा}$ । अत उपपद्यते सर्वमिदं भास्करोक्तं चेति ॥ ५४ ॥

इदानीं प्रत्युत्पन्नादौ विशेषः प्रदर्श्यते ।

**गुणकारखण्डतुल्यो गुण्यो गोमूत्रिकाकृतो गुणितः ।**
**सहितः प्रत्युत्पन्नो गुणकारकभेदतुल्यो वा ॥ ५५ ॥**

गुणकारस्यैकदशादिस्थानीयखण्डतुल्यो गुण्यः स्थाप्यस्ततस्तैः खण्डैर्गोमूत्रिकाकृतो गुणितः सहितः प्रत्युत्पन्नो गुणनफलं भवति । अर्थात् ते खण्डैः पृथग्गुण्या गुणिता यथास्थानकं सहिता गुणनफलं भवति । वा गुणकारभेदतुल्यो गुणकारखण्डतुल्यो गुण्योऽधोऽधः स्थाप्यस्तैः खण्डकैर्गुणितः सहितः प्रत्युत्पन्नो भवति । अत्र गुणकारस्य यथेच्छरूपविभागात्मकः खण्डो ज्ञेय इति । 'गुण्यस्त्वधोऽधो गुणखण्डतुल्यः'—इत्यादिभास्करोक्तमेतदनुरूपमेव ॥ ५५ ॥

इदानीं प्रकारान्तरेणाह ।

**गुण्यो राशिर्गुणकारराशिनेष्टाधिकोनकेन गुणः ।**
**गुण्येष्टवधोनयुता गुणकेऽभ्यधिकोनके कार्यः ॥ ५६ ॥**

स्पष्टार्थम् । 'इष्टोनयुक्तेन गुणेन निघ्नः'—इत्यादि भास्करोक्तमेतदनुरूपमेव ॥ ५६ ॥

इदानीं भागहारे विशेषमाह ।

**छेदेनेष्टयुतोनेनाप्तं भाज्यादनष्टमिष्टगुणम् ।**
**प्रकृतिस्थच्छेदहृतं लब्ध्या युतहीनकमनष्टम् ॥ ५७ ॥**

भाज्यादिष्टयुतोनेन हरेण हृते यदाप्तं तदनष्टं स्यादिति फल-मुक्तं यदासिद्धं छेदयुतमुदाहरणे च स्यादभीष्टच्छेदस्तेन हृतम्। अत्र या लब्धिस्तयाऽन्तः क्रमेण युतं हीनं च वास्तवा लब्धिः स्यात्। इष्टाधिके छेदे युतमिष्टोने छेदे हीनमनष्टं कार्यमित्यर्थः।

अत्रोपपत्तिः। कल्प्यते। भाज्यः = भा। छेदः = छा। इष्टम् = इ।

तदा वास्तवा लब्धिः $= \frac{\text{भा}}{\text{छा}}$। इष्टयुतोनेन छेदेन

लब्धिः $= \frac{\text{भा}}{\text{छा} \pm \text{इ}}$। तयोरन्तरम् $= \frac{\text{भा}}{\text{छा} \pm \text{इ}} - \frac{\text{भा}}{\text{छा}}$

$$= \text{भा} \left( \frac{1}{\text{छा} \pm \text{इ}} - \frac{1}{\text{छा}} \right) = \frac{\mp \text{भा इ}}{\text{छा}(\text{छा} \pm \text{इ})} = \pm \frac{\text{फा इ}}{\text{छा}}$$

अत्र $\frac{\text{भा}}{\text{छा} \pm \text{इ}}$ अस्यानष्टफला कृता। अत इष्टाधिके छेदे

$$\frac{\text{भा}}{\text{छा} + \text{इ}} - \frac{\text{भा}}{\text{छा}} = \text{फा} - \frac{\text{भा}}{\text{छा}} = - \frac{\text{फा इ}}{\text{छा}}।$$

$$\therefore \frac{\text{भा}}{\text{छा}} = \text{फा} + \frac{\text{फा इ}}{\text{छा}}।$$ इष्टोने छेदे

$$\text{फा} - \frac{\text{भा}}{\text{छा}} = + \frac{\text{फा इ}}{\text{छा}} \quad \frac{\text{भा}}{\text{छा}} = \text{फा} - \frac{\text{फा इ}}{\text{छा}}$$

अत उपपद्यते ॥ ५७ ॥

इदानीं गुणने पुनर्विशेषमाह।

**गुण्यच्छेदफलवधो गुणकच्छेदो गुण्यभाजितो गुणकः।**
**छेदोद्धृतः फलं गुण्यगुणवधः फलहृतश्छेदः ॥ ५८ ॥**

गुणनफलं येन चिदभीष्टेन छेदेन हृतं लब्धं फलमत्र ज्ञेयम्। तत्र गुण्यच्छेदफलवधो गुणनफलं भवत्येतावत् स वधो गुणकहृतो गुण्यो गुण्यभाजितो गुणकश्च भवति। एवं गुण्यगुणवधो गुणनफलं स छेदोद्धृतः फलं फलहृतश्छेदो भवतीति सर्वं स्फुटम् ॥ ५८ ॥

इदानीं पुनर्विशेषमाह।

**गुण्यगुणकारयोश्छेदलब्धयोर्यदि द्वयोर्वधयोर्योगः।**

**तेषां दृश्यौ व्यस्तौ कृत्वा तत्स्थानयोश्छेदौ ॥ ५९ ॥**

यदि गुण्यगुणकारयोर्वा छेदमध्ये द्वयोर्द्वयोर्नाशो भवति तदा तेषां मध्ये यौ दृश्यौ तौ व्यस्तौ कृत्वा तत्स्थानयोश्छेदौ प्रकल्प्यौ । एतदुक्तं भवति । यौ दृश्यौ तावदृश्यौ कल्प्यौ दृष्टस्थानयोश्छेदावन्यौ राशी कल्प्यौ । अत्रेदं च यथा । छेदफलयोर्नाशे गुण्यगुणकौ छेदफले कल्प्ये । तत-च्छेदफलयोश्च इष्टेन गुण्यकल्पितेन गुणककल्पितेन वा विभक्तौ यं फलं द्वितीयो भवत्येवमन्त्ययोरपि । इयं व्याख्या चतुर्वेदोक्ता ॥ ५९ ॥

इदानीं पुनर्विशेषमाह ।

**गुण्यं गुणकारं वा गुणयेच्छेदेन भागहारस्य ।**
**गुण्यगुणकारराश्योश्छेदगुणो भागहारश्च ॥ ६० ॥**

यदा कोऽपि गुण्यो वा गुणको भवेत् तदा तं भागहारस्य छेदेन गुणयेत् फलं गुण्यो वा गुणकः कल्प्यः । एवं गुण्यगुणकारराश्योश्छेद-घ्नेन भागहारस्य गुणो भागहारो भवति । एतदुक्तं भवति । यदि कस्यापि भिन्नो गुण्यो वा गुणकस्तस्य भागहारस्य भिन्नस्तदा गुण्यस्य गुणकस्य वा लवो गुण्यो वा गुणकसंज्ञः । एवं भागहारस्य लवो भागहारसंज्ञः कल्प्यस्तदाऽयं विधिर्भिन्नभागहारविधिनोत्पद्यते । अत एवात्र चतुर्वेदाचार्यः । 'परिवर्त्य भागहारच्छेदांशावित्यनेनार्यासूत्रेण गतार्थमा-र्योऽतो न व्याख्यातमिति' ॥ ६० ॥

इदानीं पुनर्विशेषमाह ।

**अच्छेदस्य च्छेदं रूपं कृत्वाऽन्यदुक्तवत् सर्वम् ।**
**अपवर्त्यौ छेदगुणौ तुल्येनेष्टेन गुण्यौ वा ॥ ६१ ॥**

अच्छेदस्याभिन्नस्य रूपं छेदं कृत्वाऽन्यत् सर्वमुक्तवत् कार्यम् । एव छेदगुणौ केनापि तुल्येनेष्टेन संभवे सत्यपवर्त्यौ वा गुण्यौ ततस्ताभ्यां कर्मणि न कश्चिद्विकार इति सर्वं स्फुटम् ॥ ६१ ॥

इदानीं सकलविकलावर्णानयनाय करणसूत्रम् ।

**रूपविकलषष्ट्यंशगुणः सकलस्त्रिंशोद्धृतो विकलवर्गः ।**

**प्रक्षेप्यः सकलकृतौ वर्गघनौ त्रित्रितुल्यवधौ ॥ ६२ ॥**

यत्र राशौ कला विकला चेति द्वयं वर्तते तस्य वर्गार्थं कलाराशिः सकलसंज्ञो विकलाराशिश्च स्वविकलस्तत्कलाषष्ट्यंशश्च कथ्यते । अथ सकलो राशिः स्वविकल एव षष्ट्यंशः स्वविकलषष्ट्यंशस्तेन गुणस्त्रिंशद्भक्तः फलं विकलवर्गसंज्ञो भवति । स सकलस्य कृतौ वर्गे प्रक्षेप्यो योऽयस्तदा राशेर्वर्गो भवेत् । अथ वर्गघनलक्षणमाह । द्वित्रितुल्यवधौ क्रमेण वर्गघनौ भवत इति प्रसिद्धौ ।

अत्रोपपत्तिः । कल्प्यते कस्मिन्नपि राशौ कलाः = क । विकलाः = वि । तदा कलात्मकः स राशिः $= \text{क} + \frac{\text{वि}}{६०}$ ।

अस्य बीजगणितरीत्या वर्गः $= \text{क}^{२} + \frac{२ \,\text{क वि}}{६०} + \frac{\text{वि}^{२}}{६०^{२}}$

$= \text{क}^{२} + \frac{\text{क वि}}{३०} + \frac{\text{वि}^{२}}{६०^{२}}$

अत्राचार्येणान्तिमखण्डं रूपाल्पत्वात् त्यक्तम् । ततो जातो वर्गः $= \text{क}^{२} + \frac{\text{क वि}}{३०}$ । अत उपपन्नं मूलोक्तम् ॥ ६२ ॥

इदानीं वर्गार्थे करणसूत्रम् ।

**राशेरूनं द्विगुणं बहुतरगुणमूनकृतियुतं वर्गः ।**
**राशेरिष्टयुतोनाद्वधः कृतिरिष्टकृतियुक्तः ॥ ६३ ॥**

राशेरूनमूनस्थानीयाङ्कमधोऽधिकस्थानीयमङ्कं द्विगुणं बहुतरगुणं बहुतरस्थानीयैरङ्कैर्गुणमूनकृतियुतं च यथास्थानक्रमेण वर्गो भवेत् । एवं कृतं भवति । आदिवर्गं स्थाप्य परेऽङ्का द्विगुणादिनिघ्नाश्च स्थाप्यास्तत आदिं त्यक्त्वा पुनस्तथैव क्रिया कार्या । एवं वर्गो भवेत् । 'स्थाप्योऽन्त्यवर्गो द्विगुणान्त्यनिघ्नाः'—इत्यादिभास्करोक्तमेतदनुरूपमेव । भास्करेणान्यतः क्रिया कृतेहाचार्येणादित एवेत्येव विशेषः । राशेरिष्टयुतोनाद्वध इत्यादि स्पष्टार्थम् । 'इष्टोनयुग्राशिवधः कृतिः स्यात्'—इत्यादि भास्करोक्तमेतदनुरूपमेव ॥ ६३ ॥

इदानीं द्वयो राश्योर्वर्गयोगस्य वर्गान्तरस्य च पदानयनार्थं करणसूत्रं वृत्तद्वयम् ।

**इष्टाल्पराशिवर्गो युक्तोनावितरविकलवर्गाभ्याम् ।**
**द्विगुणेतरराशिभ्यां भक्तौ तेनाधिकोनाभ्याम् ॥ १४ ॥**
**स्थानान्तरेषु लब्धं येन समं फलयुतोनकच्छेदः ।**
**दलितः कृतियोगान्तरपदमितरो वा फलयुतोनः ॥ १५ ॥**

यद्येक इष्टराशिरल्पोऽन्यश्चेतरः सविकलस्तत्र यदि तयोर्वर्गयोगपदमपेक्षितं तदाऽल्पराशिवर्ग इतरविकलवर्गेण ६२ सूत्रागतेन युतः कार्यः । एवं योगो भवति । द्विगुणेतरराशिना भक्तोऽल्पराशिवर्गो यल्लब्धं तेन युतेन द्विगुणेतरराशिना स योगः स्थानान्तरेषु स्थापितो भक्तः कार्यः । लब्धं येन पूर्वफलेन समं भवति तदा छेदो लब्धयुतद्विगुणेतरराशिस्त्वं फलेन युतो दलितो वर्गयोगपदं भवेत् । एवं वर्गान्तरपदेऽपेक्षिते पूर्वोक्तविधौ योगस्थान ऊनं ग्राह्यम् ।

यथा १४ । १५ । ४० राशी । अत्राल्पराशिवर्गः १९६ । ६२ सूत्रागतेनेतरविकलवर्गेण $= \frac{१५ \times २ \times ४०}{६०} = २०$ अनेन सहितो जातो योगः $१९६ + २० = २१६$ । अल्पराशिवर्गो द्विगुणेतरराशिना भक्तो लब्धं निरवयवम् $= ६$ अनेन युतो द्विगुणेतरराशिः ३६ । अनेन पूर्वयोगोऽयं २१६ भक्तो लब्धं पूर्वागतनिरवयवलब्धसममेव । तेन युतश्छेदः ३६ जातः ४२ । अयं दलितो जातं वर्गयोगपदम् २१ वा लब्ध-६ मितराशि-१५ युतं जातं तदेव वर्गयोगपदम् २१ । एवमन्तरवर्गपदानयनं च कार्यम् ।

अत्रोपपत्तिः । कल्प्यते लघुराशिः $=$ य । सविकलेतरराशिः कल्प्यः $=$ र $+ \frac{वि}{६०}$ । तदैतयोर्वर्गयोगो वा वर्गान्तरम्

$$= य^२ + \frac{२ र वि}{६०} \pm र^२ \text{ स्वल्पान्तरात् ।}$$

$$वा = य^२ \pm र^२ + वि^२ = य^२ \pm (र^२ \pm वि^२) \text{ अस्य मूलम् ।}$$

$य \pm \frac{फ^2}{२य} = य \pm ल$ । इद तदैव स्याद्यदि २ य ± ल एवं ल गुण (२ य ± ल) ल, फ² ± चि² अनेन सम स्यात् तदा $ल = \frac{फ^2 \pm चि^2}{२य \pm ल}$ । अत-स्तदा २ य ± २ ल एतदर्धं वा य ± ल इदमासन्नपदं भवेदिति ॥ ६४–६५ ॥

इदानीमध्यायोपसंहारमाह ।

दिङ्मात्रमेतदन्यज्ज्योत्पत्तौ कुट्टके च कथयिष्ये ।
सङ्कलितादिष्वार्या षट्षष्टिर्द्वादशोऽध्यायः ॥ ६६ ॥

इति श्रीब्राह्मस्फुटसिद्धान्ते द्वादशोऽध्यायः ॥ १२ ॥

स्पष्टार्थम् ॥ ६६ ॥

मधुसूदनसूनुनोदितो यस्तिलकः श्रीपृथुनेह जिष्णुजोक्तेः ।
रुचिरः स विविच्य नूतनोऽयं रचितो व्यक्तविधौ सुधाकरेण ॥

इति श्रीकृपालुदत्तसुतसुधाकरद्विवेदिविरचिते ब्राह्मस्फुटसिद्धान्तनूतनतिलके गणिताध्यायो नाम द्वादशोऽध्यायः ॥ १२ ॥



## अथ प्रश्नाध्यायाः ।

---

## तत्र तावन्मध्यगत्युत्तराध्यायः ।

अथाध्यायादावारम्भप्रयोजनमाह ।

प्रश्नाध्यायान् वक्ष्यामि सोत्तरान् गणकबुद्धिवृद्धिकरान् ।
यैर्ज्ञातैस्तत्त्वविदामाचार्यो भवति बुद्धिमताम् ॥ १ ॥

यैः प्रश्नैर्ज्ञातैर्बुद्धिमतां तत्त्वविदां मध्ये गणक आचार्यो भवति । शेषं स्पष्टार्थम् ॥ १ ॥

इदानीं प्रश्नानाह ।

अधिमासकैः सविकलैर्दृष्टैर्युगयातमवमरात्रैर्वा ।
युगगणेन वा युगगतं यो वेत्ति स कालतत्त्वज्ञः ॥ २ ॥

सविकलैः सावशेषैरधिमासकैर्दृष्टैर्यो युगगतं वेत्ति । वा सविकलैः सावशेषैरवमरात्रैर्दृष्टैर्यो युगगतं वेत्ति । वा युगगणेनाहर्गणेन दृष्टेन यो युगगतं वेत्ति स कालतत्त्वज्ञः सिद्धान्तविदिति । एवमत्र प्रश्नत्रयम् ॥ २ ॥

इदानीमन्यान् प्रश्नानाह ।

अवमानि यः सविकलैरधिमासैरधिकमासकानवमैः ।
अहर्गणमिष्टं वा ताभ्यां यो वेत्ति स कालतत्त्वज्ञः ॥ ३ ॥

यः सविकलैः सावशेषैरधिमासैरवमानि गतावमानि वेत्ति । वा यः सावशेषैरवमैर्गताधिमासकान् वेत्ति । वा ताभ्यामधिमासावमाभ्यामिष्टमहर्गणं वेत्ति स एव कालतत्त्वज्ञः । एवमत्र प्रश्नत्रयम् ॥ ३ ॥

इदानीमन्यान् प्रश्नानाह ।

युगगणं विनाऽधिमासावमैर्विना दिनगणेन चन्द्रार्कौ ।
ताभ्यां विना स्फुटतिथिं यो वेत्ति स कालतत्त्वज्ञः ॥ ४ ॥

योऽधिमासावमैर्विनाऽहर्गणं वेत्ति । वा दिनगणेन विना चन्द्रार्कौ वेत्ति । वा ताभ्यां चन्द्रार्काभ्यां विना स्फुटतिथिं वेत्ति स कालतन्त्रज्ञः । एवमत्र प्रश्नत्रयम् ॥ ४ ॥

इदानीमन्यान् प्रश्नानाह ।

**त्रिगुणः शनिरिन्दूनोऽन्यभगणलब्धैर्गृहादिभिः सहितः ।**
**भौमो हीनोऽर्कौ गुरुरिन्दुर्वं वाऽन्यभगणाः के ॥ ५ ॥**

राश्यादिकः शनिस्त्रिगुण इन्दुराश्याद्यूनोऽन्यभगणलब्धैर्गृहादिभिः सहितो भौमो भवति । तैरन्यभगणगृहादिभिर्हीनोऽर्को वा गुरुरिन्दुश्च भवति तदाऽन्यभगणाः के सन्तीति प्रश्नः ॥

अत्र चतुर्वेदाचार्यः । 'अत्र सप्तभिर्वेदैः पञ्चभिः श्रौतैः षड्भिः पातैः सप्तभिर्मन्त्रैश्च विकल्प्यमाने सहस्रमधिकं प्रश्नानां सम्पद्यत इति' ॥ ५ ॥

इदानीमन्यौ प्रश्नावाह ।

**द्विस्त्रिगुणयो रवीन्द्वोर्युतिः कुजोनाऽन्यभगणलब्धेन ।**
**राश्यादिनाऽधिका गुरुरूना शनिरन्यभगणाः के ॥ ६ ॥**

द्विगुणो रविस्त्रिगुणश्चन्द्रोऽनयोर्युतिः कुजेनोनाऽन्यभगणलब्धेन राश्यादिनाऽधिका तदा गुरुर्भवति । अथ तेनैव राश्यादिनोना तदा शनिर्भवति । एवमन्यभगणाः के सन्तीति प्रश्नद्वयम् ॥ ६ ॥

इदानीमन्यान् प्रश्नानाह ।

**इष्टौदयिकानश्विन्यौदयिकान् वा करोति यो मध्यान् ।**
**मध्यार्कं गुणकैर्गुणमिष्टं मध्यं स तन्त्रज्ञः ॥ ७ ॥**

य इष्टौदयिकान् इष्टदेशोदयकालिकान् मध्यान् ग्रहान् करोति । वाऽश्विन्यौदयिकान् अश्विन्युदयकालिकान् मध्यान् ग्रहान् करोति । वा मध्यार्कं केऽपि गुणकैर्गुणमिष्टं मध्यं ग्रहं करोति स तन्त्रज्ञः । एवमत्र प्रश्नत्रयम् ॥ ७ ॥

इदानीमन्यान् प्रश्नानाह ।

पातानुलोमगतीन् प्रतिलोमगतीन् ग्रहान् दिवसवारम् ।
विपरीतैः शन्याद्यैर्यो वेत्ति स कालतत्त्वज्ञः ॥ ८ ॥

योऽनुलोमगतीन् पातान् वेत्ति । वा रव्यादिग्रहान् प्रतिलोमगतीन् वेत्ति । अर्थाद्विपरीतगतयः पातादयस्तथा साध्या यथाऽनुलोमगतयः स्युरनुलोमगतयो रव्यादयश्च तथा साध्या यथा विलोमगतयः स्युरिति । एवं यः शन्याद्यैर्विपरीतैर्दिवसवारं वेत्ति अर्थाद्विपरीतगणनया यो दिवसवारं वेत्ति स कालतत्त्वज्ञः । एवमत्र प्रश्नत्रयम् ॥ ८ ॥

इदानीमन्यान् प्रश्नानाह ।

व्यतिपातवैधृतबृहस्पतिवर्षस्वोच्चनीचपरिवर्तान् ।
द्विग्रहयोगांश्च युगे यो वेत्ति स कालतत्त्वज्ञः ॥ ९ ॥

यो व्यतिपातं वेत्ति । वैधृतं वेत्ति । बृहस्पतिवर्षं वेत्ति । स्वोच्चनीचपरिवर्तान् स्वोच्चनीचभगणान् वेत्ति । युगे द्विग्रहयोगान् द्वयोर्द्वयोर्ग्रहयोर्युगे कियन्तो युतिभगणा इति वेत्ति स कालतत्त्वज्ञः । एवमत्र पञ्च प्रश्नाः सन्ति ॥ ९ ॥

इदानीमन्यान् प्रश्नानाह ।

सावनमासाब्दाधिपहोरेशानिष्टमध्यसंयोगात् ।
इष्टैर्गुणैर्युतानानिष्टान् यो वेत्ति गणकः सः ॥ १० ॥

सावनमानेन मासपतिमब्दपतिं च यो वेत्ति । इष्टकाले होरेशं यो वेत्ति । इष्टानामभीष्टानां मध्यानां ग्रहाणां संयोगात् किं विशिष्टान् इष्टान् मध्यग्रहान् इष्टैर्गुणैर्युतानान् दृष्ट्वा तान् यो वेत्ति स एव गणक इति । एवमत्र प्रश्नचतुष्टयम् ॥ १० ॥

अथोक्तानां प्रश्नानामुत्तराणि विवक्षुस्तत्रादौ साधिशेषैर्गताधिमासैर्युगयातं वेत्तीत्यस्योत्तरमाह ।

युगरविदिवसैर्गुणिता गताधिमासाः स्वशेषसंयुक्ताः ।
भक्ता युगाधिमासैः फलं युगादेर्गता दिवसाः ॥ ११ ॥

गताधिमासा युगरविदिवसैर्गुणाः स्वशेषयुता अधिशेषयुताः । युगाधिमासैर्भक्ता फलं युगादेर्गता दिवसाः स्युरिति ।

अत्रोपपत्तिः । त्रैराशिकेन सुगमा तथाऽहर्गणानयने गतसौर दिनेभ्यो गताधिमासाः साधिशेषाः

$$= \text{गअमा} + \frac{\text{अधिशे}}{\text{युसौदि}} = \frac{\text{गसौदि} \cdot \text{युअधिमा}}{\text{युसौदि}} ।$$

छेदगमादिना

$$\text{गसौदि} = \frac{\text{युसौदि} \left( \text{गअमा} + \text{अधिशे} \right)}{\text{युअधिमा}}$$

अत उपपन्नं सूत्रोक्तम् । अत्र सर्वत्र युगशब्देन कल्पो वाच्य इति ॥ ११ ॥

इदानीं द्वितीयप्रश्नस्योत्तरमाह ।

**गुणितानि चान्द्रदिवसैर्गतावमानि स्वशेषसहितानि ।**
**विभजेद्युगावमैः फलमनष्टमधिमासकैर्गुणितम् ॥ १२ ॥**
**हृतमिन्दुदिनैर्लब्धाधिमासदिवसैर्विहीनकमनष्टम् ।**
**युगयातदिनाद्यधिमासदिनगणेष्टग्रहाद्यमतः ॥ १३ ॥**

गतावमानि युगचान्द्रदिनैर्गुणानि स्वशेषसहितानि युगावमैर्विभजेत् फलं गतचान्द्राहा इति स्फुटम् । तत्र फलमनष्टं स्यादनेकत्र युगाधिमासकैर्गुण्यं युगेन्दुदिनैर्हृतं फलं गताधिमासास्तैर्दिनीकृतैरनष्टं स्यादितः गतचन्द्रदिनमानं विहीनं युगयातसौरदिनादि भवेत् । अतः सौरदिनेभ्यो गताधिमास-दिनगणेष्टग्रहाद्यं मध्यमाधिकारोक्तवत् साध्यम् ।

अत्रोपपत्तिः । गतावमतस्तच्छेषाच्चानुपातेन गतचान्द्राहानयनं स्फुटम् । सौरदिनेभ्यश्चान्द्रदिनेभ्यश्च गताधिमासाः समा एव लभ्यन्ते तच्छेषं च समं किन्त्वेकत्र युगसौरदिनहरोऽन्यत्र युगचान्द्रदिनहर इति यतः सौरेभ्यः साधितास्ते चेदधिमासास्तदैन्दवाः'-इत्यादिभास्करोक्तेन स्फुटम् । ततश्चान्द्राहत आगतैर्गताधिमासैर्दिनीकृतैश्चान्द्राहा विहीना गतसौराहा भवन्ति येभ्यः पुनर्गताधिमासाहर्गणेष्टग्रहाद्यं सुखेन ज्ञायते । गतसौरेभ्यो गताधिमासशेषस्य समीकरणम्

गसौदि· युअधिमा = युसौदि· गअधिमा + अधिशे

अनयोः ३०युअधिमा· गअधिमा योजनेन

युअधिमा (गसौदि + गअधिमादि) = गचादि· युअधिमा

= गअधिमा (युसौदि + युअधिमादि) + अधिशे

= युचादि· गअधिमा + अधिशे

अतः सौरचान्द्रेभ्यः समा गताधिमासा लभ्यन्तेऽधिशेषं च समम् । अनेन भास्करोक्तमुपपद्यते ॥ १२-१३ ॥

इदानीं कुगणेन वा युगगतं दिनौघस्योत्तरमाह ।

**युगणेन्दुदिवसघातात् कुदिना*प्तमधो युगाधिमासगुणम् ।**
**शशिदिनभक्तं फलमासदिनोनं युगगतदिनानि ॥ १४ ॥**

अहर्गणस्य युगचान्द्रदिनानां घातात् युगकुदिनैर्यल्लब्धं तद्गतचान्द्रमानमधः पृथक् स्थाप्यं युगाधिमासगुणं युगचान्द्रदिनभक्तं फलं गताधिमासास्तद्दिनैः पृथक्स्थं च गतचान्द्रदिनमानमूनं युगगतसौरदिनानि भवन्ति ।

अत्रोपपत्तिः । अहर्गणानयनविलोमेन कल्पगतानयनं त्रैराशिकेनेति सुगमा ।

एवं द्वितीयश्लोकस्य प्रश्नत्रयोत्तराणि सम्पन्नानि ।

तृतीयश्लोकस्यादिप्रश्नद्वयस्योत्तरं त्रैराशिकेनातिस्पष्टत्वादाचार्येण न कृतम् । त्रैराशिकं च यदि युगाधिमासैर्युगावमानि तदा साध्यगताधिमासैः किम् । लब्धमवमानि । एवं सावमेभ्यो गताधिमासानयनं च त्रैराशिकेन स्फुटम् ॥ १४ ॥

इदानीं षष्ठमिष्टं वा साध्यं यो वेत्तीत्यस्योत्तरमाह ।

**गुणमधिमासकशेषं युगकुदिनैरवमशेषमधिमासैः ।**
**तद्युतिरिन्दुदिनहृताधिमासशेषं स्फुटं भवति ॥ १५ ॥**

---

* कुदिनाप्त इति पाठान्तरम् ।

भूदिनगताधिमासकघातः स्पष्टाधिमासशेषयुतः ।
भक्तो युगाधिमासैरहर्गणः पूर्ववन्मध्याः ॥ १६ ॥

अधिमासशेषं युगकुदिनैरवमशेषं च युगाधिमासैर्गुणम् । तयोर्युतिर्युगचान्द्रदिनैर्हृता लब्धं स्फुटाधिशेषसंज्ञं भवति । युगकुदिनानां गताधिमासानां च घातः पूर्वानीतस्फुटाधिमासशेषयुतो युगाधिमासैर्भक्तः फलमहर्गणो भवेत् । ततः पूर्ववन्मध्याधिकारोक्तवन्मध्या ग्रहाः साध्याः ।

अत्रोपपत्तिः । अहर्गणप्रमाणम् या । ततोऽनुपातेन गतावमानि $= \frac{\text{या युअव} - \text{अशे}}{\text{युकुदि}}$ । एतान्यहर्गणे संयोज्य जातानि गतचान्द्रदिनानि $= \frac{\text{या (युकुदि + युअव)} - \text{अशे}}{\text{युकुदि}} = \frac{\text{युचादि या} - \text{अशे}}{\text{युकुदि}}$ । एभ्यो गताधिमासाः

$\text{साधा.} = \text{गअधिमा} + \frac{\text{अधिशे}}{\text{युचादि}} = \frac{\text{युअधिमा युचादि या} - \text{युअधिमा अशे}}{\text{युचादि युकुदि}}$ अतो

युगकुदिनैः सङ्गुण्य समशोधनेन

$\text{युकुदि} \cdot \text{गअधिमा} + \frac{\text{युकुदि अधिशे} + \text{युअधिमा अशे}}{\text{युचादि}} = \text{युअधिमा} \cdot \text{या}$

$= \text{युकुदि} \cdot \text{गअधिमा} + \text{स्पअधिशे} \therefore \text{या} = \frac{\text{युकुदि गअधिमा} + \text{स्पअधिशे}}{\text{युअधिमा}}$

अत उपपन्नं यथोक्तम् ॥ १५–१६ ॥

इदानीं गतावमैरवमशेषेण चाहर्गणानयनमाह ।

भूदिनगतावमवधः स्वशेषयुक्तो युगावमविभक्तः ।
लब्धं भवति द्युगणो युगयाता मध्यमाः प्राग्वत् ॥ १७ ॥

युगकुदिनानां गतावमानां च वधः स्वशेषेणावमावशेषेण युतो युगावमैर्विभक्तो लब्धमहर्गणो भवति ततः प्राग्वद्युगयाता मध्यमा ग्रहाश्च साध्याः ।

अत्रोपपत्तिः । त्रैराशिकेन यदि युगावमैर्युगकुदिनतुल्योऽहर्गण-स्तदा साग्रगतावमैः किम् । लब्धोऽहर्गणः $= \frac{\text{युकुदि} + \frac{\text{युकुदि अशे}}{\text{युकुदि}}}{\text{युअ}}$

$= \frac{\text{युकुदि गश} + \text{शशे}}{\text{युच}}$ । अत उपपन्नम् ॥ १७ ॥

इदानीं विनाऽधिमासावमैर्योऽहर्गणः वेतीत्यस्योत्तरमाह ।

**युगगतशशिमासवधाद्रविमासाप्तं दिनीकृतं सदिनम् ।**
**भूदिनगुणितं शशिदिनहृतमाप्तमहर्गणः सैकः ॥ १८ ॥**

युगशशिमासानां गतशशिमासानां च वधाद्युगसौरमासैर्यदाप्तं निरग्रं तद्दिनीकृतममान्तावधे यस्मिन् दिनेऽहर्गणोऽभीष्टस्तद्दिनसङ्ख्यायुतं ततो युगकुदिनैर्गुणितं युगशशिदिनैर्हृतमाप्तमहर्गणो भवेत् । स च वारार्थं सैको वा निरेकः कार्य इत्यर्थादवगम्यते ।

अत्रोपपत्तिः । यदि युगसौरमासैर्युगशशिमासा लभ्यन्ते तदा गतचान्द्रसमैः सौरमासैः किं लब्धा निरग्रा अमान्ते गतचान्द्रमासास्ते त्रिंशद्गुणिता अमान्तावधे यावन्ति चान्द्रदिनानि तैर्युता अभीष्टे दिने गतचान्द्राहा जाताः । ततो यदि युगचान्द्रमासैर्युगकुदिनतुल्योऽहर्गणस्तदा गतचान्द्राहैः किम् । लब्धं तिथ्यन्ते यावानहर्गणः सावयवो भवति । शेषस्यागतेनोदये निरग्रोऽहर्गणोऽभीष्टवारार्थं सैको वा निरेकः स्फुटतिथिदिनार्थे कार्य इति ज्योतिर्विदां सम्प्रदायो युक्तियुक्त एवेति ॥ १८ ॥

इदानीं प्रकारान्तरेणाहर्गणानयनमाह ।

**गतदिवसाः पृथगधिमासकगुणिता रविदिनाप्तमासदिनैः ।**
**सहिताः पृथगवमगुणाः शशिदिवसाप्तोनका द्युगणः ॥ १९ ॥**

गत दिवसा गतचान्द्रदिनसमसौराहाः । शेषं स्पष्टार्थम् ।

अत्रोपपत्तिश्च भास्कराहर्गणानयनोक्तिवत् स्फुटा ॥ १९ ॥

इदानीमधिमासावमशेषाभ्यां चन्द्रार्कानयनमाह । अर्थाद्दिनगणेन विना चन्द्रार्कौ ये सेतीत्यस्योत्तरमाह ।

**गुणिता युगाधिमासैर्युगभूदिवसैर्हृतादवमशेषात् ।**
**फलयुक्तमधिकमासकशेषं मध्यावतोऽर्केन्दू ॥ २० ॥**
**अधिमासावमशेषे युगशशिभूदिनहृते पृथग्लब्धैः ।**
**मासदिनाद्ये स्थाप्ये गतमासदिनानि चैत्रादेः ॥ २१ ॥**

**अवमावशेषलब्ध्या सहितानि पृथक् त्रयोदशगुणानि ।**
**अधिमासशेषलब्ध्या हीनानि पृथग्रविशशाङ्कौ ॥ २२ ॥**

अवमशेषाद्युगाधिमासैर्गुणिताद्युगकुदिनैर्हृताद्यत् फलं तेन युक्ते-नाधिमासशेषं युक्तमधिशेषं कल्प्यम् । अतोऽस्मादधिशेषादुक्तमार्गेणाधि-नाऽर्केन्दू ज्ञेयौ । अधिमासशेषं युगरविदिनैर्हृतमवमशेषं च युगकुदिनै-र्हृतम् । एवं पृथक् पृथक् ये लब्धे ते क्रमेण मासदिनाद्ये स्थाप्ये । अतो-ऽधिमासशेषतो लब्धिर्मासादिकाऽवमशेषतश्च दिनादिका ग्राह्या । चैत्रा-द्येर्गतमासदिनानि यानि तानि पूर्वागतावमशेषलब्ध्या सहितानि कार्याणि तानि च पृथक् स्थाप्यानि । एकत्र त्रयोदशगुणानि । अन्यत्राधिमासशे-षलब्ध्या हीनानि क्रमेण मध्यौ रविशशाङ्कौ भवतः ।

अत्रोपपत्तिः । चैत्रादेर्यावन्तश्चान्द्रमासा गतास्तावन्तः सौरमासा रविराशयो यावन्ति च चान्द्रदिनानि तावन्तो रविभागाः कल्पिताः स-चावमशेषसाधनावयवाद्यश्चान्द्राहावयवस्तत्समो रविभागस्यावयवार्थं योजितः । चान्द्राहावयवार्थमनुपातो यदि युगकुदिनैर्युगचान्द्रदिनानि तदा अवशेषावयवेन $\frac{अशे}{युकुदि}$ अनेन किं लब्धश्चान्द्राहावयव $= \frac{अशे}{युकुदि}$ । अयं दिनादिश्चैत्रादिगतमासदिनाद्ये योजितः स रविः कल्पितः ।

अयं रविश्च तत्स्थचान्द्रसौरान्तरेणाधिमासशेषोत्थरविराश्यादि-चालनेनाधिको जातोऽतस्तच्छोधनेन वास्तवो मध्यमरविः स्यात् ।

अथ गणितागतं चान्द्रमधिशेषमवमशेषोत्थचान्द्रदिनमवशेषादि-नावयवोत्थेनाधिशेषेण युतं तदा वास्तवाधिशेषं भवति । तत्र पूर्वागता-वमशेषसम्बन्धी चान्द्राहावयवः $= \frac{अशे}{युकुदि}$ । अयं युगाधिमासैर्गुणो युगसौ-रदिनैर्विभक्तो लब्धं तज्जमधिशेषम् $= \frac{युअधिमा \cdot अशे}{युसौदि \cdot युकुदि} = \frac{युधिमा \frac{अशे}{युकुदि}}{युसौदि}$

$= \frac{फ}{युसौदि}$ । पूर्वंगणितागतमधिशेषं च $= \frac{अधिशे}{युसौदि}$ । द्वयोर्योगे

चान्द्राधिशेषम् = $\frac{\text{अधिशे} + \text{फ}}{\text{युचादि}}$ । एतत्सम्बन्धि सौरराश्यादि (यदि युगचान्द्रमासैर्युगसौरराशयस्तदेष्टाधिशेषसमचान्द्रमासैः किं लब्धाः सौराहाः = $\frac{\text{अधिशे} + \text{फ}}{\text{युचामा}}$ । एते त्रिंशद्गुणिता जाता राश्यादि = $\frac{\text{अधिशे} + \text{फ}}{\text{३० युचामा}} = \frac{\text{अधिशे} + \text{फ}}{\text{युचादि}}$ ) = $\frac{\text{अधिशे} + \text{फ}}{\text{युचादि}}$ = अधिशेफ । अनेन पूर्वकल्पितो रविर्हीन ओनोऽधिको रविर्भवति । स च तत्स्थचान्द्रावयवेन कल्पितरविसमेन द्वादशगुणेन सहितश्चन्द्रो भवति चान्द्राहे चान्द्राहे रविचन्द्रयोर्द्वादशभागान्तरत्वादित्युपपद्यत आचार्योक्तम् । अयमेव प्रकारः सिद्धान्तशेखरे श्रीपतिनाऽपि निबद्धस्तद्यथा च ।

कल्पाधिमासगुणिताद्गतमासशेषात्
स्याद्देहृतात् फलयुतं ह्यधिमासशेषम् ।
मासादिकं फलमतः शशिवासरैः स्यात्
स्याद्वैर्हृताच्च दिवसाद्यवमावशेषात् ॥
खेचारिणो विगतमासदिनैर्युतः तत्
कृत्वा दिनाद्यम् पृथग्गुणितं च विश्वैः ।
मासादिना विरहिते विहिते क्रमेण
यद्वा दिवाकरसुधाकरौ भवेताम् ॥

'एतदनुपपन्नमेव कोऽप्याहतैवं द्युचरैर्वाप्तम्' इत्यादि भास्करोक्तमस्तीति ज्योतिर्विदामतिरोहितमेवेति ॥ २०-२२ ॥

इदानीं रविचन्द्राभ्यां विना य स्फुटतिथिर्भवतीत्यन्तरमाह ।

**गतमासदिनावमशेषलब्धियोगात् त्रयोदशगुणाच्च ।**
**अधिमासशेषलब्ध्या रविचन्द्रौ वै युते शोध्ये ॥ २३ ॥**
**केन्द्रे पृथक् फले द्वादशोद्धृते व्यस्तमृणधनं सौरम् ।**
**अनुलोममैन्दवं मासदिनावमशेषलब्धियुतौ ॥ २४ ॥**
**तिथिविकलाश्च पृथग्घाताद्विहृतभुक्त्यन्तरासघटिकाद्य ।**

देशान्तरमनुलोमं भुजान्तरं चार्कफलमसवः ॥ २५ ॥

गतमासदिनावमशेषलब्धियोगः पूर्वमाधिमः कल्पितो रविस्तस्मात् पूर्वागतमासाद्यधिशेषलब्धियुतरविमन्दोच्चं शोध्यम् । त्रयोदशगुणात् तस्मात् कल्पितरवेस्तदधिशेषलब्धियुतचन्द्रमन्दोच्चं शोध्यम् । एवं क्रमेण रविचन्द्रयोः केन्द्रे भवतस्ताभ्यां पृथक् स्पष्टाधिकारविधिना तयोर्मान्दे फले साध्ये । ते च द्वादशोद्धृते फले दिनादिके ग्राह्ये । मासदिनावमशेषलब्धियुतो कल्पितरवौ सौरं दिनादिफलं व्यस्तं धनमृणं कार्यम् । फलं धनं तदा ऋणं चेदृणं तदा धनं कार्यमित्यर्थः । ऐन्दवं चान्द्रं दिनादिफलं चानुलोमं यथागतं तथैव देयम् । एवं मासाद्यवयवश्चान्द्रा दिनात्मिकाः तिथयो गताः । घटिकादि वर्तमानतिथेर्विकलं भुक्तघटीप्रमाणं तच्च षष्टिगुणं कार्यम् । तस्माद्द्वादशहृतरविचन्द्रगत्यन्तरेणाप्ता या घटिकास्तासु देशान्तरं घट्यात्मकमनुलोमं यथागतं देयम् । चार्कफलमर्कमन्दफलसम्बन्धि कालात्मकं भुजान्तरं च यथागतं देयं तथाऽसवश्चरासवास्ते गोलवशाद्धनमृणं च देयाः । एवं वर्तमानतिथेः स्फुटाः सावना भुक्तघटिका भवन्तीति ।

अत्रोपपत्तिः । पूर्वागतरविचन्द्रानयनप्रकारेण सूर्योदयेऽभीष्टदिने वेलादिना सावयवचान्द्रमासादि = मा + दि + शेषेन । रवि॰ = मा + दि + शेषेन − अधिमास । चन्द्र॰ = १३ (मा + दि + शेषेन॰) − अधिमास । स्वस्वमन्दोच्चं विशोध्य केन्द्रानयनमुपपद्यते । ततो रविं स्वफलसंस्कृतं स्वफलसंस्कृताच्चन्द्राद्विशोध्य स्पष्टरविचन्द्रान्तरं साधितं तद्द्वादशहृतं स्पष्टं चान्द्रं मासादि स्यात् । एवं द्वादशहृतं रविमन्दफलं व्यस्तं द्वादशहृतचन्द्रफलं च दिनादि यथागतं मध्यमचान्द्रमासादिकेऽस्मिन् मा + दि + शेषेन संस्कृतं भवति । एवं तिथेर्भुक्तं घट्यात्मकं लङ्कायां चान्द्रात्मकं च तत् । सावनघट्यर्थमेकस्मिन् सावनदिने रविचन्द्रगत्यन्तरं द्वादशहृतं फलं चान्द्रं तदानुपातो यद्येतच्चान्द्रावयवेन सावना षष्टिघटिका लभ्यन्ते तदा तिथिविकलेन किं लब्धा लङ्कायां स्फुटा सावना

स्तिथिभुक्तघटिकास्ताश्च देशान्तरभुजान्तरचरसंस्कारैश्च स्वदेशे स्फुटार्कोदये स्फुटास्तिथिभुक्ता घटिका भवन्तीति सर्वं स्फुटम् ॥ २३–२५ ॥

इदानीं विशेषमाह ।

**अवमविकलं नु सावनमेभिः परिकल्पितं यतश्चान्द्रम् ।**
**नार्यभटाद्यैः प्रश्नो मध्यान्यत्वात् ततो ज्ञातः ॥ २६ ॥**

नु इति वितर्के निश्चये वा । अवमविकलमवमशेषं गणितयुक्त्या सावनमस्ति परन्तु एभिरार्यभटाद्यैर्यतस्तदवमशेषं चान्द्रं परिकल्पितं ततस्तस्मात् कारणादार्यभटाद्यैरयं प्रश्नो न ज्ञातो मध्यान्यत्वादवमशेषज्ञानस्यान्यत्वात् तद्वशाद्रविचन्द्रयोर्मध्ययोरन्यत्वात् स्थूलत्वादिति ॥ २६ ॥

इदानीमिष्टादेकस्मान्मध्याद्ग्रहादन्यान् मध्यान् यो वेत्तीत्यस्योत्तरमाह ।

**ज्ञातभगणादिभुक्तं सविकलमिष्टयुगभगणसङ्गुणितम् ।**
**ज्ञातयुगभगणभक्तं मध्यो भगणादिफलमिष्टः ॥ २७ ॥**

ज्ञातस्य ग्रहस्य भगणादि यद्भुक्तं सविकलं सशेषं तदिष्टयुगभगणसङ्गुणितं ज्ञातयुगभगणभक्तं भगणादिफलमिष्टो मध्यो ग्रहो भवेत् । 'साध्यस्य चक्रैर्गुणितः प्रसिद्धः'–इत्यादि भास्करोक्तमेतदनुरूपमेव ।

अत्रोपपत्तिः । त्रैराशिकेन स्फुटा ॥ २७ ॥

इदानीमनन्तरोक्तप्रश्ने विशेषमाह ।

**इष्टाहतभक्तानां द्व्यादीनां संयुतेर्द्वयोरथवा ।**
**इष्टगुणकारगुणयोर्विभक्तयोर्वाऽन्तरादथवा ॥ २८ ॥**

द्व्यादीनां ग्रहाणामिष्टाहतानां भक्तानां वा संयुतेरथवा द्वयोर्ग्रहयोरिष्टगुणकारगुणयोर्वा भक्तयोः संयुतेरथवा तेषामिष्टाहतभक्तानां वा तयोरिष्टाहतभक्तयोरन्तराद्वा एवमुद्दिष्टो मध्यग्रहः साध्यः । यदीष्टाहतभक्तानां युतिरन्तरं वा दृष्टं भवेत् तदा तद्भगणानामिष्टाहतभक्तानां योगमन्तरं कृत्वा ततस्तेन योगान्तरेण दृष्टमिष्टाहतग्रहयोगान्तरं लभ्यते तदेष्टग्रहभगणैः किं लब्धं भगणादिर्मध्यः स्फुटो भवेत् ॥ २८ ॥

इदानीमनन्तरोक्तप्रश्नस्य प्रकारान्तरेणोत्तरमाह ।

**ज्ञातैकभगणभुक्तिस्तद्भगणाप्ता तदिष्टभगणेभ्यः ।**
**भगणादि सविकलं सविकलेष्टभगणादिगुणमिष्टः ॥ २९ ॥**

ज्ञातग्रहो यावता कालेनैकं भगणं भुङ्क्ते तावता कालेन तदिष्ट भगणेभ्यो ज्ञेयग्रहभगणेभ्यो ज्ञेयग्रहो यद्भगणादि सविकलं भुङ्क्ते तज्ज्ञातैकभगणभुक्तिर्भवति । सा च भुक्तिस्तदिष्टभगणेभ्यस्तद्भगणाप्ता भवति । यतोऽत्र ज्ञातभगणैरिष्टग्रहभगणास्तदैकज्ञातभगणेन किमित्यनुपातेन ज्ञेयस्यैकभगणभुक्तिर्भगणादि सविकलं भवति । इष्ट भगणादि सविकलं भुक्तिमानं सविकलेष्टभगणादिगुणं ज्ञातग्रहस्याभीष्टदिने यद्भगणादि सविकलं मानं तेन गुणं तदेष्टो ज्ञेयो मध्यग्रहो भवेदित्यर्थः ।

अत्रोपपत्तिः । ज्ञातग्रहस्यैकेन भगणेन यद्येकभगणभुक्तिसमो ज्ञेयग्रहो भवति तदेष्टज्ञातग्रहभगणादिभिः किमिति जातो भगणादिर्ज्ञेयग्रह इति ॥ २९ ॥

इदानीमिष्टाहमध्यग्रहाभ्यां मध्यतिथिं वेत्तीत्यस्योत्तरमाह ।

**शशिदिनगुणं सविकलं**
**यदुक्तं मण्डलादि तद्भगणैः ।**
**विभजेत् फलं सविकला-**
**स्तिथयः प्राग्वत् स्फुटीकरणम् ॥ ३० ॥**

इष्टग्रहस्य मण्डलादि भगणादि सविकलं यदेव यदुक्तं ज्ञातमस्ति । तच्छशिदिनगुणं तद्भगणैरिष्टग्रहभगणैर्विभक्तेन फलं मध्यमाः सविकलास्तिथयो भवन्ति तत प्राग्वत् २३-२५ सूत्रयुक्त्या स्फुटीकरणं कार्यम् ।

अत्रोपपत्तिः । चेत् शशिकैर् यदीष्टग्रहयुगभगणैर्युगचान्द्रदिनानि तदा तद्ग्रहभगणादिना किं लब्धा यदीष्टचान्द्रदिना सावयवा मध्यमास्तिथयस्तत स्फुटीकरणं प्राग्विधिना इष्टं स्फुटमिति ॥ ३० ॥

इदानीमिष्टान्मध्याद्रवीन्दुपातैर्विना यः शशिग्रहणं वेत्तीत्यस्योत्तरमाह ।

पातेन्दुयोगलब्धौ कृत्वा देशान्तराद्यमनुलोमम् ।
विक्षेपोऽस्मात् सूर्यादिभिर्विनेन्दुग्रहणमेवम् ॥ ३१ ॥

पातेन्दुयोगलब्धौ देशान्तराद्यमनुलोम यथागत कृत्वाऽस्माद्विक्षेपः साध्यः । अत्रेतदुक्तं भवति । युगे पातभगणानां चन्द्रभगणानां च योगं कृत्वा तेन भगणादि सविकलमिष्टाहः सङ्गुणयेद्युगभगणैर्विभजेत् फल भगणादिः सपातचन्द्रो भवेत् । भगणानपास्य राश्यादौ मध्यमसपाते चन्द्रे देशान्तर-मन्दफलादीन् यथागतान् संस्कृत्य स्पष्टः सपातचन्द्रो ज्ञेयस्ततो विक्षेपः साध्यः । एवं शरतो बिम्बादिज्ञानेन सूर्यादिभिः सूर्यचन्द्रपातैर्विना चन्द्रग्रहणं भवति ।

अत्रोपपत्तिः । त्रैराशिकेन सपातचन्द्रानयनस्यातिसुगमैव ॥ ३१ ॥

इदानीं मध्यमसूर्यादवमशेषाच्च मध्यचन्द्रानयनमाह ।

कुदिनहृतमवमशेषं द्वादशभिर्गुणितमाप्तमंशाद्यम् ।
द्वादशगुणतिथ्यंशैर्युतं धनं भास्करे चन्द्रः ॥ ३२ ॥

अवमशेषं द्वादशभिर्गुणितं युगकुदिनहृतमाप्तमंशाद्यं ग्राह्यम् । तद्द्वादशगुणतिथ्यंशैर्युतं यद्भवेत् तद्भास्करे मध्यमरवौ धनं कार्यमेवं मध्यमचन्द्रो भवति ।

अत्रोपपत्तिः । २० सूत्रोपपत्त्याऽभीष्टदिने सूर्योदये सावयवाश्चान्द्राहाः = दति + $\frac{\text{अशे}}{\text{युकुदि}}$ । एते द्वादशगुणा रविचन्द्रान्तरांशा भवन्ति ते रवौ क्षिप्ते चन्द्रो भवतीत्युपपन्नम् ॥ ३२ ॥

इदानीं प्रकारान्तरेण चन्द्रमाह ।

द्युगणं युगाधिमासैर्गुणितं युगभूदिनैर्भजेल्लब्धम् ।
भगणादि मध्यमार्कत्रयोदशगुणाधिकं चन्द्रः ॥ ३३ ॥

अहर्गणं युगाधिमासैर्गुणितं युगकुदिनैर्भजेत् । लब्धं भगणादि

नेष्टंता इष्टग्रहभगणाधिकोनाः पूर्वभगणा भवन्ति भगणशेषं तु पूर्वसम-
मेव । अतोऽत्रेष्टगुणगुणानां ग्रहभगणानामैक्यान्तरं कुदिनाधिकं तदा
कुदिनैस्तत्यं शेषमेव ग्रहभगणाः कल्प्या येभ्यो राश्यादिर्ग्रहोऽभीष्टगुणगुणय-
हयोगान्तरसम एवोत्पद्यते । यथान्यभगणग्रहो यदा स्वं तदाऽन्यभगणयुतः
शेषो दृष्टग्रहभगणसमोऽतस्तदा शे + अभ = दृभ ∴ अभ = दृभ − शे

= दृभ + युकुदि − शे । एवं यदाऽन्यभगणभवः खेटश्चर्णं तदा
शे − अभ = दृभ ∴ अभ = शे − दृभ = शे + युकुदि − दृभ ।
अत उपपद्यत आचार्योक्तम् ॥ ३४−३५ ॥

इदानीमिष्टोदयिकानश्विन्योदयिकान् मध्यान् यः करोतीत्यस्यो-
त्तरमाह ।

**भदिनानि ग्रहभगणैरूनानि भवन्ति सावनदिनानि ।**
**इष्टाश्विन्यौदयिकाः स्वसावनैः पूर्ववन्मध्याः ॥ ३६ ॥**

ग्रहभगणैरूनानि भदिनानि सावनदिनानि ग्रहसावनदिनानि भवन्ति । ततः स्वसावनैः पूर्ववदिष्टाश्विन्यौदयिका मध्या ग्रहा भवन्ति । अर्थादभीष्टग्रहोदयिका ग्रहाः साध्यास्तदेष्टग्रहसावनाहर्गणतो यद्यश्विन्योदयिकास्तदेष्टभदिनतो मध्या ग्रहाः पूर्ववत् साध्या इति । 'भभमास्तु भगणैर्विवर्जिता यस्य तस्य कुदिनानि तानि वा'—इत्यादि भास्करोक्तमेतदनुरूपमेवेति ।

इदानीं गुणैर्गुणं मध्यार्कमिष्टं मध्यं यो वेत्तीत्यस्योत्तरमाह ।

**रविभगणाप्तं लिप्तादि सविकलं ज्ञेयमण्डलेभ्यो यत् ।**
**मध्यार्कसविकलकलासंगुणितं ज्ञेयमध्यकलाः ॥ ३७ ॥**

ज्ञेयमण्डलेभ्यो ज्ञेयग्रहयुगभगणेभ्यो रवियुगभगणाप्तं यल्लिप्तादि फलं तेन मध्यार्कसविकलकलासङ्गुणितं मध्यार्कस्य सविकलेन शेषेण याः कला अर्थाद्विकलात्मकमानेन गुणा तदा ज्ञेयग्रहस्य मध्यस्य कलाः स्युरिति ।

अत्रोपपत्तिः । त्रैराशिकेन यदि रवियुगभगणैर्मध्यमा रविकला

लभ्यन्ते तदा शेषग्रहयुगभगणैः किं लब्धा शेषमध्यकला = $\frac{\text{मरक} \times \text{शेयुभ}}{\text{युभ}}$

= मरक × $\frac{\text{शेयुभ}}{\text{युभ}}$ ।

अत उपपद्यते ॥ ३७ ॥

इदानीं ग्रहानुलोमगतीनित्यादिप्रश्नोत्तरमाह ।

**इष्टभगणोनभूदिनशेषैर्भगणैः कृतो मध्यः ।**
**अनुलोमगो विलोमो विलोमगो वाऽनुलोमगतिः ॥ ३८ ॥**

*इष्टग्रहयुगभगणोनेभ्यो युगकुदिनेभ्यो* ये शेषास्तत्समैर्युगभगणैर्भगणानुपातेन यो मध्यः कृतः स्यात् स यद्यनुलोमगस्तदा विलोमो भवेद्विलोमगो वाऽनुलोमगतिर्भवति ।

अत्रोपपत्तिः । युकुदि−ग्रयुभ एतेऽहर्गणतुल्याः कुदिनभक्ता लब्धभगणादिके भगणानपास्य राश्यादिको ग्रहः क्रियते तदेष्टग्रहस्य चक्रशुद्धौ भवत्यतोऽनुलोमगो विलोमो भवतीति ॥ ३८ ॥

इदानीं प्रकारान्तरेणानन्तरप्रश्नोत्तरमाह ।

**युगणोनकुदिनशेषैर्भगणैरनुलोमगो विलोमगतिः ।**
**भवति विलोमो मध्योऽनुलोमगो वा कृतः प्राग्वत् ॥ ३९ ॥**

अहर्गणोनानां युगकुदिनानां यानि शेषाणि तैः शेषैर्ग्रहाहर्गणैर्ग्रहयुगभगणैस्त्वानुपातेन प्राग्वत् कृतोऽनुलोमगो ग्रहो विलोमगतिर्भवति मध्यो विलोमश्चानुलोमगो वा भवति ।

अत्रोपपत्तिः । यदि गम्याहर्गणेनानेन युकुदि−अह । भगणात्मको ग्रह साध्यते तदा ग्रह = $\frac{\text{ग्रयुभ} (\text{युकुदि} - \text{अह})}{\text{युकुदि}}$ = ग्रयुभ − $\frac{\text{ग्रयुभ} \times \text{अह}}{\text{युकुदि}}$ ।

अत्रापि भगणानां त्यागाद्राश्यादिको ग्रहश्चक्रशुद्ध उत्पद्यतेऽतोऽनुलोमगो विलोमगो विलोमश्चानुलोमगो भवतीति स्फुटम् ॥ ३९ ॥

इदानीं शन्याद्यैर्विपरीतैर्वा दिवसवार इत्यस्योत्तरमाह ।

**कल्पदिनसप्तकवधात् कल्पगताहर्गणोनकाच्छेषात् ।**
**सप्तहृताद्दिनवारः शेषः शन्यादिको भवति ॥ ४० ॥**

कल्पदिनसप्तकवधात् कल्पकुदिनसप्तघातात् किर्विशिष्टात् कल्पगताहर्गणेनोनकाद्यः शेषस्तस्मात् सप्ततष्टात् शेषः शन्यादिको दिनवारो भवति । अर्थाद्बुधेरनन्तरं शनिः शनेरनन्तरं शुक्र इति विपरीतगणनया दिनवारो भवति ।

अत्रोपपत्तिः । सप्ततष्टोऽहर्गणो यदि शे$_1$ तदा सप्ततष्टा-७ कुदि—अह । अथ शे कल्प्यते तदा

शे = ७ – शे$_1$ । अतो–शे$_1$ ऽस्माद्या रव्यादिनः क्रमगणना सैव ७ – अशे$_1$ अस्मात् शन्यादेर्विपरीतगणना । यथा

यदि शे$_1$ = १ तदा क्रमगणनया वर्त्तमानः सोमवारस्तथा

शे = ६ । अस्मात । रविः । शनि । शुक्रः । गुरुः । बुधः । कुजः । इति विपरीतगणनया वर्त्तमानः सोम एव जातः ॥ ४० ॥

इदानीं व्यतिपातवैधृतादिवर्षानासमाह ।

**व्यतिपातवैधृतान्यर्कचन्द्रभगणा युता द्विसङ्गुणिताः ।**
**गुरुवर्षाणि गृहयुता द्वादशगुणिता गुरोर्भगणाः ॥ ४१ ॥**

अर्कचन्द्रभगणा युता द्विसङ्गुणिताश्च व्यतिपातवैधृतानि भवन्ति । अर्थाद्रविचन्द्रभगणयोगे यावन्तो भगणास्ते द्विसङ्गुणितास्तावन्तो व्यतिपातवैधृताह्वयाः स्युः । गुरोर्भगणा द्वादशगुणिता वर्त्तमानगुरुगृहयुता गुरुवर्षाणि स्युः ।

अत्रोपपत्तिः । रविशशियोगे भार्धे व्यतिपातश्चक्रे च वैधृताह्वयः । अतो रविशशियोगैकभगणे वारद्वय तेन योगभगणा द्विसङ्गुणास्तावन्तो व्यतिपातवैधृताह्वया गता स्युः । बृहस्पतेर्मध्यमराशिभोगात् साहितिका गुरुवर्षं वदन्ति । अतो गुरुभगणा द्वादशगुणा वर्त्तमानराशिसहिता गुरु-वर्षाणि भवन्तीति । वर्तते प्रसिद्धसूर्यसिद्धान्तेऽप्ययमेव गुर्वब्दानयनप्रकारो वर्त्तते ॥ ४१ ॥

इदानीं स्वोच्चनीचपरिवर्त्तान् द्विग्रहयोगांश्च ये वै नीचस्योच्चमाह ।

**भाद्यग्रहपरिवर्त्ता विशेषिताः स्वोच्चनीचपरिवर्त्ताः ।**
**भगणान्तरं द्वियोगाः कार्याश्चैराशिकेन गताः ॥ ४२ ॥**

भाग्यग्रहपरिवर्ताः पाठपठिता ग्रहभगणास्ते स्वोच्चभगणैर्विवर्जिता अन्तरितास्ते स्वोच्चनीचपरिवर्ता. स्वकेन्द्रभगणाः स्युः । 'खेचरोच्चभगणान्तरोन्मिता. सन्ति मन्दचलकेन्द्रपर्ययाः'—इति भास्करोक्तमेतदनुरूपमेव । अथ द्वयोर्ग्रहयोर्युगभगणानामन्तरं युगे द्वियोगा द्वयोर्ग्रहयोर्योगाः स्युः । ततस्त्रैराशिकेनेष्टकाले युगकुदिनैर्भगणान्तरतुल्या योगास्तदाऽहर्गणेन किमिति लब्धा गता योगाः कार्याः ।

अत्रोपपत्तिः । केन्द्रानयनस्यातिसुगमा । कल्पे भगणान्तरसमा एव ग्रहयोर्योगा भवन्ति । उभयोः प्रागमनात् इति ॥ ४२ ॥

इदानीं सावनमासाब्दाधिपौ यो वेत्ति तस्योपायमाह ।

युगणात् त्रिंशद्भक्ताद्यल्लब्धं द्विगुणितं सरूपं तत् ।
सप्तविभक्तं शेषः सावनमासाधिपोऽर्कादिः ॥ ४३ ॥
षष्टिशतत्रयभक्तात् कल्पगताहर्गणात् फलं त्रिगुणम् ।
सैकं सप्तविभक्तं सावनवर्षाधिपोऽर्कादिः ॥ ४४ ॥

त्रिंशद्भक्तादहर्गणाद्यल्लब्धं तद् द्विगुणितं सैकं च कार्यम् । ततः सप्तविभक्ते शेषोऽर्कादिः सावनमासाधिपो भवति । एवं कल्पगताहर्गणात् षष्ट्यधिकशतत्रयभक्ताद्यत् फलं तत् त्रिगुणं सैकं च कार्यम् । ततः सप्तविभक्ते शेषोऽर्कादिः सावनवर्षाधिपो भवति ।

अत्रोपपत्तिः । त्रिंशद्दिनैः सावनमासो भवति । अतोऽहर्गणस्त्रिंशता हृतो लब्धा गताः सावनमासास्ते द्विसङ्गुणाः कृता यतस्त्रिंशद्दिनात्मके सावनमासे सप्ततष्टे द्वयमवशिष्यते । वर्तमानमासपत्यर्थं सैकाः कृतास्ततः सप्ततष्टे मासाधिपतिरर्कादिर्भवति यतः कल्पादौ मासपतिरर्क आसीत् । अथ षष्ट्यधिकशतत्रयदिनैरेकः सावनोऽब्दः परिकल्पितः प्राचीनैस्ततस्तैर्दिनैर्हृतोऽहर्गणो लब्धा गताब्दास्त्रिसङ्गुणा यतः षष्ट्यधिकशतत्रयदिनात्मक एकस्मिन् सावनाब्दे सप्ततष्टे त्रयमवशिष्यते । वर्तमानाब्दपार्थं त्रिसङ्गुणाः सैकाः कृताः । शेषोपपत्तिरतिसुगमा । अस्मिन् सूर्यसिद्धान्तेऽप्ययमेव प्रकारः ॥ ४३-४४ ॥

इदानीं होरेशं यो वेत्तीत्यस्योत्तरमाह ।

**अर्कानलग्नहोराः पञ्चगुणाः सविकला यदि सरूपाः ।**
**सप्तविभक्ताः शेषो दिनपाद्यः कालहोरेशः ॥ ४५ ॥**

अर्कानलग्नेन होराः साध्याः । अर्कस्य भोग्यकालो लग्नभुक्तकालो मध्योदयाश्चैषां योगो घट्यात्मक इष्टकालः स च सार्धद्विभक्तो लब्धा होरा भवन्ति यतो घटीद्वयं सार्धं होरेति जातकज्ञानां सिद्धान्तः । लब्धा होराः पञ्चगुणा यदि होराः सविकलाः सावयवास्तदा पञ्चगुणा ये कृतास्ते सरूपाः कार्याः । अन्यथा पञ्चगुणा एव ग्राह्याः । ततस्ते सप्तविभक्ताः शेषे दिनपाद्यः कालहोरेशो भवति । अर्थाद् दिनवारादिक्रमगणनया कालहोरेशो भवतीति ।

अत्रोपपत्तिः । प्रथमा होरा दिनपतेर्द्वितीया दिनपतेः षष्ठस्यैवं षष्ठः षष्ठः कालहोरेशो भवति । अतो द्वयोर्होरेशयोरन्तरं पञ्च । अतो होराः पञ्चगुणाः सप्त वारा भवन्ति । यदि होराः सावयवास्तदा वर्तमानहोरेशानयनार्थं ते पञ्चगुणाः सैकाः कार्याः । ततः सप्ततष्टे दिनपाद्होरेशो भवतीति ।

अत्र चतुर्वेदाचार्येणार्कानलग्नभागाः पञ्चदशहृता होरा भवन्तीति कालभवान् सार्धद्विघटीभवान् पञ्चदशलवान् प्रकल्प्य तैराशिकेनार्कलग्नान्तरभागैरनुपातः कृतः स च गणितयुक्तितो न युक्त इति बुद्धिमद्भिर्विचिन्त्यम् ॥ ४५ ॥

इदानीं मासपत्यादौ विशेषमाह ।

**त्रिचतुरनन्तरषष्ठाः सावनमासाब्ददिवसहोरेशाः ।**
**दिनगतघटिका द्विगुणाः पञ्चहृता वाऽन्यमतमेतत् ॥ ४६ ॥**

सावनमासपतिस्त्रिको भवति । अर्थाद्यदि मासपतिरर्कस्तदा तदन्यमासपतिः कुजः । एवं त्रिकस्त्रिको मासपतिर्भवति । एवं सावनाब्दपतिश्चतुर्थश्चतुर्थो भवति । वारपतिरनन्तरो रवेरनन्तरं सोमस्ततो भौम इति । होरेशश्च षष्ठः षष्ठ इति । होरेशानयने मतान्तरमाह

दिनगतघटिका इति । दिनगतघटिका द्विगुणा पञ्चहृता लब्धा होरेषा भवन्ति दिनपादा । एतदस्मत न सर्वसम्मतमिति । यत एतन्मते यावत्यो होरास्तावन्त एव वारक्रमेण होरेशा न कक्षाक्रमेणेति ।

अत्रोपपत्तिः । माससङ्ख्या ३० सप्ततष्टा शेषम् २ । अतस्त्रिकस्त्रिको मासपतिः । एवं वर्षसङ्ख्या ३६० सप्ततष्टा शेषम् ३ । अतश्चतुर्थश्चतुर्थो वर्षपतिः । शेषं परिभाषातः स्पष्टम् ॥ ४६ ॥

इदानीमिष्टमध्यपदयोगान्निष्टगुणोत्तरेषु तेषामिष्टान यो वेत्तीत्यस्योत्तरमाह ।

**गच्छधनमिष्टगुणितैर्धनैर्युतोनं पृथक् पृथक् सहितम् ।**
**गुणकयुतोनपदहृतं सर्वधनमतोऽवशेषाणि ॥ ४७ ॥**

सर्वेषामिष्टानां पदानामेकजातीनां योगो गच्छधनमिति संज्ञा सर्वधनमित्यर्थः । तस्मात् सर्वधनादिष्टगुणगुणः प्रथमः पदः विशोध्यते वा तत्र योज्यते यो भवति स ज्ञायते । एवं तस्मादेव तेनैव गुणेन गुणो द्वितीयः पदः विशोध्यते वा तत्र योज्यते यो भवति सोऽपि ज्ञायते । एवं तेनैव गुणेन गुणितान सर्वानभीष्टान् पदांस्तस्मात् सर्वधनादपास्य वा तत्र संयोज्य या या सङ्ख्या भवन्ति तास्ता पृथक् पृथग्ज्ञायन्ते । धनानि च पृथक् पृथगपदमानानि । यावन्तोऽभीष्टा पदास्तत्र पदं वा गच्छमानम् । तेनायमर्थः । गच्छधनमिष्टगुणितैर्धनैपदैर्युतोनं कृत सङ्ख्याभिः पृथक् पृथक् तत् सहितं कार्यम् । गुणकयुतोनपदहृतमर्थोऽनेन गुणकेन गुण पदमान सर्वधने युतोन कृत तेन गुणकेन युतोन पदं कार्यं तेन हृत लब्ध सर्वधन गच्छधन भवति । अतोऽस्मादवशेषाणि पृथक् पृथगपदमानानि ज्ञायन्ते ।

अत्रोपपत्तिः । कल्प्यन्ते पदमानानि $प_1$, $प_2$, $प_3$, $प_4$, इष्टगुणकार इ । सर्वधनम् = स । युतोने कृते सङ्ख्या $इ_1$, $इ_2$

तदा $इ_1 = स \pm इ\, प_1$

$इ_2 = स \pm इ\, प_2$

$$\text{दृ}_1 = \text{स} \pm \text{र}\cdot\text{य}_1$$
$$\vdots \qquad\qquad \vdots$$

सर्वयोगे $\text{दृ}_1 + \text{दृ}_2 + \text{दृ}_3 + \cdots = \text{प}\cdot\text{स} \pm \text{र}(\text{य}_1 + \text{य}_2 + \cdots)$

$= \text{प स} \pm \text{र}\cdot\text{स} = \text{स}(\text{प} \pm \text{र})$

$\therefore \text{स} = \dfrac{\text{दृ}_1 + \text{दृ}_2 + \text{दृ}_3 \cdots}{\text{प} \pm \text{र}}$ अत उपपन्नम् ।

अथ $\text{दृ}_1 = \text{स} \pm \text{र}\cdot\text{य}_1 \therefore \text{य}_1 = \dfrac{\text{स} \sim \text{दृ}_1}{\text{र}}$ ।

एवं सर्वेषां ग्रहाणां मानानि स्युः ॥ ४७ ॥

इदानीमध्यायोपसंहारमाह ।

**मध्योत्तरमेकोनार्यापञ्चाशत् त्रयोदशोऽध्यायः ।**
**ज्ञात्वैवं तन्त्रविदामाचार्यो भवति मध्यगतौ ॥ ४८ ॥**

**इति श्रीब्राह्मस्फुटसिद्धान्ते मध्यगतिप्रश्नो-त्तराध्यायस्त्रयोदशः ॥ १३ ॥**

स्पष्टार्थम् ॥ ४८ ॥

मधुसूदनसूनुनोदितो यस्तिलकः श्रीपृथुनेह जिष्णुजोक्ते ।
हृदि तं विनिधाय नूतनोऽयं रचितो मध्यगतौ सुधाकरेण ॥

इति श्रीकृपालुदत्तसूनुसुधाकरद्विवेदिविरचिते ब्राह्मस्फुटसिद्धान्त-नूतनतिलके मध्यगत्युत्तराध्यायस्त्रयोदशः ॥ १३ ॥



दिनगतघटिका इति । दिनगतघटिका द्विगुणा पञ्चहृता लब्धा होरा वा भवन्ति दिनपाद्या । एतदन्यमतं न सर्वसम्मतमिति । यत इत्थमेते यावत्यो होरास्तावन्त एव वारक्रमेण होरेशा न षष्ठक्रमेणेति ।

अत्रोपपत्तिः । मासगणः ३० सप्ततष्टा शेषम् २ । अतस्त्रिकस्त्रिको मासपतिः । एवं वर्षसङ्ख्या ३६० सप्ततष्टा शेषम् ३ । अतश्चतुर्थश्चतुर्थो वर्षपतिः । शेषं परिभाषातः स्पष्टम् ॥ ४६ ॥

इदानीमिष्टमध्यसयोगान्निष्टगुणैर्युतानामिष्टानां योगो ज्ञानस्योत्तरमाह ।

**गच्छधनमिष्टगुणितैर्धनैर्युतोनं पृथक् पृथक् सहितम् ।**
**गुणकयुतोनपदहृतं सर्वधनमतोऽवशेषाणि ॥ ४७ ॥**

सर्वेषामिष्टानां ग्रहाणामेकजातीनां योगो गच्छधनमिति संज्ञा सर्वधनमित्यर्थः । तस्मात् सर्वधनादिष्टगुणगुणः प्रथमो ग्रहो विशोध्यते वा तत्र योज्यते यो भवति स ज्ञायते । एवं तस्मादेव तेनैव गुणेन गुणो द्वितीयो ग्रहो विशोध्यते वा तत्र योज्यते यो भवति सोऽपि ज्ञायते । एवं तेनैव गुणेन गुणितान् सर्वानभीष्टान् ग्रहांस्तस्मात् सर्वधनादपास्य वा तत्र संयोज्य या या सङ्ख्या भवन्ति तास्ताः पृथक् पृथग्ज्ञायन्ते । धनानि च पृथक् पृथग्ग्रहमानानि । यावन्तोऽभीष्टा ग्रहास्तत् पदं वा गच्छमानम् । तेनायमर्थः । गच्छधनमिष्टगुणितैर्धनैर्युतोनं कृतं सङ्ख्यामन्ति पृथक् पृथक् तत् संहितं कार्यम् । गुणकयुतोनपदहृतमर्थादेकेन गुणकेन गुणग्रहमान सर्वधने युतोनं कृतं तेन गुणकेन युतोनं पदं कार्यं तेन हृतं लब्धं सर्वधनं गच्छधनं भवति । अतोऽस्मादवशेषाणि पृथक् पृथग्ग्रहमानानि ज्ञायन्ते ।

अत्रोपपत्तिः । कल्प्यन्ते ग्रहमानानि $य_1$, $य_2$, $य_3$, $य_4$ इष्टगुणकारः इ । सर्वधनम् = स । युतोने कृते सङ्ख्या $ह_1$, $ह_2$

तदा $ह_1 = स \pm इ\, य_1$

$ह_2 = स \pm इ\, य_2$

$$दृ_1 = म \pm र \cdot य_1$$
$$\vdots \qquad \vdots$$

सर्वयोगे $दृ_1 + दृ_2 + दृ_3 + \cdots = प \cdot म \pm र(य_1 + य_2 + \cdots)$
$$= प\ म \pm र \cdot म = म(प \pm र)$$

$\therefore म = \dfrac{दृ_1 + दृ_2 + दृ_3 \cdots}{प \pm र}$ अत उपपन्नम् ।

अथ $दृ_1 = म \pm र \cdot य_1 \therefore य_1 = \dfrac{म \backsim दृ_1}{र}$ ।

एवं सर्वेषां यद्दाया मानानि स्युः ॥ ४७ ॥

इदानीमध्यायोपसंहारमाह ।

**मध्योत्तरमेकोनार्यापञ्चाशत् त्रयोदशोऽध्यायः ।**
**ज्ञात्वैवं तन्त्रविदामाचार्यो भवति मध्यगतौ ॥ ४८ ॥**

**इति श्रीब्राह्मस्फुटसिद्धान्ते मध्यगतिप्रश्नोत्तराध्यायस्त्रयोदशः ॥ १३ ॥**

स्पष्टार्थम् ॥ ४८ ॥

मधुसूदनसूनुनोदितो यस्तिलकः श्रीपृथुनेह जिष्णुजोक्ते ।
हृदि तं विनिधाय नूतनोऽयं रचितो मध्यगतौ सुधाकरेण ॥

इति श्रीकृपालुदत्तसूनुसुधाकरद्विवेदिविरचिते ब्राह्मस्फुटसिद्धान्तनूतनतिलके मध्यगत्युत्तराध्यायस्त्रयोदशः ॥ १३ ॥



# अथ स्फुटगत्युत्तराध्यायः ।

तत्रादौ प्रश्नानाह ।

भुजभागैः कोटिज्यां कोट्यंशैर्यः करोति बाहुज्याम् ।
कोटिं भुजेन बाहुं कोट्या वा स्फुटगतिज्ञः सः ॥ १ ॥

यो भुजभागै कोटिज्या करोति । कोट्यंशैश्च बाहुज्या करोति । भुजेन भुजज्यया कोटि कोटिज्या करोति । कोट्या कोटिज्यया वा बाहु भुजज्या करोति स स्फुटगतिज्ञ स स्फुटगति जानातीत्यर्थ. । एवमत्र प्रश्नचतुष्टयम् ॥ १ ॥

इदानीमन्यान प्रश्नानाह ।

परमफलकेन्द्रविद्यः करोति कोटिज्यया स्फुटं कर्णम् ।
कर्णात् कोटिं कोट्या बाहुं वा स्फुटगतिज्ञः सः ॥ २ ॥

य परमफलकेन्द्रविद्गणक कोटिज्यया केन्द्रकोटिज्यया स्फुट कर्ण शीघ्रकर्ण करोति भुजफल विनैव । कर्णात कोटि केन्द्रकोटिज्या य करोति । कोट्या केन्द्रकोटिज्यया वा बाहु केन्द्रभुजज्या करोति स स्फुटगतिज्ञ । एवमत्र प्रश्नचतुष्टयम ॥ २ ॥

इदानीमन्यान प्रश्नानाह ।

केन्द्रभुजकोटिजीवापरमफलज्ञः करोति यः कर्णम् ।
स्वोच्चं सफलं स्पष्टं करोति यः स्फुटगतिज्ञः सः ॥ ३ ॥

य केन्द्रभुजज्या-केन्द्रकोटिजीवा-परमफलज्ञ कर्णं शीघ्र वा मन्द करोति । स्वोच्च सफल स्पष्ट च य करोति यथोन्मन्दस्पष्ट स्फुट पद च य करोति स स्फुटगतिज्ञ । एव मन्दशीघ्रभेदेनात्र प्रश्नचतुष्टयम् ॥ ३ ॥

इदानीमन्यान प्रश्नानाह ।

युगणात् स्फुटं ग्रहं यो भुजकोटिज्ये फले विना ज्याभिः ।
ज्याभिर्विना फलधनुः करोति वा स्फुटगतिज्ञः सः ॥ ४ ॥

अहर्गणादेव यः स्फुटं मन्दशीघ्रफलादिसंस्कृतं ग्रहं करोति । ज्याभिः पठितैर्ज्याखण्डैर्विना यो भुजकोटिज्ये फले भुजकोटिफले च करोति । एवं ज्याभिर्विना यः फलचापं ज्यायाश्चापं वा करोति स एव स्फुटगतिज्ञः । एवमत्र प्रश्नचतुष्टयम् ॥ ४ ॥

इदानीमन्यान् प्रश्नानाह ।

**इष्टाहिन्यौदयिकान् करोति मध्यान् ग्रहान् स्पष्टान् ।**
**स्वोच्चस्फुटैर्ग्रहं यः करोति वा स्फुटगतिज्ञः सः ॥ ५ ॥**

इष्टाहौदयिकान् मध्यान् ग्रहान् यः स्पष्टान् करोति । अह्निन्यौदयिकान् मध्यान् वा यः स्पष्टान् करोति । वा यः स्वोच्चस्फुटैर्मन्दोच्चशीघ्रोच्चस्फुटपरैर्वा ग्रहं मध्यं ग्रहं करोति स स्फुटगतिज्ञः । एवमत्र प्रश्नत्रयम् ॥ ५ ॥

इदानीमन्यान् प्रश्नानाह ।

**सङ्क्रान्तेराद्यन्तौ ग्रहस्य यो राशिभतिथिकरणान्तान् ।**
**व्यतिपाताद्यन्तौ वा यो वेत्ति स्फुटगतिज्ञः सः ॥ ६ ॥**

यो ग्रहस्य सङ्क्रान्तेराद्यन्तौ वेत्ति । ग्रहस्य राशिभस्य नक्षत्रस्याद्यन्तौ वेत्ति । तिथेराद्यन्तौ वेत्ति । करणस्याद्यन्तौ वेत्ति । वा व्यतिपातस्याद्यन्तौ वेत्ति । अर्थात् सर्वदा सन्धिमानं यो वेत्ति स स्फुटगतिज्ञः । एवमत्र प्रश्नपञ्चकम् ॥ ६ ॥

अथैषामुत्तराण्याह ।

तत्रादौ भुजभागे कोटिज्येत्यादिप्रश्नचतुष्टयोत्तरमाह ।

**व्यासदलमितरजीवा भुजकोट्यंशोत्क्रमज्यया हीनम् ।**
**कोटिभुजज्याव्यासार्धकृतिविशेषात् पदं वान्या ॥ ७ ॥**

व्यासदलं भुजोत्क्रमज्यया हीनं शेषमितरजीवा कोटिजीवा स्यात् । कोट्युत्क्रमज्यया हीनं व्यासदलं शेषमितरजीवा भुजज्या भवेत् । एवं कोटिज्याव्यासार्धवर्गान्तरात् पदमन्या भुजज्या स्याद्भुजज्याव्यासार्धवर्गान्तरात् पदमन्या कोटिज्या स्यादिति ।

अत्रोपपत्तिर्व्यत्यस्त्या स्फुटा ॥ ७ ॥

इदानीं परमफलकेन्द्रविद्ध कोटिज्यया स्फुट कर्णं करोतीत्यत्रोत्तरमाह ।

**कोटिज्यया द्विगुणयाऽन्त्यफलज्यागुणितया युतोनायाः ।**
**मृगकर्क्यादौ त्रिज्यान्त्यफलज्याकृतियुतेः पदं कर्णः ॥ ८ ॥**

त्रिज्यान्त्यफलज्याकृतियुतेर्मृगादौ केन्द्रे द्विगुणयाऽन्त्यफलज्यागुणितया कोटिज्यया युतायाः कर्क्यादौ केन्द्रे तु तयोनाया यत् पदं स कर्णो भवेत् ।

अत्रोपपत्त्यर्थं भास्करकर्णानयनस्य प्रकारचतुष्टयं 'स्वकोटिजीवान्त्यफलज्ययोर्यो योगो मृगादौ'—इत्यादि द्रष्टव्यम् ॥ ८ ॥

इदानीं कर्णात् कोटिमित्याद्युत्तरमाह ।

**त्रिज्यान्त्यफलकृतियुतेः कर्णकृतेश्चान्तरेऽवशेषं यत् ।**
**द्विगुणान्त्यफलहृतं तत् कोटिज्या बाहुजीवाऽतः ॥ ९ ॥**

त्रिज्यान्त्यफलज्यावर्गयोगस्य कर्णवर्गस्य चान्तरे यदवशेषं तद्द्विगुणान्त्यफलज्यया हृतं लब्धं तत्कोटिजीवा केन्द्रकोटिज्या स्यादतः उक्तप्रकारेण कोटिज्यावर्गोनात् त्रिज्यावर्गात् पदमित्यनेन बाहुज्या केन्द्रज्या स्यादित्यर्थः ।

अत्रोपपत्तिः । कर्णानयनवैपरीत्येन सुगमेति ॥ ९ ॥

इदानीं प्रतिवृत्तभङ्गीमाह ।

**कक्षामण्डलतुल्यप्रतिमण्डलमध्यमवनिमध्यात् खे ।**
**तत्स्वोच्चनीचवृत्तव्यासार्धेऽभिमुखमुच्चस्य ॥ १० ॥**
**प्रतिमण्डलस्य परिधौ मध्यमभुक्त्या स्फुटग्रहो भ्रमति ।**
**मन्दोच्चादनुलोमं शीघ्रात् प्रतिलोममवनिस्थः ॥ ११ ॥**
**स्पष्टं पश्यति यस्मात् मध्यादूनाधिकं स्वकक्षायाम् ।**
**तस्मात् तदन्तरफलमृणं धनं वा ग्रहे मध्ये ॥ १२ ॥**

खे आकाशे स्वोच्चस्याभिमुखमवनिमध्यात् तत्स्वोच्चनीचवृत्तव्या-सार्धेऽन्त्यफलज्यायै कक्षामण्डलतुल्यस्य प्रतिमण्डलस्य मध्य केन्द्र भव तीति । अवनिस्थो भूगर्भस्थो द्रष्टा । स्वकक्षाया कक्षामण्डले भवतये । शेष स्पष्टार्थम् । 'त्रिभज्यकाप्तमितकर्कटकेन'–इत्यादि भास्करोक्तमेतद-नुरूपमेवेति ॥ १०–१२ ॥

इदानीं स्पष्टा कोटिमाह ।

**अन्त्यफलज्याग्रात् स्यात् पदयोराद्यन्तयोरुपरि कोटिः ।**
**द्वितृतीययोरधस्तात् तदन्तरैक्यं ततः कोटिः ॥ १३ ॥**

कोटि. प्रतिमण्डलीयकेन्द्रकोटिज्या । ततस्तस्मात् तदन्तरैक्य केन्द्र-कोटिज्यान्त्यफलज्ययोराद्यन्तयोः पदयोरैक्य कर्क्यादौ त्वन्तर कोटिः स्पष्टा कोटिः प्रतिमण्डलीयग्रहकेन्द्रात् कक्षावृत्तकेन्द्रगतियर्यगेखावधिर्व स्वरूपा कोटिः स्यादित्यर्थ. । 'मध्यस्यरेखे किल वृत्तयोर्ये'–इत्यादि भास्करोक्तमेतदनुरूपमेव ।

अत्रोपपत्त्यर्थं भास्करगोलाध्यायस्य छेद्यकाधिकारो द्रष्टव्य' ॥ १३ ॥

इदानीं पूर्वोक्तस्पष्टकोट्यानयन ततः कर्णानयनं चाह । यथा च केन्द्रभुजकोटिजीवापरमफलज्ञ. कर्णो करोतीत्यस्योत्तरमाह ।

**कोट्यन्त्यफलज्यैक्यं मकरादावन्तरं कुलीरादौ ।**
**तद्वाहुज्याकृत्योः संयोगपदं भवति कर्णः ॥ १४ ॥**

स्पष्टार्थम ।

अत्रोपपत्तिश्च भास्करच्छेद्यकाधिकारेण स्फुटा ।

अथ चतुर्वेदाचार्येण स्वटीकाया यथा चेत्सम्बा त्रिमलतः प्रति-पादिता स्वगोलाध्यायस्य छेद्यकाधिकारे भास्करेण सैव [illegible] दृष्टा ॥ १४ ॥

इदानीं प्रतिमण्डलपदान्याह ।

**प्रतिमण्डलपदमाद्यं गृहत्रयं सान्त्यफलमथ चतुर्थोऽन्त्यम् ।**
**चक्रार्धमनेनोनं द्वितृतीयं चतुर्भमाद्यसमम् ॥ १५ ॥**

एवं चान्त्यफलधनुरन्त्यफलज्याचापसहितमाद्यं पदं स्यात् । अनेनाद्यपदेन चक्रार्धमूनमतोऽन्यद्वितृतीय द्वितीयं पदं तदेव तृतीयं पदं च स्यात् । चतुर्थं पदं चाद्यसममाद्यपदसममेव वेद्यम् ।

अत्रोपपत्तिः । 'चापेन शीघ्रान्त्यफलज्यकायाश्चाभ युतोनोनयुतम्'–इत्यादिभास्करविधिना स्फुटा ॥ १५ ॥

इदानीं पुनर्मान्दस्य पदान्याह ।

त्रिभमन्त्यफलधनुर्युतमाद्यं नवमं तृतीयपदमूनम् ।
द्विचतुर्थे षड्द्वादशभानि प्रतिमण्डलपदानि ॥ १६ ॥

त्रिभं राशित्रयमन्त्यफलधनुर्युतमाद्यं पदमुच्चादेव नवममन्त्यफलधनुषोनमुच्चात् तृतीयपदमानं भवति । द्विचतुर्थे तु षड्द्वादशभानि अर्थादुच्चाद्द्वितीयपदमानं षड्राशयश्चतुर्थपदमानं द्वादशराशयः । एवं प्रथमं यदागतं तद्राशिषट्काच्छोध्यं द्वितीयम् । अन्त्यफलधनुरूनाष्टभाद्राशिषट्कं शोध्यं शेषं तृतीयम् । अन्त्यफलधनुरूननवभं चक्राच्छोध्यं शेषं चतुर्थम् । एवं प्रतिमण्डलपदानि भवन्ति ।

अत्र चतुर्वेदाचार्यः । 'यदि नामेयमार्या ब्रह्मकृता न भवति प्रागार्येव शोभनेति' ॥ १६ ॥

इदानीं केन्द्रभुजकोटिजीवादन्त्यफलज्या यः स्वोच्चं स्फुटं ग्रहं करोतीति प्रश्नोत्तरमाह ।

कर्णहृतं व्यासार्धं भुजज्यया गुणितमाप्तधनुराद्ये ।
प्रोह्य भदलाद्द्वितीये षड्राशियुतं तृतीयपदे ॥ १७ ॥
चक्रात् प्रोह्य चतुर्थे स्फुटोच्चयोरन्तरं स्वमन्दोच्चे ।
क्षेप्यं शीघ्रे शोध्यं तत् स्पष्टः पूर्ववत् शेषम् ॥ १८ ॥

स्पष्टमार्याद्वयम् । 'त्रिज्याहता कर्णहृता भुजज्ये'त्यादिभास्करोक्तमेतदनुरूपमेव ।

अत्रोपपत्तिः । इहाचार्येण प्रथमं स्पष्टकेन्द्रभुजज्या साधिता ततः प्रतिमण्डलपदवशेन स्पष्टकेन्द्रमानमानीतम् । ततः स्वमन्दोच्चे तस्य मन्द-

स्फुटो भवति मन्दस्फुटान्मन्दोच्चोनाच्चतः स्पष्टमन्दकेन्द्रम् । एवं यदि तत् स्पष्टशीघ्रकेन्द्रं तदा शीघ्रे शीघ्रोच्चं शोध्यं स्पष्टो ग्रहः स्यात् स्फुटोनशीघ्रोच्चस्य स्पष्टशीघ्रकेन्द्रत्वादिति । एवमाचार्येण स्फुटीकरणे मन्दकर्णः शीघ्रकर्ण इति कर्णद्वयं साधितम् । ततः शेषं मन्दफलशीघ्रफलादिकं प्राग्वत् गणितक्रियया सम्पद्यते । मध्यस्फुटकेन्द्रयोरन्तरं फलमिति । वा ज्ञातान्मन्दस्फुटात् प्राग्वच्छीघ्रकर्णादिना शीघ्रं फलं कार्यमिति सर्वं स्फुटम् ॥ १७–१८ ॥

इदानीं भुजान्तरमाह ।

**मध्यस्फुटान्तरकला बाहुफलं तीक्ष्णकिरणस्य ।**
**स्फुटभुक्त्याऽर्कादीनां भुजान्तरं क्षयधनं रविवत् ॥ १९ ॥**

मध्यरवेः स्फुटरवेश्चान्तरकलास्तीक्ष्णकिरणस्य बाहुफलं मन्दफलकला भवन्ति । ततोऽर्कादीनां स्फुटभुक्त्या त्रैराशिकेन, रविवद्भुजान्तरं क्षयधनं भवति ।

अत्रोपपत्तिः । मध्यस्फुटान्तरकला मन्दफलकलाः प्रसिद्धाः । आचार्येण तत्कलाः कालकला स्थूलत्वात् समाः कल्पिताः । ततो मन्दफलकला एव भास्वत्फलोत्था असवो जातास्ततोऽहोरात्रासुभिर्गतिकलास्तदा भास्वत्फलोत्थासुभिः किमित्यनुपातेन भुजान्तरं भवति । ततो 'मध्यमार्कोदयात् प्राक् स्फुटार्कोदयः–'इत्यादिभास्करविधिना क्षयधनोपपत्तिः स्फुटा ॥ १९ ॥

इदानीमहर्गणात् स्फुटं ग्रहं यः करोतीत्यस्योत्तरमाह ।

**मण्डलशेषात् स्वोच्चं विशोध्य सदृशं चतुर्गुणाल्लब्धम् ।**
**केन्द्रपदानि जिनगुणात् जीवा गतयेयगतयेयैः ॥ २० ॥**
**छेदचतुर्थैर्बाहोर्येयगतागतगतैस्तथा कोटिः ।**
**प्राग्वदिनेन्दुभुजफलं मन्दफलं भूसुतादीनाम् ॥ २१ ॥**
**फलचापकलागुणिते छेदे मण्डलकलाहृते लब्धम् ।**
**मण्डलशेषे पूर्ववदृणधनमस्माद्ग्रहः स्पष्टः ॥ २२ ॥**

कल्पग्रहभगणा ग्रहगणगुणाः कल्पकुदिनहृता फलं गतभगणास्तेषां प्रयोजनाभावात् त्याज्याः शेषं मण्डलशेषं भगणशेषमुच्यते तस्मात् ग्रहस्य सजातीयमुच्चमुच्चभगणशेषं विशोध्य शेषं केन्द्रभगणशेषं भवति । तस्मा च्चतुर्गुणात् कल्पकुदिनैर्यल्लब्धं तानि गतानि पदानि भवन्ति । शेषा ज्जिनगुणात् कल्पकुदिनैर्यानि लब्धानि तत्सङ्ख्यका जीवा गता शेष ज्यान्तरहतं कल्पकुदिनैरेव भक्तं फलं गतज्याया योज्यमभीष्टा केन्द्रज्या भवति । एवं पदक्रमेण गतैष्यगतैष्यैः केन्द्रज्या साध्या । प्रथमे पदे गताद् द्वितीये येयादेष्यात् तृतीये गताच्चतुर्थे च येयाज्ज्या साध्येत्यर्थः । अथै कपदप्रमाणमाह छेदचतुर्थं । छेदस्य कल्पकुदिनतुल्यस्य यश्चतुर्थांशस्तत्प्रमाणं पदं भवति । बाहोश्छेदचतुर्थैर्भुजस्य चतुर्भिः पदैः क्रमेण यथ गतागतगतैस्तथा कोटिं कोटिज्या साध्या । प्रथमे पदे येयादेष्यात् द्वि तीये गतात् तृतीयेऽगतादेष्याच्चतुर्थे गतात् कोटिज्या साध्येत्यर्थं । केन्द्रज्यया प्राग्वदर्कचन्द्रयोर्भुजफलं मन्दफलं भूसुतादीनां च मन्दफलं शा घ्रम । छेदे कल्पकुदिनाद्ये फलचापकलागुणिते मण्डलकलाभिर्[illegible] लाभिर्हृते लब्धं मान्दं वा शैघ्र्यं फलं भगणशेषजातीयं तत् पूर्ववत् केन्द्र गोलवशान्मण्डलशेषे ग्रहभगणशेषे ऋणधनं कार्यमेवं स्फुटभगणशेषं भवति । अस्माद्राश्यात्मकः स्फुटो ग्रहः साध्य इति ।

अत्रोपपत्तिः । भगणशेषादेवाचार्येण केन्द्रादिकं साधितम् । तत्र एकस्मिन् भगणे चत्वारि पदानि तदा भगणशेषे किमिति पदानि $\frac{४ \times \text{भशे}}{\text{ककुदि}}$ । एवमेकस्मिन् पदे ५४०० कलास्तदा गते वा गम्ये पदे किं लब्धा गतगम्यक लास्तस्त्रिशिद्धृता ज्यासङ्ख्या $= \frac{\text{गत, वा गम्य} \times ५४००}{\text{ककुदि} \times २२५} = \frac{\text{गत, वा गम्य} \times २४}{\text{ककुदि}}$ ।

ततो ज्यादीनामानयनं सुगमम् ।

अथ फलकलाश्चक्रकलाहृता जाता भगणात्मिकाः फलकला $= \frac{\text{फक}}{\text{चक}} = \frac{\text{फक ककुदि}}{\text{चक्र ककुदि}} = \frac{\frac{\text{फक ककुदि}}{\text{चक}}}{\text{ककुदि}} = \frac{\text{लब्ध}}{\text{ककुदि}}$ । एवं ग्रहभगणशेषे संस्का

रयोर्यं समच्छेदं भगणात्मकं फलं जातमिति । शेषोपपत्तिः सुगमा ॥ २०–२२ ॥

इदानीं विना ज्याभिर्भुजकोटिज्ये तत्फले च यः करोतीत्यस्योत्तरमाह ।

**भुजकोट्यंशोनगुणा भार्धांशास्तच्चतुर्थभागोनैः ।**
**पञ्चद्वीन्दुखचन्द्रैर्विभाजिता व्यासदलगुणिता ॥ २३ ॥**
**तज्ज्ये परमफलज्यासङ्गुणिता तत्फले विना ज्याभिः ।**
**इष्टोच्चनीचवृत्तव्यासार्धे परमफलजीवा ॥ २४ ॥**

भार्धांशाः खनागेन्दवो भुजांशैर्वा कोट्यंशैर्यथा जीवाऽपेक्षिता तैरूना गुणाश्च कार्याः । ततस्त एव पञ्चद्वीन्दुखचन्द्रैः – १०१२५ स्तच्चतुर्थांशोनैर्भुजकोट्यूनगुणखनागेन्दुचतुर्थांशोनैर्भक्ताः । लब्धिर्व्यासदलगुणा यस्मिन् व्यासार्धे जीवाऽपेक्षिता तेन गुणा तदा तज्ज्ये भुजकोटिज्ये भवतः । तथा सैव लब्धिः परमफलज्यागुणा तदा तत्फले भुजकोटिफले ज्याभिर्ज्याखण्डैर्विना भवत इति । परमफलज्या च कैत्याहेष्टोच्चनीचवृत्तव्यासार्धे परमफलजीवा भवतीति ॥

अत्रोपपत्तिः । यदि व्यासार्धे भुजज्या तदा द्विगुणव्यासार्धे का लब्धा द्विगुणव्यासार्धे भुजज्या $= \frac{\text{ज्याभु} \cdot २\,\text{व्या}}{\text{व्या}} = २\,\text{ज्याभु}$ । अतः कस्मिन्नपि व्यासार्धे द्विगुणभुजांशानां या पूर्णज्या सैव द्विगुणतद्व्यासार्धे भुजज्या भवतीति । अथेष्टव्यासार्धे द्विगुणभुजांशानां पूर्णज्यासाधनार्थं स्वल्पान्तराद्व्यासस्त्रिगुणः परिधिः = ३६० । यद्यनेन चक्रसमचापीयमानं लभ्यते तदा द्विगुणभुजांशैः किं लब्धं तच्चापमानम् = २ भु । ततश्चाचोननिघ्नपरिधिः प्रथमाह्वयः स्यादित्यादिविधिना चार्कव्यासे द्विगुणभुजांशपूर्णज्या जाता चार्कमितत्रिज्यायां भुजज्या $= \frac{(३६० - २\,\text{भु})\,२\,\text{भु} \times ४ \times १२०}{३६०^२ \times \frac{५}{४} - (३६० - २\,\text{भु})\,२\,\text{भु}}$

$$= \frac{(१८० - \text{भु})\,\text{भु} \times १६ \times १२०}{\frac{३६० \times ३६० \times ५}{४} - (१८० - \text{भु})\,\text{भु} \times ४} = \frac{(१८० - \text{भु})\,\text{भु}\;१२०}{\frac{९० \times ३६० \times ५}{१६} - \frac{(१८० - \text{भु})\,\text{भु}}{४}}$$

$$= \frac{(१८० - भु) भु \times १२०}{४५ \times ४५ \times ५ - \frac{(१८० - भु) भु}{४}} = \frac{(१८० - भु) भु \times १२०}{१०१२५ - \frac{(१८० - भु) भु}{४}}$$ ।

यदि सार्कत्रिज्यायामियं भुजज्या तदेष्टत्रिज्यायां काऽऽगतेष्टत्रिज्यायां भुजज्या

$$= \frac{(१८० - भु) भु \ त्रि}{१०१२५ - \frac{(१८० - भु) भु}{४}}$$ । त्रिज्यायेव भुजज्या तदा परमफलज्यया

किं जातं भुजफलम् $= \frac{(१८० - भु) भु \ ज्याप्फ}{१०१२५ - \frac{(१८० - भु) भु}{४}}$ । एवं भुजस्थाने कोटिं

विन्यस्य कोटिज्याकोटिफले ज्ञेये । शेषोपपत्तिः स्फुटा । भास्करप्रकारो-

पपत्त्यर्थं कल्प्यते ।

ज्याचा $= \frac{या \ व्या \cdot चा (प - चा)}{का \ प^२ - चा (प - चा)}$ । अत्र व्यासः = व्या, परिधिः = प,

चापम् = चा, तत्पूर्णज्या = ज्याचा इति बोध्यम् ।

अथ चापस्य परिधिदलमितत्वे तत्पूर्णज्या व्याससमा

तेन व्या $= \frac{या \cdot व्या \cdot \frac{प}{२} (प - \frac{प}{२})}{का \cdot प^२ - \frac{प}{२} (प - \frac{प}{२})} = \frac{या \ व्या \cdot \frac{प^२}{४}}{का \ प^२ - \frac{प^२}{४}} = \frac{या \cdot व्या}{४ का - १}$

वा १ $= \frac{या}{४ का - १}$

परिधिषष्ठांशसमचापस्य पूर्णज्या तु व्यासदलसमा त्रिज्यार्धं राशिज्येत्युक्तेः ।

अतः $\frac{व्या}{२} = \frac{या \cdot व्या \frac{प}{६} (प - \frac{प}{६})}{का \ प^२ - \frac{प}{६} (प - \frac{प}{६})} = \frac{\frac{५प^२}{३६} या \ व्या}{का \cdot प^२ - \frac{५प^२}{३६}} = \frac{५ या \cdot व्या}{३६ का - ५}$

वा $\frac{१}{२} = \frac{५ या}{३६ का - ५}$ । पूर्वसिद्धम् १ $= \frac{या}{४ का - १}$ आभ्यां समीकरणेन

या = ४, का = $\frac{५}{४}$ उत्थापनेन ज्याचा $= \frac{४ व्या \cdot चा (प - चा)}{\frac{५}{४} प^२ - चा (प - चा)}$

यतोऽनेन विधिना परिधिदलपरिधिषष्ठांशयोः पूर्णत्वे सूक्ष्मे ज्यामिष्यतः । शून्यचापस्य ज्याऽपि शून्यसमैवागच्छतोऽस्युत्थापनेन स्फुटं तस्मादन्यचापानां ज्या अप्यनेन विधिना स्वल्पान्तरा आगच्छन्ति । एतेन

'चापोननिघ्नपरिधिः प्रथमाह्वयः स्यात्
पञ्चाहतः परिधिवर्गचतुर्थभागः ।
आद्योनितेन खलु तेन भजेच्चतुर्घ्न-
व्यासाहतं प्रथममाप्तमिह ज्यका स्यात्' ॥

इत्युपपन्नम् ॥ २३–२४ ॥

इदानीमिष्टज्यातश्चापानयनमाह ।

**इष्टज्यासङ्गुणिताः पञ्चकयमलैकशून्यचन्द्रमसः ।**
**इष्टज्यापादयुतव्यासार्धविभाजिता लब्धम् ॥ २५ ॥**
**नवतिकृतेः प्रोह्य पदं नवतेः संशोध्य शेषभागकलाः ।**
**एवं धनुरिष्टाया भवति ज्याया विना ज्याभिः ॥ २६ ॥**

इष्टज्याया यः पादश्चतुर्थांशस्तेन युतं व्यासार्धं यद्भवति तेन विभाजिताः । शेषं स्पष्टम् ।

अत्रोपपत्तिः । पूर्वप्रकारेण

$$\text{ज्या} = \frac{(१८० - \text{चा})\,\text{चा}\ \text{त्रि}}{१०१२५ - \frac{(१८० - \text{चा})\,\text{चा}}{४}} = \frac{\text{या}\cdot\text{त्रि}}{१०१२५ - \frac{\text{या}}{४}}$$ । यदि

$\text{या} = (१८० - \text{चा})\,\text{चा}$ ।

अतश्छेदगमेन $\text{ज्या} \times ४०५०० - \text{ज्या}\cdot\text{या} = ४\ \text{त्रि}\cdot\text{या}$

$$\text{ततो या} = \frac{\text{ज्या} \times ४०५००}{\text{ज्या} + ४\,\text{त्रि}} = \frac{१०१२५\ \text{ज्या}}{\text{त्रि} + \frac{\text{ज्या}}{४}} = \text{ल}$$

$= (१८० - \text{चा})\,\text{चा} = १८०\ \text{चा} - \text{चा}^२$

समशोधनेन $\text{चा}^२ - १८०\ \text{चा} + \text{ल} = 0$

$\therefore \text{चा} = ९० \pm \sqrt{९०^२ - \text{ल}}$

आचार्येणाल्प चाप गृहीत तेन चा $= ९० - \sqrt{९०^{२} - ल}$

अत उपपन्न सर्वम् ॥ २५–२६ ॥

इदानीमिष्टग्रहौदयिकात् मध्यात् स्पष्टान् य. करोतीत्यस्योत्तर-माह ।

**इष्टौदयिकभुजान्तरमिनवत् स्फुटमध्यमान्तरकलाभिः ।**
**नाश्विन्यौदयिकेषु स्वचरप्राणैः स्वफलमिनवत् ॥ २७ ॥**

यथा मध्यरव्युदयकालिका ग्रहा भुजान्तरेण स्फुटार्कोदयकालिका नियते क्रियन्ते पुनरर्कचरप्राणैः स्वदेशे स्फुटार्कोदयकालिका क्रियन्ते। एवमिष्टमध्यस्फुटग्रहान्तरकलाभिस्तदुत्यासव इनवदिष्टौदयिकभुजान्तर साध्य तयेनवत स्वचरप्राणैरिष्टग्रहचरासुभिः स्वचालनफल साध्यं ततस्तत्संस्कारेण स्वदेशे स्पष्टेष्टग्रहोदयकाले ग्रहा भवन्तीति गोलयुक्त्या स्फुटम्। यदाश्विन्यौदयिका मेदयकालिका. स्पष्टग्रहा अपेक्षितास्तदा भस्य फलाभावाद्भुजान्तर न भवतीति वेदितव्यम् ।

अत्र चतुर्वेदाचार्येण 'यथाश्विन्यौदयिकास्तच्चरदलकर्म न कर्तव्यमत्राश्विनीग्रहण मेषादिकालिकवदुपलक्षणार्थमन्यथा सर्वासामेव नक्षत्रयोगताराणा स्वचरदलघटिका भिन्नास्तद्भेदात् स्वदेशे तदुदया अपि भिन्ना. सुमस्मादाचार्येण यत् कल्पादौ नात्र सावन प्रवृत्त तस्य चरदलकर्मनिषेध. कृतोऽन्यथाश्विनीयोगताराया युगादावुदयाभाव एव स्यादेवमन्यासा योज्यमिति'। इय व्याख्या भुजान्तर चरकर्मेति कर्मद्वयनिषेधकारिणी सा मम न सम्मता न शब्दस्य भुजान्तरेऽन्वयो गोलयुक्तियुतो बुद्धिमता ज्ञेय इति ॥ २७ ॥

इदानीं स्वोच्चस्फुटयो ग्रह करोतीत्यस्योत्तरमाह ।

**स्वोच्चाद्विशोध्य कृत्वा प्राग्वत् फलमृणधनं विपर्यस्तम् ।**
**कार्यमनष्टस्पष्टे पुनः पुनर्निश्चलो मध्यः ॥ २८ ॥**

स्फुटग्रह स्वोच्चाद्विशोध्य केन्द्र कृत्वा प्राग्वत् फल मान्द शैघ्रं वा साध्यम्। तदनष्टस्पष्टे पृथक्स्थापितस्पष्टग्रहे विपर्यस्तमृणधन कार्यं

षष्टिगुणाद्रविशशिनोर्भुक्त्यन्तरलब्धघटिकाभिः ॥ ३१ ॥

अत्र शशिप्रमाणार्धात् शशिबिम्बार्धात् षष्टिगुणात् शशिभुक्तिहृता ल्लब्धनाड्यादिना नक्षत्रान्तात् प्राक् तन्नक्षत्रप्रवेशः पश्चाच्च निर्गमः । शेषं स्पष्टार्थम् ।

अत्रोपपत्तिः । 'शशितनुविकलाभ्यश्चन्द्रभुक्त्या–'इत्यादिभास्करविधिना स्फुटा ॥ ३१ ॥

इदानीं विशेषमाह ।

**सङ्क्रान्तिस्थो यावत् करोति मिश्रं फलं ग्रहस्तावत् ।**
**यस्मात् तस्माद्विष्टेराद्यन्तौ परिहरति लोकः ॥ ३२ ॥**

यस्माद्यावद्ग्रहः सङ्क्रान्तिस्थस्तावदुभयो राश्योर्बिम्बैकदेशगतत्वा न्मिश्रफलं करोति तस्माल्लोको जनो विष्टेर्भद्राया आद्यन्तौ शुभकर्मणि परिहरति यतस्तावत् तत्प्रवृत्तिरनिष्टाय भवति । आचार्यसमये विष्कम्भादिसप्तविंशतियोगानां प्रचारो नास्तीति प्रतिभाति । स्पष्टाधिकारे योगानयनाभावादिहापि तत्सन्ध्यप्रतिपादनाच्च । आचार्यसमये व्यतिपातवैधृतयोरेव रविचन्द्रक्रान्तिसाम्येन महानिष्टोत्पादकत्वाच्चर्चाऽऽसीदत एवाग्रिमार्याभिस्तत्साधनं वक्ष्यतीति ॥ ३२ ॥

इदानीं यो व्यतिपाताद्यन्ता येतीत्यस्योत्तरं विवक्षुरादौ व्यतिपातलक्षणमाह ।

**चक्रार्धेऽर्कशशियुतौ भिन्नायनयोरपक्रमसमत्वे ।**
**रविशशिनोः समसधुवृतयोगाद्विषदो व्यतीपातः ॥ ३३ ॥**

अर्कशशियुतौ चक्रार्धं राशिषट्कं यदा तदा राशिषट्कासन्ने भिन्नायनयो रविशशिनोरपक्रमसमत्वे समसधुवृतयोगाद्विपदो व्यतीपातो भवति । यथा समसधुवृतयोगेन विषदः पदार्थविशेष उत्पद्यते तथा रविशशिनोः क्रान्तिसाम्येन जगति विपदोऽनिष्टफलदो व्यतीपातो विशेषेणास्मत् शुभफलं पातयति विनाशयतीति योगविशेष उत्पद्यते ॥ ३३ ॥

परहेन्दुक्रान्तिरित्यनेन चन्द्रस्य परमा क्रान्तिरुक्ता तदाऽऽचार्योक्त भास्करस्य शोभनमेव । अत्र चतुर्वेदाचार्यः स्ववासनायां 'मिथुनान्तमस्थेन्दोरवश्यमेव तत्क्रान्तिः परमा भवति' । क्रान्तिः परमा भवतीत्यनेन मिथुनान्तेन चन्द्रायनसन्धिरिति स्फुटम् । यद्यपि तैश्चन्द्रगोलायनसन्धी न साधितौ तथाऽपि तदुपपत्तिस्तद्वचसैव विलिखितास्तीति सिद्धान्तविदां स्फुटमेव ॥ ३६ ॥

इदानीं विशेषमाह ।

व्यतिपातोऽपक्रमयोर्दिक्साम्ये वैधृतो दिगन्यत्वे ।
अधिको न्यूनः कल्प्यो दिग्भेदेऽपक्रमः शशिनः ॥ ३७ ॥

पूर्वार्धं स्पष्टं भास्करलक्षणमेतदनुरूपमेव 'व्यतिपातोऽयनभेदे गोलैक्यत्वे' इत्यादि । अथ यदि शशिनश्चन्द्रस्यापक्रमो दिग्भेदे सूर्यापक्रमाद्यदा चन्द्रस्यानीता क्रान्तिरेव दिग्भेदे शरादेव गृह्यते तदा यदि चन्द्रस्यापमो रवेरपमाच्चूनस्तदा तु न्यून एव परन्तु तदा यदि सोऽपमो रवेरपमादधिकस्तदापि न्यून एव कल्प्यस्तस्य वयत्वादिति ।

अत्रोपपत्तिः । व्यतिपातवैधृतपरिभाषयैव स्फुटा ॥ ३७ ॥

इदानीं पातस्य गतागतमाह ।

मेषतुलाद्यायिन्दोरपक्रमे रव्यपक्रमादूने ।
एष्यत्यधिकोऽतीतो विपरीतः कर्कमकरादौ ॥ ३८ ॥

रव्यपक्रमादिन्दोर्मेषतुलाद्योजपदस्थेऽपक्रमे न्यूने पात एष्यति भविष्यति । अधिके चातीतो व्यतीत इति वेदितव्यम् । कर्कमकराद्ये समपदस्थे विध्वपक्रमे च विपरीतो ज्ञेयः । ऊनेऽतीतोऽधिके भविष्यति ।

अत्रोपपत्तिः । अत्र चन्द्रस्य गोलायनसन्ध्यन्तं यदि पदं गृह्यते तदा गतागतसम्बन्धो गोलयुक्त्या समीचीनो यतस्तदैवौजपदस्थे विध्वपक्रमे न्यूनेऽपि चालनेन रविक्रान्तिसमश्चन्द्रापमो भविष्यति समपदस्थे च एष्यतश्चालनेन रविक्रान्तिसमो भवति । ओजपदेऽपि क्रान्तिरपची-यते समपदे च एष्यत उपचीयत इति गोलयुक्त्या स्फुटम् । अत्र यदा

भास्कर: 'ओजपदेन्दुक्रान्तिर्महती सूर्यापमाल्लघुः समता। यदि भवति तदा ज्ञेयो यातः पातस्तदन्यथा गम्यः-'इति ॥ ३८ ॥

अथ यस्मिन् काले रविशशियोगश्चक्रार्धं वा चक्रं तस्मात् कालाद्गतगम्यस्य क्रान्तिसाम्यकालस्य परिज्ञानमाह।

क्रान्त्योर्युतिरन्यदिशोरेकदिशोरन्तरं व्यतीपाते।
एकदिशोर्युतिरन्तरमन्यदिशोर्वैधृते प्रथमः ॥ ३९ ॥
एवं द्वितीयराशियुतहीनैरिष्टनाडिकास्वफलैः।
एष्यदतीतं वा यदि राशिद्वयमपि तदन्तरकम् ॥ ४० ॥
छेदोऽन्यथा तदैक्यं घातस्येष्टघटिकाप्रथमराश्योः।
फलघटिकाभिर्भक्तं द्वयोरपि प्रथमराशिवशात् ॥ ४१ ॥

द्वयोर्व्यतिपातवैधृतयोः। शेषं स्पष्टम्। 'तत्क्रान्त्योरेकदिशोरन्तरमैक्यं विभिन्नदिशो -'इत्यादि भास्करोक्तमेतदनुरूपमेव।

अत्रोपपत्तिः। पाताधिकारे भास्करोक्त्या ज्ञेया ॥ ३९-४१ ॥

इदानीं पाताद्यन्तकालमाह।

तात्कालिकैर्ग्रहैरसकृदिष्टघटिकाफलोनयुक्तैस्तैः।
प्राग्वत् प्रथमश्छेदः प्रमाणयोगार्धलिप्तानाम् ॥ ४२ ॥
इष्टघटिकागुणानामसकृत् फलनाडिकाभिराद्यन्तौ।
व्यतिपातवैधृतानयनमन्यतन्त्रेषु न ग्राह्यात् ॥ ४३ ॥

प्रथमः साध्यः प्राग्वच्छेदश्चेष्टघटिकागुणानां प्रमाणयोगार्धलिप्तानां मानैक्यार्धकलानाम्। शेषं स्पष्टार्थम्।

अत्रोपपत्तिः। यदा स्पष्टक्रान्त्योः मानैक्यार्धसमं तदा पातादिः पातान्तश्च बिम्बैकदेशजक्रान्त्योः साम्यात्। अतोऽनुपातो यदि छेदसमक्रान्त्यन्तरेणेष्टघटिकास्तदा मानैक्यार्धेन किं लब्धा असकृद्विधिना नाड्यः स्फुटा भवन्तीति ॥ ४२-४३ ॥

इदानीं कियत्कालपर्यन्तं पातफलमित्याह।

रविबिम्बमेकमार्गोच्चशशिबिम्बापक्रमे भवति यावत्।

तावत् फलं तदुक्तं तदभावे तत्फलाभावः ॥ ४४ ॥

एकमार्गादिकाहोरात्राद्यावच्छ्रयपक्रमे रविबिम्बं भवति । यथो-द्यावत् क्रान्त्योर्विवरं मानैक्यार्धादल्पं भवति तावद्बिम्बैकदेशजक्रान्त्योः साम्यात् तत् फलमुक्तं महर्षिभिस्तत्तदभावे तत्फलाभावो वेदितव्य इति । अतो यावत् क्रान्तिसाम्यं तावदेव तस्य फलं वाच्यं तेन यस्मिन् दिने पातस्तत् समग्रं दिनं न दुष्टमिति फलितम् ॥ ४४ ॥

इदानीं कक्षाया विशेषमाह ।

ग्रहकक्ष्यैव तुल्या कक्षा तन्मन्दपातानाम् ।
यस्मात् तस्मान्न पृथक् कक्षा कल्प्या चलोच्चाद्या ॥ ४५ ॥

स्पष्टार्थम् । 'ग्रहस्य कक्षैव हि तुङ्गपातयोः—'इत्यादि भास्करोक्त-मेतदनुरूपमेव ॥ ४५ ॥

इदानीमध्यर्धार्धैकभोगनक्षत्राणामानयनं विवक्षुरादौ तदारम्भे कारणमाह ।

पौलिशरोमकवासिष्ठसौरपैतामहेषु यत् प्रोक्तम् ।
तन्नक्षत्रानयनं नार्यभटोक्तं तदुक्तिरतः ॥ ४६ ॥

पौलिशरोमकवासिष्ठसौरपैतामहेषु पञ्चसिद्धान्तेषु यन्नक्षत्रा-नयनं सूक्ष्मं प्रोक्तं तदार्यभटोक्तं नास्ति । अतस्तदुक्तिरुचिताऽस्ति । तन्न-क्षत्रानयनमारभ्यतेऽहमित्यर्थः ।

अत्र चतुर्वेदाचार्यः । 'पञ्चसिद्धान्तानुसारेण मयैतद्युक्तमार्यं नक्ष-त्रानयनमुपनिबद्ध्यते स्वमनीषिकयेत्यर्थः' ।

इदानीमध्यर्धादीनां संज्ञामाह ।

अध्यर्धानि भवन्ति षड्नक्षत्राण्युडूनि षडर्धानि ।
पञ्चदश समक्षेत्राण्यभिजिद्भागो भवत्येकः ॥ ४७ ॥

षट् नक्षत्राण्यध्यर्धभोगानि सार्धैकभोगानि । षडुडूनि नक्षत्राण्य-र्धान्यर्धभोगानि । पञ्चदश नक्षत्राणि समक्षेत्राण्येकभोगानि । एवं सप्त-विंशतिनक्षत्रेभ्योऽपरश्चैकोऽभिजिद्भागो भवति क्षेत्र इति ॥ ४७ ॥

इदानीमध्यर्धादिभोगानि नक्षत्राण्याह ।

केशादित्यविशाखाप्रोष्ठपदार्यम्णवैश्वदेवानि ।
षट् षड्ज्येष्ठाभरणीस्वात्यार्द्रावारुणाश्लेषाः ॥ ४८ ॥
पञ्चदशात्रानुक्तान्येकोऽभिजिदुक्त ऋक्षभोगोऽन्यः ।
यस्मात् तन्नक्षत्रं दुरधिगमं मन्दबुद्धीनाम् ॥ ४९ ॥

यस्माद्द्विभोगानि नक्षत्राणि सन्ति तस्मात् तन्नक्षत्र तन्नक्षत्रमान मन्दबुद्धीनां गणकानामार्यभटादितन्त्रेष्वनुक्तत्वाद्दुरधिगमं दुर्गममिति । शेषं स्पष्टम् । 'स्थूल कृत भानयन यदेतज्ज्योतिर्विदा संव्यवहारहेतोः—'इत्यादि भास्करोक्तमेतदनुरूपमेव ॥ ४८–४९ ॥

इदानीमध्यर्धादीना मानान्याह ।

अध्यर्धार्धसमक्षेत्राणां मध्यगतिलिप्तिकाः शशिनः ।
अध्यर्धार्धैकगुणा भभोगलिप्तास्तदैक्योनाः ॥ ५० ॥
मण्डललिप्ताः शेषोऽभिजितो भोगः शशाङ्कभगणा वा ।
त्रिघनगुणाः संशोध्याः कल्पदिनेभ्यो यदवशेषम् ॥ ५१ ॥
तद्भगणैर्दिनभोगोऽभिजितो भोगो भभोगलिप्तोनाः ।
भानि ग्रहभुक्तकला गतगम्या गतिहृता दिवसाः ॥ ५२ ॥

शशिनश्चन्द्रस्य मध्यगतिकला अध्यर्धार्धैकगुणास्तदा क्रमेणाध्यर्धार्धसमक्षेत्राणां भभोगलिप्ता भवन्ति । सार्धैकगतिकला अध्यर्धभोगकलाः । अर्धगतिकला अर्धभोगकलाः । गतिकलाश्चैकभोगकलाः । सर्वभोगकलायोगोना मण्डललिप्ताश्चक्रकलाः शेषोऽभिजितो भोगः स्यात् । अथ प्रकारान्तरेणाभिजिद्भोगमाह शशाङ्कभगणा वेति । कल्पचन्द्रभगणाः सप्तविंशत्या गुणाः कल्पदिनेभ्यः कल्पकुदिनेभ्यः संशोध्याः । शेषमभिजितः कल्पभगणाः कल्प्याः । तद्भगणैर्यो दिनभोगः कलात्मिका दिनगतिः स्य तु सोऽभिजितो भोगो भवेत् । अथ नक्षत्रानयनमाह । ग्रहभुक्तकला अश्विन्यादिभभोगलिप्तोना भानि भवन्ति । ग्रहभुक्तकलाभ्यो यावता माना भोगकलाः शुद्धास्तावन्ति गतभानि । शेषाः कलाश्च वर्तमानन

नक्षत्रस्य गतकलास्तास्तद्भोगकलाभ्यः शुद्धा गम्यकला भवन्ति। ततो चन्द्र-गत्यैको दिवसस्तदा गतगम्यकलाभिः किमित्यनुपातेन गतगम्या दिवसा भवन्ति।

अत्रोपपत्तिः। षड्ध्यर्धभोगकलानामैक्यम् $= \frac{३ च ग}{२} \times ६ = ९$ चग

षड्धर्धभोगकलानामैक्यम् $= \frac{चग}{२} \times ६ = ३$ चग

पञ्चदशैकभोगकलानामैक्यम् $= १५$ चग $= १५$ चग

सर्वयोगकला $= २७$ चग

चक्रकलाभ्यः शुद्धा सर्वयोगकला जाता अभिजिद्भोगकलास्तद्भिन्न गति $=$ चक्र $-$ २७ चग। इयं कल्पकुदिनगुणा चक्रकलाभक्ता जाताः कल्पेऽभिजितो भगणा $=$ कक्रु $-$ २७ कचभ। शेषोपपत्तिर्भास्करसूत्त्यनवचायनविधिना स्फुटा॥ ५०–५२॥

इदानीं यैरभिजिद्भोगो नोक्तस्तान् निन्दति।

**भफलं प्रोक्तमभिजितो मङ्गलयात्रासु संहिताकारैः।**
**यैस्तद्भोगो नोक्तस्ते गणकाः संहिताबाह्याः॥ ५३॥**

स्पष्टार्थम्॥ ५३॥

इदानीमार्यभटं दूषयति।

**अध्ययार्धादित्रेत्राणि संहितास्वभिहितानि गर्गाद्यैः।**
**यस्माद्बहूनि तस्मान्नार्यभटोक्तं तदानयनम्॥ ५४॥**

यस्माद्गर्गाद्यैः स्वसंहितास्वध्यर्धार्धसमक्षेत्राण्युडून्यभिहितानि तस्मादिह भूतमनक्षत्रानयनमेव समीचीनमतः आर्यभटोक्तं तदानयनं स्थूलनक्षत्रानयनं न समीचीनमित्यध्याहार्यम्॥ ५४॥

इदानीमध्यायोपसंहारमाह।

**आर्याणां पञ्चाशच्चतुर्भिरधिका चतुर्दशोऽध्यायः।**
**स्फुटगत्युत्तरमन्यान् दिशाऽनयाऽभ्युपगमेत् प्रश्नान्॥ ५५॥**

## इति स्फुटगत्युत्तराध्यायश्चतुर्दशः ॥ १४ ॥

अनया दिशाऽनेन पूर्वप्रतिपादितमार्गेणान्यात् प्रश्नान् गणकोऽभ्युपक्रमेज्जानीयादिति । शेषं स्पष्टार्थम् ॥ ५५ ॥

मधुसूदनसूनुनोदितो यस्तिलकः श्रीपृथुनेह जिष्णुजोक्ते ।
हृदि तं विनिधाय नूतनोऽयं रचितः स्पष्टगतौ सुधाकरेण ॥

इति श्रीकृपालुदत्तसूनुसुधाकरद्विवेदिविरचिते ब्राह्मस्फुटसिद्धान्तनूतनतिलके स्फुटगत्युत्तरो नाम चतुर्दशोऽध्यायः ॥ १४ ॥



# अथ त्रिप्रश्नोत्तराध्यायः ।

---

तत्रादौ दिक्प्रश्नमाह ।

योऽह्नः पूर्वापरयोस्तुल्यच्छायाङ्गुलाग्रयोर्बिन्दू ।
वीक्ष्य क्रान्त्यक्षांशैर्विना दिशो वेत्ति गणकः सः ॥ १ ॥

यो दिवसस्य पूर्वापरकपालयोस्तुल्यच्छायाङ्गुलाग्रयोः । तत्र मीकृतवितिगते वृत्ते पश्चिमकपाले केन्द्रस्थशङ्कोश्छायाग्रं यत्र विशति पूर्वकपाले च यतो निःसरति तौ बिन्दू वीक्ष्य क्रान्त्यक्षांशैर्विना दिशः पूर्वापरादीन् वेत्ति स एव गणक इत्यहं मन्य इति ॥ १ ॥

इदानीमन्यान् प्रश्नानाह ।

त्रिच्छायाग्रज्ञो यः क्रान्त्यक्षार्कैर्विना दिशो भ्रमणम् ।
छायाग्रस्य दिनार्धच्छायां वा वेत्ति गणकः सः ॥ २ ॥

यस्त्रिच्छायाग्रज्ञः क्रान्त्यक्षार्कैर्विना दिशो वेत्ति । छायाग्रस्य भ्रमणं भाभ्रमरेखां वेत्ति । वा दिनार्धच्छायां मध्याह्नच्छायां वेत्ति स एव गणकः । एवमत्र प्रश्नत्रयम् ॥ २ ॥

इदानीमन्यान् प्रश्नानाह ।

यश्छायाग्रं दृष्ट्वा क्रान्त्यक्षज्ञो दिशो विजानाति ।
शङ्कुच्छायाभ्रमणे दिग्ज्ञो वा वेत्ति गणकः सः । ३ ॥

यः क्रान्त्यक्षज्ञश्छायाग्रमेकमेव दृष्ट्वा दिशो विजानाति । वा यो दिग्ज्ञः शङ्कुभ्रमणं वा छायाभ्रमणं वेत्ति स एव गणकः । एवमत्र प्रश्नत्रयम् ॥ ३ ॥

इदानीमन्यान् प्रश्नानाह ।

दृष्ट्वा विषुवच्छायां लम्बाक्षज्ये करोति यो बहुधा ।
मध्यच्छायार्कज्ञोऽक्षांशान् यो वेत्ति गणकः सः ॥ ४ ॥

यो विषुवच्छायां पलभां दृष्ट्वा बहुधा बहुभिः प्रकारैर्लम्बाक्षज्ये करोति । लम्बज्यामक्षज्यां च करोति । एवं यो मध्यच्छायार्कांशाऽक्षांशान् वेत्ति स एव गणकः । एवमत्र प्रश्नत्रयम् ॥ ४ ॥

इदानीमन्यान् प्रश्नानाह ।

**यश्चरखण्डकलङ्कोदयान् विजानाति लग्नमुदयैः स्वैः ।**
**लग्नाद् घटिकाश्छायां गतशेषनतांश्च गणकः सः ॥ ५ ॥**

यश्चरखण्डानि जानाति । लङ्कोदयान् जानाति । स्वोदयैः स्वदेशोदयैर्लग्नं विजानाति । लग्नाद्घटिका इष्टघटिका जानाति । गताद्दिनगताच्छायां जानाति । शेषाद्दिनशेषाच्छायां जानाति । वा नतावतकालाच्छायां विजानाति स एव गणकः । एवमत्र सप्त प्रश्नाः ॥ ५ ॥

इदानीमन्यान् प्रश्नानाह ।

**गतशेषनता घटिकाश्छायातोऽभीष्टदिनदलच्छायाम् ।**
**बहुधा क्रान्त्यर्कांशान् दृष्ट्वा यो वेत्ति गणकः सः ॥६॥**

यः क्रान्त्यंशार्कांशान् दृष्ट्वा बहुधा गतघटिका शेषघटिका नतघटिकाश्च वेत्ति । वा छायात इष्टकालच्छायातो बहुधाऽभीष्टदिनदले छायां वेत्ति स एव गणकः । एवमत्र चत्वारः प्रश्नाः ॥ ६ ॥

इदानीमन्यान् प्रश्नानाह ।

**क्रान्तिज्ञः सममण्डलशङ्कुं कर्णं च योऽवलम्बज्ञः ।**
**जानाति कोणशङ्कुच्छायाघटिकाः स तन्त्रज्ञः ॥ ७ ॥**

यः क्रान्तिज्ञः सममण्डलशङ्कुं जानाति । योऽवलम्बज्ञः सममण्डलकर्णं च जानाति । कोणशङ्कुं कोणशङ्कुच्छायां कोणवृत्तप्रवेशे घटिकाश्च जानाति स एव तन्त्रज्ञः सिद्धान्तज्ञ इति । एवमत्र पञ्च प्रश्नाः ॥ ७ ॥

इदानीमन्यान् प्रश्नानाह ।

**शङ्कुतलप्राच्यपरान्तरमग्रां वीक्ष्य यो विजानाति ।**
**विषुवच्छायामेकं दृष्ट्वाऽऽदित्यं च गणकः सः ॥ ८ ॥**

शङ्कुतलप्राच्यपरान्तर भुजः । यो भुजद्वयं वीक्ष्य विषुवच्छायां पलभां विजानाति । एकमेव भुजं दृष्ट्वा विषुवच्छायामादित्यमर्कं च विजानाति स एव गणक । एवमत्र प्रश्नत्रयम् ॥ ८ ॥

इदानीमन्यान् प्रश्नानाह ।

पातालशङ्कुमुदयेऽस्ते वा दृग्ज्यां रवेर्विजानाति ।
दृक्पातालगशङ्क्वोः पृथक् तले वा स तत्त्वज्ञः ॥ ९ ॥

यो रवेः पातालशङ्कुमधः शङ्कुं विजानाति । उदयेऽस्ते वा यो रवेर्दृग्ज्यामपां विजानाति । दृक्शङ्कुर्दिग्वोर्ध्वशङ्कुः । पातालगशङ्कुर्निशि रवेरधः शङ्कुः । तयोः पृथक् पृथक् तले शङ्कुतले च वा यो विजानाति स एव तत्त्वज्ञ इति । एवमत्र प्रश्नचतुष्टयम् ॥ ९ ॥

इदानीमन्यान् प्रश्नानाह ।

दिनगतशेषप्राणैरिष्टार्को दिनदलाप्तैरथवा ।
भवति सममण्डले यैस्तान् कथयति स तत्त्वज्ञः ॥१०॥

यैर्दिनगतप्राणैर्दिनशेषप्राणैरथवा दिनदलाप्तैः प्राणैरिष्टार्कः सममण्डले भवति प्रविशति तान् प्राणान् यः कथयति स एव तत्त्वज्ञः । एवमत्र प्रश्नत्रयम् ॥ १० ॥

इदानीमन्यान् प्रश्नानाह ।

सममण्डलगः प्राणैर्दिनगतशेषैर्नतैर्दिनार्धाद्वा ।
यैर्भवति ज्ञात्वा तान् योऽर्कं कथयति स तत्त्वज्ञः ॥ ११ ॥

यैर्दिनगतप्राणैः शेषप्राणैर्दिनार्धाद्वा नतैः प्राणैरर्कः सममण्डलगो भवति तान् ज्ञात्वा योऽर्कं कथयति स एव तत्त्वज्ञ इति । एवमत्र प्रश्नत्रयम् ॥ ११ ॥

इदानीमन्यान् प्रश्नानाह ।

यः सममण्डलशङ्कुं कर्णं वा वीक्ष्य सूर्यमानयति ।
रविसममण्डलशङ्कुज्ञोऽग्रां कथयति स तत्त्वज्ञः ॥ १२ ॥

यः समम‌ण्डलशङ्कुं वीक्ष्य सूर्यमानयति । सममण्डलकर्णे वीक्ष्य सूर्यमानयति । अथ वा यो रविं सममण्डलशङ्कुं च ज्ञात्वाऽक्षं कथयति स एव तन्त्रज्ञः । एवमत्र प्रश्नत्रयम् ॥ १२ ॥

इदानीमन्यान् प्रश्नानाह ।

रविलग्नान्तरघटिका विनोदयैर्लग्नमिषुघटिकाभिः ।
वेत्ति चरार्धादक्षं योऽर्कज्ञो वा स तन्त्रज्ञः ॥ १३ ॥

स्वदेशोदयैर्विना यो रविलग्नान्तरघटिका वेत्ति । वा स्वदेशोदयैर्विनेष्टघटिकाभिर्लग्नं वेत्ति । वा योऽर्कज्ञश्चरार्धादक्षं वेत्ति स एव तन्त्रज्ञः । एवमत्र प्रश्नत्रयम् ॥ १३ ॥

इदानीमन्यान् प्रश्नानाह ।

अक्षचरार्धज्ञोऽर्कं छायातो पलभार्धमिष्टायाः ।
इष्टचरार्धादथवा छायां कथयति स तन्त्रज्ञः ॥ १४ ॥

योऽक्षचरार्धज्ञोऽर्कं कथयति । यश्छायातः पलभातं इष्टाया पलभायाश्चरार्धं कथयति । अथवा इष्टचरार्धात छाया विषुवच्छाया कथयति स एव तन्त्रज्ञः । एवमत्र प्रश्नत्रयम् ॥ १४ ॥

इदानीमन्यान् प्रश्नानाह ।

मध्यच्छायातोऽक्षविदानयति रविं दिवाकरज्ञोऽक्षम् ।
योऽग्रार्कज्ञो लम्बाक्षांशान् कथयति स तन्त्रज्ञः ॥ १५ ॥

योऽक्षविदक्षज्ञो मध्यच्छायातो रविमानयति । दिवाकरज्ञश्च मध्यच्छायातोऽक्षमानयति । वा योऽग्रार्कज्ञो लम्बाक्षांशान् कथयति स एव तन्त्रज्ञः । एवमत्र प्रश्नत्रयम् ॥ १५ ॥

इदानीमन्यान् प्रश्नानाह ।

उदयेऽस्तमये चाऽग्रां वेत्ति दिनार्धे नतोन्नतज्ये यः ।
ताभिर्विषुवच्छायाक्षज्यालम्बान् स तन्त्रज्ञः ॥ १६ ॥

य उदये वाऽस्तमयेऽर्के दृष्ट्वाऽग्रां वेत्ति । वा दिनार्धे नतोन्नतज्ये

नतज्यामुन्नतज्यां च वेत्ति । ताभिरानतोन्नतज्याभिर्विषुवच्छायातज्ज्या-नत्याद्यान् यो वेत्ति स एव तन्त्रज्ञः । एवं प्रश्नत्रयमेवाह ॥ १६ ॥

इदानीमन्यान् प्रश्नानाह ।

यश्चरदलं विना स्वे दिनरात्र्यर्धे करोति वा ताभ्याम् ।
अक्षावलम्बकौ वाऽनस्तमयार्कान् स तन्त्रज्ञः ॥ १७ ॥

यश्चरदलं विना स्वे दिनरात्र्यर्धे करोति । वा ताभ्यां दिनरात्र्यर्धाभ्यां योऽक्षावलम्बकौ करोति । वाऽनस्तमयार्कान् सदोदितार्कान् यः करोति स एव तन्त्रज्ञः । एवमत्र प्रश्नत्रयम् ॥ १७ ॥

---

## अथ केषामत्रोत्तराणीत्याह ।

आर्यानवकोक्तानां प्रश्नानामुत्तरं चतुःषष्ट्या ।
आर्याणां प्रश्नोक्त्या शेषप्रश्नोत्तरोक्तिरतः ॥ १८ ॥

आर्यानवकोक्तानां प्रश्नानां 'योऽहः पूर्वापरयोः—' इत्यादीनां 'पृथक् तले वा स तन्त्रज्ञः—' इत्यन्तानामुत्तराणि प्रश्नोक्त्या त्रिप्रश्नाधिकारोक्त्या ऽऽर्याणां चतुःषष्ट्या प्रतिपादितानि । अतोऽत्र शेषप्रश्नोक्तिरुचितेति । त्रिप्रश्नाध्याये षट्षष्टिरार्याः सन्ति । अतोऽत्र 'षट्षष्ट्या' इति पाठः साधुः ॥ १८ ॥

---

## अथैषामुत्तराणि ।

तत्रादौ दिनगतशेषप्राणैरित्यादिप्रश्नत्रयस्योत्तरमाह ।

विषुवच्छायागुणितस्वाहोरात्रार्धभाजिता त्रिज्या ।
क्रान्तिद्वादशगुणिता फलचापकलासुभिः सहितैः ॥ १९ ॥
स्वचरप्राणैर्दिनगतशेषैः सममण्डले रविर्भवति ।
फलचापन्यूनाभिस्तिथिघटिकाभिर्नताभिर्वा ॥ २० ॥

त्रिज्या क्रान्तिद्वादशगुणिता क्रान्तिज्यया द्वादशभिश्च गुणिता । विषुवच्छायागुणितस्वाहोरात्रार्धभाजिता पलभागुणितद्युज्यया हृता ।

फलचापकलासुभिः सहितैः स्वचरप्राणैस्तत्समैर्दिनगतशेषैर्वा फलचापन्यू-नाभिस्तिथिघटिकाभिस्तत्समाभिर्नताभिर्नतघटिकाभी रविः सममण्डले भवति प्रविशतीत्यर्थः ।

अत्रोपपत्तिः । विषुवच्छायया द्वादशकोटिस्तदा क्रान्तिज्यया कि जाता कुज्योना तद्धृतिः $= \frac{\text{१२} \times \text{ज्याक्रा}}{\text{वि}}$ । कुज्ययेयं तदा त्रिज्यया किं जातं सूत्रम् $= \frac{\text{१२} \times \text{ज्याक्रा} \times \text{त्रि}}{\text{वि} \times \text{द्यु}}$ । अस्य चापं चरयुतं सममण्डलप्रवेशे याते वा शेषे उन्नतकालः स्यात् । सूत्रचापोनाः पञ्चदशघटिकाश्च तदैव नतघटिकाः स्युरित्युपपद्यते सर्वमिति ॥ १९–२० ॥

इदानीं सममण्डलगः प्राणैर्दिनगतशेषैरिति प्रश्नद्वयस्योत्तरमाह ।

उदयसममण्डलान्तरघटिकाज्यां लम्बकाहृतां गुणयेत् ।
अक्षज्यया हृताऽन्त्यकान्त्या व्यासार्धसङ्गुणया ॥ २१ ॥
लब्धधनुरिनोऽजादौ कर्क्यादौ यदि विशोध्य चक्रार्धात् ।
तज्ज्या तदुदयसममण्डलान्तरासुज्यया भक्ता ॥ २२ ॥
प्रश्नसममण्डलासुक्रमज्यया सङ्गुणाऽसकृत् सूर्यः ।
प्रश्नघटिकाभिरेवं गतशेषाभिर्भवत्यर्कः ॥ २३ ॥

उदयसममण्डलान्तरघटिका उन्नतकालस्तज्ज्या लम्बकहृतां लम्ब-ज्याहतामक्षज्यया गुणयेत् । गुणनेन या सङ्ख्या भवेत् साऽन्त्यक्रान्त्या जिनज्यया किंविशिष्टया व्यासार्धसङ्गुणया हृता । लब्धस्य धनुरजा-द्याद्ये पदे इनः सूर्यो भवति । यदि कर्क्यादौ द्वितीये पदे प्रश्नस्तदा तद्धनुश्चक्रार्धाद्विशोध्य शेषं रविः स्थूलः स्यात् । तुलादिराशिषट्के सम-मण्डलप्रवेशो न सम्भवत्यतस्तत्र प्रश्न एव खिलः । अथ तज्ज्या स्थूल-रविभुजज्योन्नतकालज्यया भक्ता प्रश्नसममण्डलासुक्रमज्यया गुणिता । स्थूलरवितश्चरज्यादिकं कृत्वा येष्टहृतिः सा प्रश्नसममण्डलासुक्रमज्या कथ्यते । एवं लब्धचापतः पदवशतः सूक्ष्मः सूर्यो भवति । पुनः 'तज्ज्या तदुदयसममण्डलान्तरासुज्यया भक्ते'त्यादिना सूर्यः साध्य एवमसकृत् यह्नो दिवसस्य गतशेषाभिः प्रश्नघटिकाभिः स्थिरीभूतः सूर्यो भवति ।"

अत्रोपपत्ति । त्रिज्याकर्णेऽन्त्यज्या भुजस्तदा सममण्डलशङ्कुकर्णेन को जाता क्रान्तिज्या $= \frac{\text{सश} \times \text{ज्याग्र}}{\text{त्रि}}$ । ततो जिनज्यया त्रिज्याऽर्कभुजज्या तदेष्ट क्रान्तिज्यया किं जाताऽर्कभुजज्या $= \frac{\text{सश} \times \text{ज्याग्र}}{\text{ज्याजि}}$ । शेषवासना सुगमेति ॥२६॥

इदानीं च सममण्डलकर्णौ वीक्ष्य सूर्यमानयतीत्यस्योत्तरमाह ।

**द्वादशगुणिताऽन्त्यज्या विषुवच्छायागुणाऽवलम्बज्या ।**
**सममण्डलकर्णहृते क्रान्तिज्ये भास्करः प्राग्वत् ॥ २७ ॥**

अन्त्यज्या द्वादशगुणिता याऽवलम्बज्या लम्बज्या विषुवच्छाया गुणा । उभे सममण्डलकर्णहृते तदा क्रान्तिज्ये भवतः । ततः प्राग्भुजज्यया भास्करो भवतीति ।

अत्रोपपत्ति । 'त्रिज्यार्कघातः श्रुतिहृच्च स्यात्'—इति भास्करविधिना सममण्डलशङ्कु $= \frac{१२ \times \text{त्रि}}{\text{सक}}$ । ततस्त्रिज्ययाऽन्त्यज्या तदा समशङ्कुकर्णेन का जाता क्रान्तिज्या $= \frac{१२ \times \text{त्रि} \times \text{ज्याग्र}}{\text{त्रि} \times \text{सक}} = \frac{१२ \times \text{ज्याग्र}}{\text{सक}}$

$= \frac{१२ \times \text{ज्याग्र} \times \text{ज्याल}}{\text{ज्याल} \times \text{सक}} = \frac{\text{वि} \times \text{ज्याल}}{\text{सक}}$ अत उपपन्नम् ॥ २७ ॥

इदानीं यो रविसममण्डलशङ्कुस्तोऽपि कथयतीत्यस्योत्तरमाह ।

**परमापक्रमजीवा तात्कालिकसूर्यबाहुसङ्गुणिता ।**
**सममण्डलशङ्कुहृताऽन्त्यज्या तच्चापमन्त्यांशाः ॥ २८ ॥**

परमापक्रमजीवा जिनज्या तात्कालिकसूर्यबाहुसङ्गुणिता तात्कालिकसूर्यभुजज्यया गुणा समशङ्कुभक्ताऽन्त्यज्या भवति । तच्चापमन्त्यांशाः स्युरिति ।

अत्रोपपत्ति । त्रिज्यया जिनज्या तदाऽर्कबाहुज्यया किं जाता क्रान्तिज्या $= \frac{\text{ज्याजि} \times \text{ज्याभु}}{\text{त्रि}}$ । समशङ्कुकर्णेन क्रान्तिज्या भुजस्तदा त्रिज्याकर्णेन किं जाताऽन्त्यज्या $= \frac{\text{ज्याजि} \times \text{ज्याभु}}{\text{सश}}$ । शेषवासना सुगमा ॥ २८ ॥

इदानीमुदयैर्विना यो रविलग्नान्तरघटिका वेत्तीत्यस्योत्तरमाह।

**लङ्कोदयचरदलवद्रविलग्नाभ्यां पृथक् पृथक् प्राणान्।**
**कृत्वा तदन्तरैक्यं मृगकर्क्यादौ पृथग्लिप्ताः ॥ २९ ॥**
**मेषादिषु कर्क्यादिषु शोध्या भार्धात् तुलादिषु सभार्धाः।**
**मकरादिषु संशोध्याश्चक्राद्रविभुक्तलिप्तोनाः ॥ ३० ॥**
**लग्नकला यद्यूनाः सचक्रलिप्ता विना स्वराश्युदयैः।**
**एवं स्फुटा भवन्त्यर्कलग्नयोरन्तरे प्राणाः ॥ ३१ ॥**

भुजज्या परमाल्पद्युज्यया गुण्या स्वद्युज्यया भाज्या फलचापकलाः सम्पाताल्लङ्कोदयासवः स्युरिति। भुजज्या जिनज्यागुणा त्रिज्याभक्ता क्रान्तिज्या भवति। सा पलभागुणा द्वादशहृता कुज्या। कुज्या त्रिज्यागुणा द्युज्याहृता चरज्या। तच्चापकलाश्चरासवः स्युरिति। एवं रविभुजज्यया लग्नभुजज्यया च लङ्कोदयचरदलवत् पृथक् पृथक् प्राणान् लङ्कोदयासून् चरासूंश्च कृत्वा मृगादौ तदन्तरं कर्क्यादौ तु तदैक्यं कृत्वाऽथो रविलग्नयोर्लिप्ताः स्वदेश्युदयासवो मेषादिषु प्रथमे पदे भवन्ति। कर्क्यादिषु द्वितीये पदे तेऽसवो भार्धाच्छोध्यास्तुलादिषु तृतीये पदे सभार्धा मकरादिषु चतुर्थे पदे चक्रात् संशोध्यास्तदा स्वदेश्युदयासवो भवन्ति। ततो लग्नकला लग्नोदयासवो रविभुक्तलिप्तोना रव्युदयासुभिर्हीना यदि न शुध्यन्ति तदा सचक्रलिप्ता लग्नोदयासवो रव्युदयासुभिर्हीनाः शेष स्वराश्युदयैर्विनैवमर्कलग्नयोरन्तरे स्फुटाः प्राणा असवो भवन्ति।

अत्रोपपत्तिः। स्वदेशोदयसाधनविधिना स्फुटा। इह रविरेकः क्रान्तिवृत्तीयप्रदेशो लग्नं चापरस्तयोः स्वदेशोदयासून् मेषादितो गोलचापीयत्रियुक्त्या प्रसाध्य तदन्तरमिष्टासव आनीताः। मृगकर्क्यादौ तदन्तरैक्यमित्याद्येषामना गोलयुक्त्या स्फुटेति ॥ २९ ३१ ॥

स्वोदयैर्विनेष्टघटिकाभिर्या लग्नं वेत्तीत्यस्योत्तरमाह।

**अष्टयमाः शून्यगुणा दिगिषुकलोना रदाः सतिथिलिप्ताः।**
**स्वचरार्धांशैरूना विपरीताः संयुता व्यस्तैः ॥ ३२ ॥**

अत्रोपपत्तिः । त्रिज्याकर्णेऽग्रज्या भुजस्तदा सममण्डलशङ्कुकर्णे को जाता क्रान्तिज्या $= \frac{\text{सश} \times \text{ज्याअ}}{\text{त्रि}}$ । ततो जिनज्यया त्रिज्याऽर्कभुजज्या तदेष्ट क्रान्तिज्यया किं जाताऽर्कभुजज्या $= \frac{\text{सश} \times \text{ज्याअ}}{\text{ज्याजि}}$ । शेषवासना सुगमेति ॥२६॥

इदानीं य सममण्डलकर्णो धीस्य सूर्यमानयतीत्यस्योत्तरमाह ।

**द्वादशगुणिताऽग्रज्या विषुवच्छायागुणाऽवलम्बज्या ।**
**सममण्डलकर्णहृते क्रान्तिज्ये भास्करः प्राग्वत् ॥ २७ ॥**

अग्रज्या द्वादशगुणिता साऽवलम्बज्या लम्बज्या विषुवच्छाया गुणा । उभे सममण्डलकर्णहृते तदा क्रान्तिज्ये भवत । तत प्राग्वद्भुजज्यया भास्करो भवतीति ।

अत्रोपपत्तिः । 'त्रिज्यार्कघात श्रुतिहृच्चर स्यात्'—इति भास्कर विधिना सममण्डलशङ्कु $= \frac{१२ \times \text{त्रि}}{\text{सक}}$ । ततस्त्रिज्ययाऽग्रज्या तदा समशङ्कु कर्णेन का जाता क्रान्तिज्या $= \frac{१२ \times \text{त्रि} \times \text{ज्याअ}}{\text{त्रि} \times \text{सक}} = \frac{१२ \times \text{ज्याअ}}{\text{सक}}$

$= \frac{१२ \times \text{ज्याअ} \times \text{ज्याल}}{\text{ज्याल} \times \text{सक}} = \frac{\text{वि} \times \text{ज्याल}}{\text{सक}}$ अत उपपन्नम् ॥ २७ ॥

इदानीं यो रविसममण्डलशङ्कुतोऽग्र कथयतीत्यस्योत्तरमाह ।

**परमापक्रमजीवा तात्कालिकसूर्यबाहुसङ्गुणिता ।**
**सममण्डलशङ्कुहृताऽग्रज्या तच्चापमग्रांशाः ॥ २८ ॥**

परमापक्रमजीवा जिनज्या तात्कालिकसूर्यबाहुसङ्गुणिता तात्कालिकसूर्यभुजज्यया गुणा समशङ्कुभक्ताऽग्रज्या भवति । तच्चापमग्रांशाः स्युरिति ।

अत्रोपपत्तिः । त्रिज्यया जिनज्या तदाऽर्कबाहुज्यया किं जाता क्रान्तिज्या $= \frac{\text{ज्याजि} \times \text{ज्याभु}}{\text{त्रि}}$ । समशङ्कुकर्णेन क्रान्तिज्या भुजस्तदा त्रिज्याकर्णेन किं जाताऽग्रज्या $= \frac{\text{ज्याजि} \times \text{ज्याभु}}{\text{सश}}$ । शेषवासना सुगमा ॥ २८ ॥

इदानीमुदयैर्विना यो रविलग्नान्तरघटिका वेत्तीत्यस्योत्तरमाह ।

**लङ्कोदयचरदलवद्रविलग्नाभ्यां पृथक् पृथक् प्राणान् ।**
**कृत्वा तदन्तरैक्यं मृगकर्क्याद्यौ पृथग्लिप्ताः ॥ २९ ॥**
**मेषादिषु कर्क्यादिषु शोध्या भार्धात् तुलादिषु सभार्धाः ।**
**मकरादिषु संशोध्याश्चक्राद्रविभुक्तलिप्तोनाः ॥ ३० ॥**
**लग्नकला यद्यूनाः सचक्रलिप्ता विना स्वराश्युदयैः ।**
**एवं स्फुटा भवन्त्यर्कलग्नयोरन्तरे प्राणाः ॥ ३१ ॥**

भुजज्या परमाल्पद्युज्यया गुण्या स्वद्युज्यया भाज्या फलचापकलाः सम्पातात्लङ्कोदयासवः स्युरिति । भुजज्या जिनज्यागुणा त्रिज्याभक्ता क्रान्तिज्या भवति । सा पलभागुणा द्वादशहृता कुज्या । कुज्या त्रिज्यागुणा द्युज्याहृता चरज्या । तच्चापकलाश्चरासवः स्युरिति । एवं रविभुजज्यया लग्नभुजज्यया च लङ्कोदयचरदलवत् पृथक् पृथक् प्राणान् लङ्कोदयासून् चरासूंश्च कृत्वा मृगादौ तदन्तरं कर्क्यादौ तु तदैक्यं कृत्वोभयो रविलग्नयोर्लिप्ताः स्वदेश्युदयासवो मेषादिषु प्रथमे पदे भवन्ति । कर्क्यादिषु द्वितीये पदे तेऽसवो भार्धाच्छोध्यास्तुलादिषु तृतीये पदे सभार्धा मकरादिषु चतुर्थे पदे चक्रात् संशोध्यास्तदा स्वदेश्युदयासवो भवन्ति । ततो लग्नकला लग्नोदयासवो रविभुक्तलिप्तोना रव्युदयासुभिर्हीना यदि न शुध्यन्ति तदा सचक्रलिप्ता लग्नोदयासवो रव्युदयासुभिर्हीनाः शेषं स्वराश्युदयैर्विनैवमर्कलग्नयोरन्तरे स्फुटाः प्राणा असवो भवन्ति ।

अत्रोपपत्तिः । स्वदेशोदयसाधनविधिना स्फुटा । इह रविरेकः क्रान्तिवृत्तीयप्रदेशो लग्नं चापरस्तयोः स्वदेशोदयासून् मेषादितो गोलचापीयक्षेत्रयुक्त्या प्रसाध्य तदन्तरमिष्टासव आनीताः । मृगकर्क्यादौ तदन्तरैक्यमित्यादिवासना गोलयुक्त्या स्फुटेति ॥ २९-३१ ॥

स्वोदयैर्विनेष्टघटिकाभिर्यो लग्नं वेत्तीत्यस्योत्तरमाह ।

**अष्टयमाः शून्यगुणा दिगिषुकलोना रदाः सतिथिलिप्ताः ।**
**स्वचरार्धांशैरूना विपरीताः संयुता व्यस्तैः ॥ ३२ ॥**

व्यस्ताश्चाजादीनां कालांशैर्लग्नमिष्टघटिकांशैः ।
लग्नाद्घटिकाः कालांशकैर्विनैवं स्वराश्युदयैः ॥ ३३ ॥

चन्द्रयमा विकुलोना मेषस्य ध्रुवांशा. २७° । ५०' । शून्यगुणा रणुकलोना वृषस्य २९° । ५५' । रदा. सतिथिनिघ्ना मिथुनस्य ३२° । १५' ध्रुवांशा । एते स्वचराधांशोनास्तथा त एव विपरीता व्यस्तैर्मेषा-दिकराशे सयुतास्तत एत एव व्यस्ता. स्थाप्या । एवमजादीनां द्वाद-शराशीनां स्वदेशे कालांशा स्यु । तत कालांशैरिष्टघटिकांशैश्च लग्नान-यनविधिना लग्न लग्नाच्च कालांशकैरिष्टघटिका भवन्ति । एव स्वरा-श्युदयैर्विनैव लग्नमिष्टघटिकाश्च भवन्तीति ।

अत्रोपपत्ति । ये लङ्कोदयासवस्ते षष्टिहृता अंशात्मकमुदयमानं लङ्कायां प्रसाध्य ध्रुवांशा पठितास्तेभ्यश्चराशे स्वदेशोदया अंशा-त्मका. साधितास्तत. सजातीयेष्टघटिकांशैर्लग्नाद्यानयन सुगममिति । मेषादीनां लङ्कोदयासव मे· १६७० । वृ· १७९४ । मि १९३७ । एते षष्टिभक्ता ध्रुवांशाः २७ । ५० ॥ २९° । ५३' ॥ ३२ । १७ प्राचीनानां मते जीवाखण्डानां स्थूलत्वाद्द्वितीयतृतीयोदयौ १७९५ । १९३५ । अतो ध्रुवांशा आचार्योक्ता एवायान्ति ॥ ३२–३३ ॥

इदानीं योऽर्कज्ञश्चराधांदस वेत्तीत्यस्योत्तरमाह ।

इष्टार्कचरार्धज्या क्षयवृद्धिज्या ग्रुरात्रदलगुणिता ।
व्यासार्धेन विभक्ता क्षितिजा द्वादशगुणा भक्ता ॥ ३४ ॥
क्रान्त्या विषुवच्छाया क्षितिजेष्टक्रान्तिवर्गयोगपदम् ।
श्रमा क्षितिजापक्रमजीवे त्रिज्यागुणे भक्ते ॥ ३५ ॥
अर्कोऽग्रयाऽवलम्बकजीवे दिनकृच्चरासुविज्ञाने ।

इष्टार्कस्य चरार्धज्या सैव क्षयवृद्धिज्या च कथ्यते । सा चरज्या कुज्यया गुणा व्यासार्धेन विभक्ता क्षितिजा कुज्या भवति । सा द्वादश-गुणा क्रान्त्या क्रान्तिज्यया भक्ता विषुवच्छाया पलभा भवति । क्षितिजायाः कुज्याया इष्टक्रान्तेरिष्टक्रान्तिज्यायाश्च वर्गयोगपदमग्रा भवति । कुज्या

क्रान्तिजीवे त्रिज्यागुणे अक्षभया पूर्वानीतया भक्ते फले क्रमेण दिनक्षयार्धासुविज्ञानेऽक्षज्यालम्बज्ये भवतः ।

अत्रोपपत्तिः । अक्षक्षेत्रानुपातेन स्फुटा ॥ ३४-३५ ॥

इदानीं योऽक्षचराधंज्ञोऽर्कं कथयतीत्यस्योत्तरमाह ।

**अर्काज्ञाने ज्ञाने विषुवच्छायाचरासूनाम् ॥ ३६ ॥**
**इष्टचरार्धस्य ज्या क्षयवृद्धिज्या तदर्कवधकृत्या ।**
**त्रिज्याविषुवच्छायावधवर्गो युतहृतश्छेदः ॥ ३७ ॥**
**व्यासार्धकृतेर्मूलं क्रान्तिज्या व्यासदलगुणा भक्ता ।**
**जिनभागजीवया लब्धचापमर्कः पदैः प्राग्वत् ॥ ३८ ॥**

इष्टपलभाचरासूनां ज्ञानेऽर्काज्ञाने वक्ष्यमाणः प्रकारो ज्ञेयः । इष्टचरार्धस्य ज्या क्षयवृद्धिज्या भवतीति पूर्वमेव प्रतिपादितम् । तस्याश्चरार्धस्य ज्या क्षयवृद्धिज्या अर्काणां द्वादशानां च या वधकृतिस्तया त्रिज्यापलभयोर्वधवर्गो युतो हृतश्च व्यासार्धकृतेस्त्रिज्यावर्गस्य छेदो हरो भवति । तेन त्रिज्याकृतिर्हृता या लब्धिस्तस्या मूलं क्रान्तिज्या स्यात् । सा व्यासदलगुणा जिनभागजीवया भक्ता फलचापं पदैः प्राग्वदर्को भवति ।

अत्रोपपत्तिः । क्षितिजेऽयाचापांशाः कर्णः । अक्षध्रुवप्रोते क्रान्तिः कोटिः । नाडीवलये चरांशा भुजः । कोटिसम्मुखकोणो लम्बांशाः । तत्स्थिरसक्षावयवविद्धान्तेन ।

$$\text{त्रि} \times \text{ज्याच} = \frac{\text{त्रि} \times \text{ज्याक्रा}}{\text{द्यु}} \times \frac{\text{त्रि} \times \text{ज्याअ}}{\text{ज्याल}} = \text{स्पक्रा} \times \text{त्रि} \times \text{वि} \div १२$$

$$\text{अतः} \;\; \text{स्पक्रा} = \frac{१२ \times \text{ज्याच}}{\text{वि}} \;।$$

$$\text{त्रि}^{२} + \text{स्प}^{२}\text{क्रा} = \text{छे}^{२}\text{क्रा} = \frac{\text{त्रि}^{२} \times \text{वि}^{२} + १२^{२} \times \text{ज्या}^{२}\text{च}}{\text{वि}^{२}}$$

$$\text{अतः} \;\; \text{ज्या}^{२}\text{क्रा} = \frac{\text{त्रि}^{२} \times \text{स्प}^{२}\text{क्रा}}{\text{छे}^{२}\text{क्रा}} = \frac{१२^{२}\,\text{ज्या}^{२}\text{च} \times \text{त्रि}^{२}}{\text{त्रि}^{२} \times \text{वि}^{२} + १२^{२} \times \text{ज्या}^{२}\text{च}} \cdots (१)$$

$$= \frac{\text{त्रि}^{२}}{\dfrac{\text{त्रि}^{२} \times \text{वि}^{२} + १२^{२} \times \text{ज्या}^{२}\text{च}}{१२^{२} \times \text{ज्या}^{२}\text{च}}}$$ । अत उपपन्नं मूलोक्तम् ।

अथ (१) अस्मिन् भाज्यहारौ त्रिज्यावर्गेणापवर्त्य

$$ज्या^2 क्रा = \frac{१२^2 \times ज्या^2 च}{वि^2 + \frac{१२^2 \times ज्या^2 च}{त्रि^2}} \text{ । } \therefore ज्या क्रा = \frac{१२ \times ज्या च}{\sqrt{वि^2 + \frac{१२^2 \times ज्या^2 च}{त्रि^2}}} \text{ ।}$$

अनेन 'चरज्यकार्काभिहतिस्त्रिमौर्व्या भक्ता'–इत्यादिभास्करोक्तमाचार्योक्तानुरूपमुपपद्यते ॥ ३५½ – ३८ ।

इदानीं छायातो यच्चरार्धमिष्टायाः कथयतीत्यस्योत्तरमाह ।

**विषुवच्छायाभक्ता स्वचरार्धज्येष्टयाऽन्यया गुणिता ।**
**लब्धस्य चापमिष्टच्छायायाश्चरदलप्राणाः ॥ ३९ ॥**

स्वदेशीयचरज्यान्यदेष्टदेशीयपलभया गुणिता विषुवच्छायाभक्ता स्वदेशीयपलभया भक्ता लब्धस्य चापमिष्टच्छायाया इष्टपलभायाश्चरदलप्राणाश्चरासवो भवन्तीति ।

अत्रोपपत्तिः । यदि द्वयोर्देशयोः पलभे $वि_1$, $वि_2$ कल्प्येते तथैकक्रान्तौ द्वयोर्देशयोश्चरे $च_1$, $च_2$ । तदा गोलयुक्त्या

$$ज्या च_1 = \frac{वि_1 \times ज्या क्रा}{१२} \times \frac{त्रि}{द्यु} \text{ ।}$$

$$ज्या च_2 = \frac{वि_2 \times ज्या क्रा}{१२} \times \frac{त्रि}{द्यु}$$

अतः $\frac{ज्या च_1}{ज्या च_2} = \frac{वि_1}{वि_2}$ । ततः $ज्या च_2 = \frac{वि_2 \times ज्या च_1}{वि_1}$ ।

अत उपपद्यते यथोक्तम् ॥ ३९ ॥

इदानीं च इष्टचरार्धवशाच्छाया कथयतीत्यस्योत्तरमाह ।

**स्वचरार्धज्याभक्ता विषुवच्छायेष्टचरदलासूनाम् ।**
**गुणिता ज्ययेष्टचरदलविषुवच्छायाफलं भवति ॥ ४० ॥**

विषुवच्छाया स्वचरार्धज्याभक्ता इष्टचरदलासूनां ज्यया गुणिता फलमिष्टचरदलसम्बन्धिनी विषुवच्छाया भवति ।

अत्रोपपत्तिः । पूर्वप्रकारवैपरीत्येन स्फुटा ॥ ४० ॥

इदानीं यो मध्यच्छायातोऽक्षविदर्कमानयति दिवाकरज्ञोऽक्षमानयतीति प्रश्नद्वयोत्तरमाह ।

**मध्यच्छायाग्रमुदक् शङ्कुतलाद्दक्षिणा नता भागाः ।**
**दक्षिणतो यदि सौम्याः स्वाक्षांशाः सर्वदा याम्याः ॥४१॥**
**द्युदलनताक्षांशानामेकदिशामन्तरं युतिर्भेदे ।**
***क्रान्त्यंशाः प्राग्वदतः क्रान्त्यंशैरेवमक्षांशाः ॥ ४२ ॥***

मध्यच्छायाग्रं शङ्कुतलाच्छङ्कुमूलादुदक् तदा दिनार्धीया नता भागा दक्षिणा वेद्याः । यदि छायाग्रं दक्षिणतस्तदा नतभागाः सौम्या उत्तरा ज्ञेयाः । स्वाक्षांशाश्च सर्वदा याम्या एव ज्ञेयाः । अथ मध्यच्छायातो मध्यच्छायाकर्णं प्रसाध्य । तत्कर्णेन मध्यच्छाया भुजस्तदा त्रिज्यया किमित्यनुपातेन रविदृग्ज्यामानीय तच्चापांशा नतभागा ज्ञेयाः । द्युदले नतभागानामक्षांशानां चैकदिशामन्तरं भेदे दिग्भेदे युतिः क्रान्त्यंशा भवन्ति । अतः प्राग्वदर्कः साध्यः । एवं क्रान्त्यंशैर्मध्यनतांशैश्च संस्कारेणाक्षांशा भवन्ति ।

अत्रोपपत्तिः । 'दिनार्धद्युतेस्त्रिज्यकाघ्न्या हृतायाः स्वकर्णेन'-इत्यादिभास्करविधिना स्फुटा ॥ ४१–४२ ॥

इदानीं योऽयार्कज्ञो लम्बाक्षांशात् कथयतीत्यस्योत्तरमाह ।

**उदयज्येष्टापमजीवाकृत्यन्तरात् पदं क्षितिजा ।**
**व्यासार्धगुणा क्षितिजा भक्तोदयजीवयाऽक्षज्या ॥ ४३ ॥**
**उदयज्यया विभक्ता क्रान्तिज्या व्यासदलगुणा लम्बः ।**
**द्वादशगुणिता क्षितिजा विषुवच्छायाहृता क्रान्तिः ॥४४॥**

उदयज्याया अग्राया इष्टक्रान्तिजीवायाश्च वर्गान्तरात् पदं मूलं क्षितिजा कुज्या भवति । सा क्षितिजा व्यासार्धगुणाऽग्रया भक्ताऽक्षज्या स्यात् । क्रान्तिज्या च व्यासदलगुणा अग्रया विभक्ता लम्बो लम्बज्या भवेत् । एवं कुज्या द्वादशगुणा विषुवच्छायाहृता फलं क्रान्तिः क्रान्तिज्या भवतीति ।

विषुवच्छाया भवति । त्रिज्या स्थानद्वये स्थाप्या । एकत्र शङ्कुतलगुणाऽन्यत्र शङ्कुना गुणिता । उभयत्र तयोः शङ्कुतलशङ्क्वोर्वर्गयुतिपदेन हृत्वा विभक्ता फले क्रमेणार्कं वृत्तस्थेऽवज्यालम्बज्ये भवतः । वृत्तादन्यदाऽन्यस्मिन् काले इत्यस्याये सम्बन्धः ।

अत्रोपपत्तिः । गोलयुक्त्या शङ्कुतल-भुजादिसंस्थानेन शङ्कुतलं भुजः शङ्कुः कोटिर्द्युतिः कर्ण इत्यवलोकनेनानुपातेन च स्फुटा ॥ ४६–४८ ॥

इदानीं वृत्तादन्यदा पलभासाधनार्थमाह ।

**छायावृत्तेऽक्राग्रा कर्णगुणा व्यासदलहृताऽक्राग्रा ।**
**प्राच्यपरा शङ्कुतलमुत्तरयाम्यं तदूनयुता ॥ ४९ ॥**
**उत्तरगोले याम्ये विषुवच्छायाऽग्रयाऽन्तरं हीनम् ।**
**एवं विषुवच्छाया युक्तविहीनाऽन्तरेणाग्रा ॥ ५० ॥**

प्रथमार्यायाः पूर्वार्धं त्रिप्रश्नाध्यायस्य चतुर्थार्यापूर्वार्धसमं व्याख्यातमेव । अन्यत् सर्वं च त्रिप्रश्नाध्यायस्य ५८–६० आर्याभिः स्फुटम् ॥ ४९–५० ॥

इदानीं क्रान्तिज्यादीनां संस्थानमाह ।

**बाहुः क्रान्तिः कोटिः क्षितिजा तद्वर्गयुतिपदं कर्णः ।**
**अग्रोदयास्तसूत्राद्दक्षिणतो दृश्यशङ्कुतलम् ॥ ५१ ॥**

क्रान्तिः क्रान्तिज्या भुजः । कुज्या कोटिः । तद्वर्गयुतिपदमग्रा कर्ण इत्यवलोकनम् । भास्करेण क्रान्तिज्या कोटिः कुज्या भुज इति कथितं तत्र न कश्चिद्विशेषो भुजकोट्योः संस्थानभेदाभावात् । दृश्यशङ्कुतलं दिवाशङ्कुतलमुदयास्तसूत्राद्दक्षिणतो भवति ।

अत्रोपपत्तिः । अवलोकनसंस्थानेन 'सूत्राद्दिवा शङ्कुतलं यमाशम्'–इत्यादिभास्करविधिना स्फुटा ॥ ५१ ॥

इदानीं पलचरदलं विना दिनरात्र्यर्धं करोतीत्यस्योत्तरमाह ।

**त्रिज्याचयवृद्धिज्यैक्यान्तरमुत्क्रमगिरयोर्दिनार्धोन्त्या ।**
**व्यासार्धचरार्धज्यान्तरसंयोगोऽधरात्र्यन्त्या ॥ ५२ ॥**

उत्क्रमजीवाचापं क्रमजीवाचापसहितमधिकं चेत् ।
दिनरात्र्यर्धप्राणाः पृथग्विना चरदलप्राणैः ॥ ५३ ॥

उदगितरयोरुत्तरदक्षिणगोलयोस्त्रिज्यायाः तयश्द्युज्यायाश्चरज्यायाश्चैक्यमन्तरं च दिनार्धेऽन्त्या स्यात् । एवमुदग्दक्षिणगोलयोस्त्रिज्यायाश्चरज्यायाश्चान्तरसंयोगे रात्र्यर्धेऽन्त्या स्यात् । द्वयोरन्त्ययोरुत्क्रमचापं पृथक् पृथक् चरदलप्राणैर्विना दिनरात्र्यर्धप्राणा भवन्ति । चेत् त्रिज्यातोऽधिकमुत्क्रमज्यामानं भवेत् तदा यदधिकं तत्क्रमचापेन त्रिज्याचापं ( खखवेदबाणमितः ५४०० ) सहितं कार्यमेवमुत्क्रमचापमानं तदा ज्ञेयमिति ।

अत्रोपपत्तिः । अन्त्यासस्थानेन स्फुटा त्रिज्याधिकोत्क्रमज्याचापज्योत्पत्त्या स्फुटमिति । एवं चरज्याज्ञानतो दिनरात्रिप्रमाणानयनमिह मन्दावबोधकरम् । वस्तुतश्चरज्याज्ञाने सत्क्रमचापतश्चरासवो लाघवेन विदिता भवन्ति तेभ्यो दिनरात्र्यर्धमाने च सुखेन भवत इति सुधीभिश्चिन्त्यम् ॥ ५२–५३ ॥

इदानीं ताभ्यामहावलम्बकौ यः करोतीत्यस्योत्तरमाह ।

दिवसार्धोत्क्रमजीवाधिकक्रमज्याऽधिका दिनार्धान्त्या ।
व्यासार्धदिनार्धान्त्यान्तरं चरज्याऽन्त्यजीवाऽतः ॥ ५४ ॥

दिवसार्धोत्क्रमजीवा दिनार्धान्त्या भवति । यदा दिवसार्धं खखाब्धिबाणासुतोऽधिकं तदा यदधिकं तत्क्रमज्यया त्रिज्याऽधिका कार्या । एवं दिनार्धान्त्या स्यात् । व्यासार्धस्य त्रिज्याया दिनार्धान्त्यायाश्चान्तरं चरज्या भवति । अतश्चरज्याया पूर्वोक्तेन विधिनाऽन्त्यज्या साध्या । अथ कंज्ञानेन चरज्यातोऽन्त्यज्याज्ञानं भवतीति ज्ञेयम् ।

अत्रोपपत्तिः । अन्त्यासस्थानेनैव स्फुटा ॥ ५४ ॥

इदानीं योऽनन्तमयाक्रान् करोतीत्यस्योत्तरमाह ।

स्वाहोरात्रार्धसमा यत्राद्युज्यावलम्बकः क्रान्त्या ।
मेषादिगस्य तावद्यावत् कर्कादिगस्य रवेः ॥ ५५ ॥

**नास्तमयस्तत्र तुलामकरादिस्थस्य नोदयोऽर्कस्य ।**
**तन्मध्यान्तरलिप्ता मध्यमभुक्त्या हृता दिवसाः ॥५६॥**

मेषादिगस्य मेषादिराशित्रयस्थस्य रवेर्यत्र यस्मिन् प्रदेशेऽक्षज्या स्वाहोरात्रार्धसमा स्वद्युज्यासमा । अत्र लम्बको लम्बज्या च क्रान्त्या क्रान्तिज्यया समः । पुनः कर्क्यादिगस्य रवेर्द्युज्यासमाऽक्षज्या क्रान्तिज्यासमा लम्बज्या च यावत् तावत् तत्र देशेऽर्कस्य नास्तमयः । एवं तुलामकरादिस्थस्य रवेर्द्युज्यासमाऽक्षज्या क्रान्तिज्यासमा लम्बज्या यावत् तावत् तत्र देशेऽर्कस्य नोदयः । यदा मेषादिगस्य रवेः क्रान्तिज्यासमा लम्बज्या जाता तदा यो मध्यमरविस्तथा कर्क्यादिगस्य रवेः क्रान्तिज्यासमा यदा लम्बज्या तदा यो मध्यमरविस्तन्मध्ययोरन्तरे या लिप्तास्ता रविमध्यमगत्या हृता दिवसा भवन्ति । तावत् कालपर्यन्तमुत्तरक्रान्तेर्लम्बाधिकत्वात् तत्रार्कस्यानस्तमयः । दक्षिणक्रान्तेर्लम्बाधिकत्वात् तावत् तत्र रवेरनुदय इति ।

अत्रोपपत्तिः । 'लम्बाधिका क्रान्तिरुदक् च यावत् तावद्दिनं सन्ततमेव तत्र'–इत्यादिभास्करविधिना स्फुटा ॥ ५५–५६ ॥

इदानीं कोणच्छायातोऽर्कानयनमाह ।

**कोणच्छायाकृतिदलपदविषुवच्छाययोरुदगूनतलम् ।**
**प्राच्यपराया यद्यैक्यमन्तरं याम्यदिक्स्थं चेत् ॥ ५७ ॥**
**कोणच्छायाकर्णेन भक्तमवलम्बकेन सङ्गुणितम् ।**
**इष्टापक्रमजीवा त्रिप्रश्नोक्त्या स्फुटोऽर्कोऽतः ॥ ५८ ॥**

कोणवृत्तस्थे रवौ या द्वादशाङ्गुलशङ्कुच्छाया सा कोणच्छाया । तद्वर्गार्धस्य यत् पदं तच्छङ्कुमूलप्राच्यपररेखान्तरं भुजो भवति कोणवृत्तस्थे रवौ भुजकोट्योस्तुल्यत्वात् । यदि प्राच्यपराया रेखाया उदक् नृतलं शङ्कुमूलं भवेत् तदा भुजविषुवच्छाययोरैक्यं चेद्याम्यदिक्स्थं शङ्कुमूलं तदा तयोरन्तरं कर्णवृत्ताग्रा भवति । तदैक्यमन्तरं वा लम्बकेन लम्बज्यया सङ्गुणितं कोणच्छायाकर्णेन भक्तमिष्टापक्रमजीवा भवति । अतस्त्रिप्रश्नोक्त्या स्फुटोऽर्कः साध्यः ।

अत्रोपपत्तिः । कर्णवृत्ताग्राज्ञानं व्याख्यातं स्फुटम् । कर्णवृत्ताग्रा त्रिज्यागुणा छायाकर्णेन भक्ता ऽग्रा स्यात् । सा लम्बज्यागुणा त्रिज्याभक्ता क्रान्तिज्या स्यादिदमत्र त्रिज्यातुल्ययोर्गुणहरयोस्तुल्यत्वान्नाशे कृते वासनोक्तमुपपद्यते ॥ ५७-५८ ॥

इदानीमात्मप्रशंसामाह ।

**मध्यगतिस्पष्टगतित्रिप्रश्नान् सोत्तरान् विजानाति ।**
**स भवत्याचार्यो वै ब्रह्मोक्तान् योऽन्यतन्त्रज्ञः ॥ ५९ ॥**

योऽन्यतन्त्रज्ञ आर्यभटादितन्त्रज्ञो गणको ब्रह्मोक्तान् सोत्तरान् मध्यगति-स्पष्टगति-त्रिप्रश्नान् विजानाति विशेषेण जानाति । स वै निश्चयेन गणितस्कन्धे वाचार्यो भवतीति ॥ ५९ ॥

इदानीमध्यायोपसंहारमाह ।

**अध्यायः पञ्चदशस्त्रिप्रश्नस्योत्तरं यदिह नोक्तम् ।**
**तच्चार्यापञ्चाऽयं गोलादुत्प्रेक्ष्य बुद्धिमता ॥ ६० ॥**

**इति श्रीब्राह्मस्फुटसिद्धान्ते त्रिप्रश्नोत्तराध्यायः पञ्चदशः ॥ १५ ॥**

त्रिप्रश्नस्योत्तरं नामायं पञ्चदशोऽध्यायः आर्यापञ्चाशता मया कृत इति । इहास्मिन्नध्याये यत् किञ्चिन्मया नोक्तं बुद्धिमता गोलात् तदुत्प्रेक्ष्य ज्ञेयम् । गोलयुक्त्यात्मिका कल्पना कृत्वा तत् सर्वं बोध्यं यतो गोलबोध इदमेव फलं यदनुक्तमपि बुद्धिमता ज्ञायत इति ।

मधुसूदनसूनुनोदितो यस्तिलकः श्रीपृथुनेह जिष्णुजोक्ते ।
हृदि तं विनिधाय नूतनोऽयं रचितः प्रश्नविधौ सुधाकरेण ॥

इति श्रीकृपालुदत्तसुतसुधाकरद्विवेदिविरचिते ब्राह्मस्फुटसिद्धान्तनूतनतिलके त्रिप्रश्नोत्तराध्यायः पञ्चदशः ॥ १५ ॥



# अथ ग्रहणोत्तराध्यायः ।

तत्रादौ तदारम्भप्रयोजनमाह ।

ग्रहणग्रहसंयोगग्रहर्क्षतन्त्रेषु सर्वविदाम् ।
आचार्यश्छेद्यकविद्यतस्ततश्छेद्यकं वक्ष्ये ॥ १ ॥

यतो ग्रहण-ग्रहसंयोग-ग्रहर्क्षतन्त्रेषु सर्वविदां मध्ये छेद्यकविदाचार्यो भवति ततस्तस्माच्छेद्यकं वक्ष्ये । स्वयं छेदयतीति छेद्यकः । येन क्षेत्ररचनया ग्रहणादिकं प्रदर्श्यते स छेद्यक इति ॥ १ ॥

इदानीं छेद्यकदानार्थमपात्रानाह ।

दुर्जनकृतघ्नशत्रुप्रतिकञ्चुककारिपलितमूर्खेभ्यः ।
छेद्यकमदेयमेभ्यो ददतः सुकृतायुषोर्नाशः ॥ २ ॥

प्रतिकञ्चुककारी पिशुनः । शेषं स्पष्टम् ॥ २ ॥

इदानीं छेद्यकदानार्थं पात्रानाह ।

उषिताय दीर्घकालं शिष्याय गुणाधिकाय भक्ताय ।
पात्रे वा सुहृदे वा सुताय वा छेद्यकं देयम् ॥ ३ ॥

स्पष्टार्थम् ॥ ३ ॥

इदानीं प्रश्नानाह ।

विषुवदपमण्डलदिशो वलनज्याभिस्त्रिग्रहवृत्ते ।
सम्पर्कं ग्रासं वा यो वेत्ति च्छेद्यकज्ञः सः ॥ ४ ॥

यो वलनज्याभिस्त्रिग्रहवृत्ते ग्रहबिम्बवृत्ते विषुवद्वृत्तस्य क्रान्तिवृत्तस्य च दिशो वेत्ति । वा सम्पर्कं छाद्यच्छादकयुतौ ग्रासं वेत्ति स एव छेद्यकज्ञ इति । एवमत्र प्रश्नद्वयम् ॥ ४ ॥

इदानीमन्यान् प्रश्नानाह ।

सम्पर्कमण्डले यः प्रग्रहमोक्षौ पृथक् स्वविक्षेपात् ।
मध्यान्मध्यग्रासं परिलिखति च्छेद्यकज्ञः सः ॥ ५ ॥

अत्रोपपत्तिः । कर्णवृत्ताग्रातो व्यासार्धतः स्फुटम् । कर्णवृत्ताग्रा त्रिज्यागुणा छायाकर्णेन भक्ता स्यात् । सा लम्बज्यागुणा त्रिज्याभक्ता क्रान्तिज्या स्यादेवमत्र त्रिज्यातुल्ययोर्गुणहरयोस्तुल्यत्वान्नाशे कृते चाचार्योक्तमुपपद्यते ॥ ५७-५८ ॥

इदानीमात्मप्रशंसामाह ।

**मध्यगतिस्पष्टगतित्रिप्रश्नान् सोत्तरान् विजानाति ।**
**स भवत्याचार्यो वै ब्रह्मोक्तान् योऽन्यतन्त्रज्ञः ॥ ५९ ॥**

योऽन्यतन्त्रज्ञ आर्यभटादितन्त्रज्ञो गणको ब्रह्मोक्तान् सोत्तरान् मध्यगति-स्पष्टगति-त्रिप्रश्नान् विजानाति विशेषेण जानाति । स वै निश्चयेन गणितस्कन्धे चाचार्यो भवतीति ॥ ५९ ॥

इदानीमध्यायोपसंहारमाह ।

**अध्यायः पञ्चदशस्त्रिप्रश्नस्योत्तरं यदिह नोक्तम् ।**
**तच्चार्याषष्ट्याऽयं गोलादुत्प्रेक्ष्य बुद्धिमता ॥ ६० ॥**

**इति श्रीब्राह्मस्फुटसिद्धान्ते त्रिप्रश्नोत्तराध्यायः**
**पञ्चदशः ॥ १५ ॥**

त्रिप्रश्नस्योत्तर नामायं पञ्चदशोऽध्याय आर्याषष्ट्या मया कृत इति । इहास्मिन्नध्याये यत् किञ्चिन्मया नोक्तं बुद्धिमता गोलात् तदुत्प्रेक्ष्य ज्ञेयम् । गोलयुक्त्योक्तैव कल्पना कृत्वा तत सर्वं बोध्य यतो गोलबोध इदमेव फलं यदनुक्तमपि बुद्धिमता ज्ञायत इति ।

मधुसूदनसूनुनोदितो यस्तिलकः श्रीपृथुनेह जिष्णुजोक्ते ।
हृदि तं विनिधाय नूतनोऽयं रचितः प्रश्नविधौ सुधाकरेण ॥

इति श्रीकृपालुदत्तसुतसुधाकरद्विवेदिविरचिते ब्राह्मस्फुटसिद्धान्त-
नूतनतिलके त्रिप्रश्नोत्तराध्यायः पञ्चदशः ॥ १५ ॥



# अथ ग्रहणोत्तराध्यायः ।

तत्रादौ तदारम्भप्रयोजनमाह ।

ग्रहणग्रहसंयोगग्रहच्छन्नतन्त्रेषु सर्वविदाम् ।
आचार्यश्छेद्यकविद् यतस्ततश्छेद्यकं वक्ष्ये ॥ १ ॥

यतो ग्रहण–ग्रहसंयोग–ग्रहच्छन्नतन्त्रेषु सर्वविदां मध्ये छेद्यकविदाचार्यो भवति ततस्तस्माच्छेद्यकं वक्ष्ये । सम्यक् छेदयतीति छेद्यकः । येन लेखरचनया ग्रहणादिकं प्रदर्श्यते स छेद्यक इति ॥ १ ॥

इदानीं छेद्यकदानार्थमपात्रानाह ।

दुर्जनकृतघ्नशत्रुप्रतिकञ्चुककारिपतितमूर्खेभ्यः ।
छेद्यकमदेयमेभ्यो ददतः सुकृतायुषोर्नाशः ॥ २ ॥

प्रतिकञ्चुककारी पिशुनः । शेषं स्पष्टम् ॥ २ ॥

इदानीं छेद्यकदानार्थं पात्रानाह ।

उषिताय दीर्घकालं शिष्याय गुणाधिकाय भक्ताय ।
पात्रे वा सुहृदे वा सुताय वा छेद्यकं देयम् ॥ ३ ॥

स्पष्टार्थम् ॥ ३ ॥

इदानीं प्रश्नानाह ।

विषुवदपमण्डलदिशो वलनज्याभिस्त्रिगृहवृत्ते ।
सम्पर्कं ग्रासं वा यो वेत्ति च्छेद्यकज्ञः सः ॥ ४ ॥

यो वलनज्याभिस्त्रिगृहवृत्ते ग्रहत्रिज्यावृत्ते विषुवद्वृत्तस्य क्रान्तिवृत्तस्य च दिशो वेत्ति । वा सम्पर्कं छाद्यच्छादकयुतौ ग्रासं वेत्ति स एव छेद्यकज्ञ इति । एवमत्र प्रश्नार्थः ॥ ४ ॥

इदानीमन्यान् प्रश्नानाह ।

सम्पर्कमण्डले यः प्रग्रहमोक्षौ पृथक् स्वविक्षेपात् ।
मध्यान्मध्यग्रासं परिलिखति च्छेद्यकज्ञः सः ॥ ५ ॥

य. सम्यक्समण्डले मानैक्यार्धमण्डले स्वस्वविक्षेपात पृथक् पृथक् प्रग्रहमोक्षौ स्पर्शमोक्षौ परिलिखति । मध्यात् मध्यकालिकाद्विक्षेपाच्च मध्यग्रास परिलिखति स एव छेद्यकज्ञ । एवमत्र प्रश्नत्रयम् ॥ ५ ॥

इदानीमन्यान् प्रश्नानाह ।

परिलिखतीष्टग्रासं तात्कालिकबाहुकोटिकर्णैर्यः ।
अथ वा निमिलनोन्मीलनद्वयं छेद्यकज्ञः सः ॥ ६ ॥

यस्तात्कालिकबाहुकोटिकर्णैर्यद्वा कालाद्वैरिष्टग्रास परिलिखति । अथ वा निमीलनमुन्मीलन चेति द्वय य. परिलिखति स एव छेद्यकज्ञ । एवमत्र प्रश्नत्रयम् ॥ ६ ॥

इदानीमन्यान् प्रश्नानाह ।

ग्राह्यं परिलिख्यैक्यं परिलिखति ग्रहणादिकं तत्र ।
भूमौ यः फलके वा परिवर्त्य च्छेद्यकज्ञः सः ॥ ७ ॥

यो ग्राह्य छाद्यबिम्बमैक्य मानैक्यार्धवृत्त च परिलिख्य तत्र भूमौ वा परिवर्त्य विपरीत कृत्वा फलके पीठे यद्ग्रहादिक परिलिखति स एव छेद्यकज्ञ. । एवमत्र प्रश्नद्वयम् ॥ ७ ॥

इदानीमन्यान् प्रश्नानाह ।

देशान्तरं यथागतदृक्प्रग्रहणान्तराद्विजानाति ।
यो रेखातोऽध्वानं पर्वेष्टदिनात् स तज्ज्ञः ॥ ८ ॥

यो यथागतदृक्प्रग्रहणान्तराद्गणितागतदृष्टिजन्यस्पर्शकालयोर- न्तराद्देशान्तर विजानाति । यो रेखातो रेखादेशादध्वान देशान्तरयो- जनानि विजानाति । इष्टदिनात् पर्व विजानाति । इष्टादिनादये कति भिर्दिनै. पर्व ग्रहण भविष्यतीति वा इष्टदिनस्य पश्चात् कतिभिर्दिनैः पर्व गतमिति । एवमत्र प्रश्नत्रयम् ॥ ८ ॥

इदानीमन्यान् प्रश्नानाह ।

यो वेत्ति राहुमार्गं तेनेष्टग्रासमिष्टकालाद्वा ।
ग्रासं ग्रासात् कालं जानाति च्छेद्यकज्ञः सः ॥ ९ ॥

यो ग्रहणे राहुमार्गं भूभामार्गं वेत्ति । तेन मार्गेणेष्टग्रास वेत्ति । इष्टकालाद्ग्रास वेत्ति ग्रासाच्च कालमिष्टकाल जानाति स एव छेद्य कज्ञः । एवमत्र प्रश्नचतुष्टयम् ॥ ९ ॥

इदानीं पूर्वोक्तानां प्रश्नानामुत्तरार्थं विशेषमाह ।

**ग्रस्तप्रमाणयोगग्राह्यग्राहकदलानि वलनज्या ।**
**विक्षेपश्चापरतो भवति रवेः पूर्वतः शशिनः ॥ १० ॥**

ग्रासप्रमाणयोगो मानैक्यम् । ग्राह्यदलं छाद्यबिम्बार्धम् । ग्राहकदल ग्राहकबिम्बार्धम् । इति वस्तुत्रय ग्रहणपरिलेखे चावश्यकम् । अथ वलनज्या । विक्षेपः स्पर्शकालिक. शरश्च । रवेर्ग्रहणेऽपरतः पश्चिमतः शशिनश्चन्द्रस्य ग्रहणे पूर्वतो भवति ॥ १० ॥

इदानीमङ्गुललिप्ता आह ।

**दिनदलविभक्तजिनगुणदिनगतशेषाल्पजीवयेषुगुणम् ।**
**त्रिज्यार्धमधिकमङ्गुललिप्तास्त्रिगृहज्यया भक्तम् ॥ ११ ॥**

दिनगतशेषयोर्मध्ये या अल्पा घट्यस्ता जिनगुणा दिनदलभक्ता या लब्धिस्तत्सङ्ख्या ज्या ग्राह्या तयेषुगुणितं पञ्चगुण त्रिज्यार्धमधिक त्रिगृहज्यया त्रिज्यया भक्तमङ्गुललिप्ता अङ्गुले लिप्ता भवन्ति । ताभि र्लिप्ताभिरेकमङ्गुल भवतीत्यर्थः ।

अत्रोपपत्तिः । 'त्रिज्योद्धृतस्तत्समयोत्थशङ्कु.'—इत्यादिभास्करविधिना । तत्राचार्येण दिनदले नवत्यंशास्तदिष्टोन्नतकालेन किमित्यनुपातेनोन्नतांशाः स्थूला कल्पिताः । एवमुन्नतांशा. $= \frac{९०\times उका}{दिद}$ । एते षष्टिगुणाः कलाः । कलास्तत्त्वाश्विहृता लब्धा जीवा $= \frac{९०\times ६०\times उक}{२२५\times दिद}$ $= \frac{२४\times उका}{दिन}$ । अत्र या नियता लब्धिस्तत्सङ्ख्यका जीवैव स्वल्पान्तरात् शङ्कुस्ततोऽङ्गुललिप्ता भास्करविधिना $= \frac{१}{२}+\frac{श}{त्रि} = \frac{\frac{त्रि}{२}+शं}{त्रि}$ । अत उपपन्नम् ॥ ११ ॥

# अथैकवर्णसमीकरणबीजम् ।

—:o:—

तत्रादावव्यक्तमानानयनार्थं करणसूत्रम् ।

**अव्यक्तान्तरभक्तं व्यस्तं रूपान्तरं समेऽव्यक्तः ।**
**वर्गाव्यक्ताः शोध्या यस्माद्रूपाणि तदधस्तात् ॥ ४३ ॥ (४४)**

समे एकवर्णसमीकरणे व्यस्तं रूपान्तरमव्यक्तान्तरभक्तमव्यक्तमानं व्यक्तं भवेत् । यत्पक्षादव्यक्तमानादन्यतराव्यक्तमानं विशोध्याव्यक्तान्तरं साध्यते तत्पक्षस्य रूपाण्यन्यतररूपेभ्यो विशोध्य यच्छेषं तद्व्यस्तं रूपान्तरमित्यर्थः । 'अव्यक्त । वर्गाव्यक्ता' इत्यादेरपि सम्बन्धः । 'एकाव्यक्तं शोधयेदन्यपक्षात्-' इत्यादि भास्करोक्तमेतदनुरूपमेव ॥ ४३ ॥

इदानीं वर्गसमीकरणमाह ।

**वर्गचतुर्गुणितानां रूपाणां मध्यवर्गसहितानाम् ।**
**मूलं मध्येनोनं वर्गद्विगुणोद्धृतं मध्यः ॥ ४४ ॥ (४८)**

यस्मात् पक्षादव्यक्तो वर्गाव्यक्ता अव्यक्तवर्गश्च विशोध्यस्तदधस्तादितरपक्षाद्रूपाणि विशोध्यानि । एवमेकपक्षेऽव्यक्तवर्गोऽव्यक्तश्च । अपरपक्षे च व्यक्तानि रूपाणि । तत्राव्यक्तमानं कथं भवेदित्येतदर्थमाह वर्गचतुर्गुणितानामित्यादि । रूपाणां व्यक्ताङ्कानां किंविशिष्टानां वर्गचतुर्गुणितानां चतुर्गुणिताव्यक्तवर्गगुणकगुणितानाम् । पुनः किंविशिष्टानां मध्यवर्गसहितानाम् । मध्योऽव्यक्तस्तस्य गुणकश्चात्र मध्येन गृहीतस्तस्य गुणकस्य यो वर्गस्तेन सहितानां यन्मूलं तन्मध्येनाव्यक्तगुणकेनोनं वर्गद्विगुणोद्धृतं द्विगुणाव्यक्तवर्गगुणकेनोद्धृतं तदा मध्योऽव्यक्तोऽर्थादव्यक्तमानं स्यादिति ।

अत्रोपपत्त्यर्थं मत्कृतभास्करबीजटिप्पण्यां 'चतुराहतवर्गसमै रूपैः-' इत्यादिसूत्रोपपत्तिर्द्रष्टव्या ॥ ४४ ॥

इदानीं प्रकारान्तरेण वर्गसमीकरणेऽव्यक्तमानमानयति ।

**वर्गाहतरूपाणामव्यक्तार्धकृतिसंयुतानां यत् ।**

**पदमव्यक्ताधीनं तद्वर्गविभक्तमव्यक्तः ॥ ४५ ॥ (५०)**

वर्गेणाव्यक्तवर्गगुणकेन हतानां रूपाणां किंविशिष्टानामव्यक्ताधंकृतिसंयुतानामव्यक्तगुणकार्धवर्गसहितानां यत् पदं तदव्यक्तगुणकार्धोनं तदव्यक्तवर्गगुणकविभक्तमव्यक्तोऽव्यक्तमानं स्यादिति ।

अत्रोपपत्तिः । चतुर्भिरपवर्त्य पूर्वसूत्रविधिना स्फुटा ॥ ४५ ॥

इदानीं प्रश्नमाह ।

**सैकादंशकशेषाद्द्वादशभागश्चतुर्गुणोऽष्टयुतः ।**
**सैकांशशेषतुल्यो यदा तदाऽहर्गणं कथय ॥ ४६ ॥ (४५)**

अंशकशेषात् सैकाद्यो द्वादशभागः स चतुर्गुणोऽष्टयुतस्तदा सैकेनांशशेषेण यदा तुल्यो भवति तदाऽहर्गणं कथयेति ।

अत्रांशशेषमानं या १ । तदा प्रश्नालापेन

$$\frac{\text{४}(\text{या}+\text{१})}{\text{१२}}+\text{८}=\frac{\text{या}+\text{१}}{\text{३}}+\text{८}=\frac{\text{या}+\text{२५}}{\text{३}}=\text{या}+\text{१}$$

अतश्छेदगमादिना

$$\text{या}+\text{२५}=\text{३ या}+\text{३} \therefore \text{या}=\text{११}$$

अस्मादंशशेषात् रव्यादीनामुद्दिष्टात् पूर्ववदहर्गणः स्यादिति ॥ ४६ ॥

इदानीमन्यं प्रश्नमाह ।

**द्व्यूनमधिमासशेषं त्रिहृतं सप्ताधिकं द्विसङ्गुणितम् ।**
**अधिमासशेषतुल्यं यदा तदा युगगतं कथय ॥ ४७ ॥ (४६)**

स्पष्टार्थम् । अत्र प्रश्नालापेन यदि अधिशेषमाने या १ ।

$$\text{२}\left\{\frac{\text{या}-\text{२}}{\text{३}}+\text{७}\right\}=\frac{\text{२ या}-\text{४}}{\text{३}}+\text{१४}=\frac{\text{२ या}+\text{३८}}{\text{३}}=\text{या}$$

$\therefore$ या = ३८ । अस्मादधिमासशेषात् कुट्टकेन युगगतानयनं सुगमम् ॥ ४७ ॥

इदानीमन्यं प्रश्नमाह ।

**व्येकमवमावशेषं षड्गुणितं त्रियुतमवमशेषस्य ।**
**पञ्चविभक्तस्य समं यदा तदा युगगतं कथय ॥ ४८ ॥ (४७)**

# अथैकवर्णसमीकरणबीजम् ।

तत्रादावव्यक्तमानानयनार्थं करणसूत्रम् ।

**अव्यक्तान्तरभक्तं व्यस्तं रूपान्तरं समेऽव्यक्तः ।**
**वर्गाव्यक्ताः शोध्या यस्माद्रूपाणि तदधस्तात् ॥ ४३ ॥ (४४)**

समे एकवर्णसमीकरणे व्यस्तं रूपान्तरमव्यक्तान्तरभक्तमव्यक्तमानं व्यक्तं भवेत् । यत्पक्षादव्यक्तमानादन्यस्ताव्यक्तमानं विशोध्याव्यक्तान्तरं साध्यते तत्पक्षरूपाण्यन्यपक्षरूपेभ्यो विशोध्य यच्छेषं तद्व्यस्तं रूपान्तरमित्यर्थः । 'अव्यक्तः । वर्गाव्यक्ता' इत्यादेरपि सम्बन्धः । 'एकाव्यक्तं शोधयेदन्यपक्षात्–'इत्यादि भास्करोक्तमेतदनुरूपमेव ॥ ४३ ॥

इदानीं वर्गसमीकरणमाह ।

**वर्गचतुर्गुणितानां रूपाणां मध्यवर्गसहितानाम् ।**
**मूलं मध्येनोनं वर्गद्विगुणोद्धृतं मध्यः ॥ ४४ ॥ (४८)**

यस्मात् पक्षादव्यक्तो वर्गाव्यक्ता अव्यक्तवर्गश्च विशोध्यस्तदधस्तादितरपक्षाद्रूपाणि विशोध्यानि । एवमेकपक्षेऽव्यक्तवर्गोऽव्यक्तश्च । अपरपक्षे च व्यक्तानि रूपाणि । तत्राव्यक्तमानं कथं भवेदित्येतदर्थमाह वर्गचतुर्गुणितानामित्यादि । रूपाणां व्यक्तं ज्ञाना किंविशिष्टाना वर्गचतुर्गुणितानां चतुर्गुणिताव्यक्तवर्गगुणकगुणितानाम् । पुनः किंविशिष्टाना मध्यवर्गसहितानाम् । मध्योऽव्यक्तस्तस्य गुणकश्चात्र मध्येन गृहीतस्तस्य गुणकस्य यो वर्गस्तेन सहिताना यन्मूलं तन्मध्येनाव्यक्तगुणकेनोनं वर्गद्विगुणोद्धृतं द्विगुणाव्यक्तवर्गगुणकेनोद्धृतं तदा मध्योऽव्यक्तोऽर्थादव्यक्तमानं स्यादिति ।

अत्रोपपत्त्यर्थं मत्कृतभास्करबीजटिप्पण्या 'चतुराहतवर्गसमै रूपैः'–इत्यादिसूत्रोपपत्तिर्द्रष्टव्या ॥ ४४ ॥

इदानीं प्रकारान्तरेण वर्गसमीकरणेऽव्यक्तमानमानयति ।

**वर्गाहतरूपाणामव्यक्तार्धकृतिसंयुतानां यत् ।**

**पदमव्यक्तार्धोनं तद्वर्गविभक्तमव्यक्तः ॥ ४५ ॥ (५०)**

वर्गेणाव्यक्तवर्गगुणकेन हतानां रूपाणां किंविशिष्टानामव्यक्तार्धकृतिसंयुतानामव्यक्तगुणकार्धवर्गसंहतानां यत् पदं तदव्यक्तगुणकार्धोनं तदव्यक्तवर्गगुणकविभक्तमव्यक्तोऽव्यक्तमानं स्यादिति ।

अत्रोपपत्तिः । चतुर्भिरपवर्त्य पूर्वसूत्रविधिना स्फुटा ॥ ४५ ॥

इदानीं प्रश्नमाह ।

**सैकादंशकशेषाद्द्वादशभागश्चतुर्गुणोऽष्टयुतः ।**
**सैकांशशेषतुल्यो यदा तदाऽहर्गणं कथय ॥ ४६ ॥ (४५)**

अंशकशेषात् सैकाद्यो द्वादशभागः स चतुर्गुणोऽष्टयुतस्तदा सैकेनांशशेषेण यदा तुल्यो भवति तदाऽहर्गणं कथयेति ।

अत्रांशशेषप्रमाणं या १ । तदा प्रश्नालापेन

$$\frac{४(\text{या}+१)}{१२}+८=\frac{\text{या}+१}{३}+८=\frac{\text{या}+२५}{३}=\text{या}+१$$

अतश्छेदगमादिना

$$\text{या}+२५=३\,\text{या}+३ \therefore \text{या}=११$$

अस्मादंशशेषात् रव्यादीनामुद्दिष्टात् पूर्ववदहर्गणः स्यादिति ॥ ४६ ॥

इदानीमन्यं प्रश्नमाह ।

**ऊनमधिमासशेषं त्रिहृतं सप्ताधिकं द्विसङ्गुणितम् ।**
**अधिमासशेषतुल्यं यदा तदा युगगतं कथय ॥ ४७ ॥ (४६)**

स्पष्टार्थम् । अत्र प्रश्नालापेन यदि अधिशेषमानं या १ ।

$$२\left\{\frac{\text{या}-२}{३}+७\right\}=\frac{२\,\text{या}-४}{३}+१४=\frac{२\,\text{या}+३८}{३}=\text{या}$$

$\therefore \text{या}=३८$ । अस्मादधिमासशेषात् कुट्टकेन युगगतानयनं सुगमम् ॥ ४७ ॥

इदानीमन्यं प्रश्नमाह ।

**रूपेकमवमावशेषं षड्घ्नं त्रियुतमवमशेषस्य ।**
**पञ्चविभक्तस्य समं यदा तदा युगगतं कथय ॥ ४८ ॥ (४७)**

स्पष्टार्थम् । अत्र प्रश्नालापेन यद्यवमावशेष या १ ।

$$\frac{\text{या} - १}{६} + ३ = \frac{\text{या} + १७}{६} = \frac{\text{या}}{५} \text{ ।}$$

छेदगमादिना या = ८५ । अस्मात् तच्छेषात् पूर्वप्रकारेण युगण-तानयन सुगममिति ॥ ४८ ॥

इदानीं वर्गसमीकरणे प्रश्नमाह ।

**मण्डलशेषाद् द्युगणान्मूलं व्येकं दशाहतं द्वियुतम् ।**
**मण्डलशेषं व्येकं भानोर्यद्दिने कदा भवति ॥ ४९ ॥ (४९)**

भानोर्मण्डलशेषाद्भगणशेषात् । शेष स्पष्टार्थम् ।

अत्र प्रश्नालापेन यदि भगणशेषप्रमाण $\text{या}^{२} + २$ ।

$$१० (\text{या} - १) + २ = १० \text{ या} - ८ = \text{या}^{२} + २ - १ = \text{या}^{२} + १$$

पक्षान्तरानयनेन $\text{या}^{२} - १० \text{ या} = - ९$

वर्गसमीकरणविधिना $\text{या}^{२} - १० \text{ या} + २५ = २५ - ९ = १६$

अत $\text{या} - ५ = \pm ४ \quad \text{या} = ९ \text{ वा } १$

एवमत्र बीजयुक्तितो द्विविध मानमुत्पद्यते यावत्तावतस्तदुद्दिष्टो-त्थापनेन भगणशेषमानम = ८३ वा, ३ । अत्र चतुर्वेदाचार्येण प्रथममानमेव गृहीतम । अस्माद्भगणशेषात् पूर्वकुट्टकविधिनाऽनेकधाऽहर्गणो भवति स चाभीष्टवारे ग्राह्य ॥ ४९ ॥

इदानीमन्य प्रश्नमाह ।

**अधिमासशेषपादात् च्यूनाद्गणोऽधिमासशेषसमः ।**
**अवमावशेषतो वावमशेषसमः कदा भवति ॥ ५० ॥ (५१)**

स्पष्टार्थम । यद्यधिमासशेषस्य तच्छेषस्य च प्रमाण या १ तदा प्रश्नालापेन ।

$$\left(\frac{\text{या}}{४} - ३\right)^{२} = \left(\frac{\text{या} - १२}{४}\right)^{२}$$

$$= \frac{\text{या}^{२} - २४ \text{ या} + १४४}{१६} = \text{या}$$

तत उक्तवत् $या^{2} - ४० या = - १४४$

$$या^{2} - ४० या + ४०० = ४०० - १४४ = २५६$$

$\therefore$ $या - २० = \pm १६$ ततः $या = ३६$ वा ४

अत्र यदि रूपत्रयतोऽधिशेषस्य क्षयशेषस्य वा पादः शोध्यते शेषश्च धनात्मकोऽपेक्षितस्तदा द्वितीयं मानमेव ग्राह्यम् । ततोऽधिशेषादवमावशेषाच्च कुट्टकविधिना कल्पगतानयनं सुगममिति ॥ ५० ॥

इदानीमनेकवर्णसमीकरणमाह ।

**आद्याद्वर्णादन्यान् वर्णान् प्रोह्याप्यमानमाद्यहृतम् ।**
**सदृशच्छेदावसकृद् द्वौ व्यस्तौ कुट्टको बहुषु ॥ ५१ ॥ (५२)**

आद्याद्वर्णाद्येऽन्ये वर्णास्तानितरस्मात् पक्षात् प्रोह्य शेषमाद्येनाऽऽद्यवर्णगुणकेन हृतमाद्यमानमाद्योन्मितिः स्यात् । एकस्य वर्णस्योन्मितीनां बहुत्वे द्वौ द्वौ पक्षौ व्यस्तावन्योन्यहरगुणेनाहतौ सदृशच्छेदौ कृत्वाऽसकृत् तदन्यवर्णोन्मितिः साध्या । एक पक्षस्य हरेणापरपक्षीयौ लवहरौ सङ्गुण्य छेदगमं च विधाय 'आद्याद्वर्णादन्यान्' इत्यादिना तदन्यवर्णमानेयम् । एवमसकृत् कर्म कार्यम् । अन्ते बहुषु वर्णेष्वज्ञातेषु कुट्टको भवति । तत्र कुट्टकेनोन्मितिः साध्येत्यर्थः । भास्करानेकवर्णसमीकरणमेतदनुरूपमेव ॥ ५१ ॥

$\therefore \text{गभ} + \text{या} = \dfrac{\text{या}\,(\text{यभ} + \text{कक्कु}) - \text{का}}{\text{कक्कु}} = \text{यो}$ ।

$\text{ततः का} = \dfrac{\text{या}\,(\text{यभ} + \text{कक्कु}) - \text{कक्कु यो}}{१}$

कुट्टकेन यावत्तावन्मानं सुगमम् ।

द्वितीयप्रश्नेऽहर्गणः = या १ । गतभगणाः = का ।

$\text{भगणशेषम्} = \text{यभ} \cdot \text{या} - \text{कक्कु} \cdot \text{का}$

$\therefore \text{भशे} + \text{या} = \text{या}\,(\text{यभ} + १) - \text{कक्कु} \cdot \text{का} = \text{यो}$

$\therefore \text{का} = \dfrac{\text{या}\,(\text{यभ} + १) - \text{यो}}{\text{कक्कु}}$ । अतः कुट्टकेन यावत्तावन्मानं सुगमम् ।

तृतीयप्रश्नेऽहर्गणः = या १ । गतभगणाः = का । ततो

$\text{गतभगणशेषम्} = \text{यभ} \cdot \text{या} - \text{कक्कु} \cdot \text{का}$

$\text{अतः भशे} + \text{या} + \text{गभ} = \text{या}\,(\text{यभ} + १) - \text{का}\,(\text{कक्कु} - १) = \text{यो}$

$\therefore \text{का} = \dfrac{\text{या}\,(\text{यभ} + १) - \text{यो}}{\text{कक्कु} - १}$ । कुट्टकेन यावत्तावन्मानं सुगमम् ।

चतुर्थप्रश्नेऽहर्गणः = या १ । गतभगणाः = का ।

$\text{भगणशेषम्} = \text{यभ} \cdot \text{या} - \text{कक्कु} \cdot \text{का}$

$\therefore \text{गभ} + \text{भशे} = \text{यभ} \cdot \text{या} - \text{कक्कु} \cdot \text{का} + \text{का}$

$= \text{यभ} \cdot \text{या} - \text{का}\,($ [illegible]

अतः का = [illegible] यावत्तावन्मानं सुगमम् ॥ ५२ ॥

इदानीम् [illegible]

गतभगणोनाद् [illegible] तदैक्यहीनाद्वा ।

तद्विवराद्युगणं [illegible] ऽदेकक्षः सः ॥ ५३ ॥ (५४)

अनन्तरप्रश्नेषु योग[illegible]न वियोगः कृत इति स्पष्टार्थम् । उत्तरार्धं च पूर्वप्रश्नोक्तं योगस्थाने वियोगं कृत्वा कर्म कर्त्तव्यमिति ॥ ५३ ॥

इदानीमन्यान् प्रश्नानाह ।

**राश्याद्यैस्तच्छेषैश्चैवं भुक्ताधिमासदिनहीनैः ।**
**तच्छेषैश्च युगगतं यः कथयति कुट्टकज्ञः सः ॥५४॥ (५५)**

एवं राश्याद्यैस्तच्छेषैश्च युताद्धीनाद्वाऽहर्गणात् । गतराश्यादितच्छेषयोगान्तराद्वा । भुक्ताधिमासक्षयाहैश्च युतोनितादहर्गणात् तच्छेषयुतोनितादहर्गणाच्च वा गताधिमासाधिशेषयोगान्तराद्वा गतक्षयाहतच्छेषयोगान्तराद्वा यो युगगतं कथयति स एव कुट्टकज्ञः ।

अत्र यदि गतराशिदिनगणयोग उद्दिष्टस्तदाऽहर्गणः = या । गतभगणाः = का । भगणशेषम् = यभ· या − कक्कु· का । इदं द्वादशगुणं राशिशेषमानं नीलकमपास्य कल्पकुदिनहृतं

$$\text{गतराशयः} = \frac{\text{१२ यभ या} - \text{१२ कक्कु का} - \text{नी}}{\text{कक्कु}}$$

$$\therefore \text{गरा} + \text{अह} = \frac{\text{या (१२ यभ} + \text{कक्कु)} - \text{१२ कक्कु का} - \text{नी}}{\text{कक्कु}} = \text{यो}$$

$$\text{ततः या} = \frac{\text{१२ कक्कु का} + \text{नी} + \text{यो कक्कु}}{\text{१२ यभ} + \text{कक्कु}}$$ । 'अन्येऽपि भाज्ये यदि सन्ति वर्णास्तन्मानमिष्टं परिकल्प्य साध्य' इत्यादिभास्करविधिना कुट्टकेन यावत्तावन्मानं सुगमम् । एवमालापानुसारेण समौ पक्षौ विधाय कुट्टकादिनाऽव्यक्तमानमन्येषु प्रश्नेष्वप्यानेयमिति ॥ ५४ ॥

इदानीमन्यौ प्रश्नावाह ।

**अंशकशेषेण युतात् लिप्ताशेषात्तदन्तराद्थवा ।**
**भानोर्ज्ञदिने युगणं यः कथयति कुट्टकज्ञः सः ॥५५॥ (५६)**

भानोर्लिप्ताशेषादंशकशेषयुताद्वा तयोर्लिप्ताशेषयोरन्तराद्यो बुधवारेऽहर्गणं कथयति स एव कुट्टकज्ञः ।

कल्प्यतेऽहर्गणः = या । रविभगणभागाः = रभा· रभ = भ । गतभागाः = का । ततोंऽशशेषम् = भ· या − कक्कु· का । इदं षष्टिगुणं कल्पकुदिनहृतं लब्धं नीलकमानं नी १ । तद्गुणितं हरं भाज्यादपास्य जातं कलाशेषम् = ६० भ· या − ६० कक्कु का − कक्कु· नी

इष्टाङ्केन युतमून वाऽवमावशेषमवमैस्तुल्य तथेष्टाङ्केन युतमून वाऽधिमासशेषमधिमासैस्तुल्यमस्तीत्यस्योत्तरमावत्सरात् कुर्वन्नपि गणक ।

अत्राहर्गणमानम् = या १ । गतावमानि = का १ । तदाऽवमावशेषम् = चदि या – ककु का । तत प्रश्नालापेन

$$\text{चदि या} - \text{ककु का} \pm \text{इ} = \text{का}$$

$$\therefore \text{या} = \frac{(\text{ककु} + १)\,\text{का} \mp \text{इ}}{\text{चदि}}$$

। अत कुट्टकेन यावत्तावन्मान सुगमम् ।

द्वितीयप्रश्ने गतसौरमानम = या १ । गताधिमासा = का । तदाऽधिमासशेषम = अधिमा या – कसौदि का । तत प्रश्नालापेन

$$\text{अधिमा या} - \text{कसौदि का} \pm \text{इ} = \text{का}$$

$$\text{या} = \frac{(\text{कसौदि} + १)\,\text{का} \mp \text{इ}}{\text{अधिमा}}$$

। अतो यावत्तावन्मान सुगमम ।
अस्योत्तर गतेन्दुदिनमान यावत्तावत् कल्प्यते तदाऽपि भवतीति ॥ ५८ ॥

इदानीमन्य प्रश्नमाह ।

**निरछेद्भागहारो भानोः सप्ततिगुणोऽंशशेषोनः ।**
**शुध्यत्ययुतविभक्तः कुर्वन्नावत्सराद्गणकः ॥ ५९ ॥ (६०)**

निरछेदभागहारो दृढकुदिनानि । शेष स्पष्टार्थम ।

५५ आर्याप्रश्नोत्तरे यदि अ = चक्रभा इयभ, तदा तेनैव विधिनाऽशशेषम = अ या – दृकु का = नी । तत प्रश्नालापेन

$$\frac{\text{७० दृकु} - \text{अ या} + \text{दृकु का}}{१००००}$$

अय निरय ।

$$= \frac{\text{७० दृकु} - \text{नी}}{१००००}$$

।

तत कुट्टकेन यथाभाज्यविधिना नीलकमान सुगमम ॥ ५९ ॥

इत्यनेकवर्णसमीकरणबीजम् ।

# अथ भावितबीजम्।

तत्राव्यक्तमानार्थं करणसूत्रम्।

**भावितकरूपगुणना साव्यक्तवधेष्टभाजितेष्टाप्त्योः।**
**अल्पेऽधिकोऽधिकेऽल्पः क्षेप्यो भावितहृतौ व्यस्तम् ॥६०॥**
**(६१)**

भावितकस्य भावितगुणकस्य रूपाणां च गुणना वधः किंविशिष्टा साव्यक्तवधाऽव्यक्तगुणकयोर्वधेन सहिता तत इष्टेन भाजिता लब्धिर्येष्टाप्ता। अनयोरिष्टाप्त्योर्मध्ये योऽधिकः सोऽल्पेऽव्यक्तगुणकेऽल्पश्चाधिकेऽव्यक्तगुणके क्षेप्यः। एवं यौ द्वौ राशी भवतस्तौ भावितकहृतौ भावितगुणकेन हृतौ व्यस्तमव्यक्तमानं स्यात्। यावत्तावद्गुणके क्षेप्येण यन्मानं तत्कालकमानं कालकगुणके क्षेप्येण यन्मानं तद्यावत्तावन्मानं ज्ञेयमिति। एकस्मिन् पक्षे भावितमन्यस्मिन्नव्यक्तौ रूपाणि च कृत्वा तदोपरिलिखितं कर्म कर्त्तव्यमिति।

अत्रोपपत्तिः। पक्षान्तरादिना कल्प्यते समौ पक्षौ

$$\text{अ}\cdot\text{या}\cdot\text{का} = \text{क}\ \text{या} + \text{ख}\ \text{का} + \text{ग}$$

$$\therefore\ \text{याका} = \frac{\text{क}}{\text{अ}}\text{या} + \frac{\text{ख}}{\text{अ}}\text{का} + \frac{\text{ग}}{\text{अ}}$$

ततो 'भावितपक्षतोऽभीष्टात् त्यक्त्वा वर्णौ सरूपकौ' इत्यादि भास्करविधिना $\frac{\text{इ}}{\text{अ}}$ इतीष्टं प्रकल्प्य फलम् $= \frac{\text{क}\ \text{ख} + \text{अ}\ \text{ग}}{\text{अ}\ \text{इ}}$। ततः केवलसंयोजनेन

$$\text{या} = \frac{\text{ख}}{\text{अ}} + \frac{\text{क}\ \text{ख} + \text{अ}\ \text{ग}}{\text{इ}} = \frac{1}{\text{अ}}\left(\text{ख} + \frac{\text{क}\ \text{ख} + \text{अ}\ \text{ग}}{\text{इ}}\right)$$

$$= \frac{\text{ख} + \text{आप्ति}}{\text{अ}}$$

$$\text{का} = \frac{\text{क}}{\text{अ}} + \frac{\text{इ}}{\text{अ}} = \frac{\text{क} + \text{इ}}{\text{अ}}$$ । अत उपपन्नम्।

विशेषाश्च भास्करबीजतोऽवगम्याः। तत्र मत्कृतोपपत्तिश्च तट्टिप्पण्यां विलोक्या ॥ ६० ॥

इदानीं प्रश्नमाह ।

**भानो राश्यंशवधात् त्रिचतुर्गुणितान् विशोध्य राश्यंशान् ।**
**नवतिं दृष्ट्वा सूर्यं कुर्वन्नावत्सराद्गणकः ॥ ६१ ॥ (६२)**

भानोः सूर्यस्य यद्राशिमानं यच्चांशमानं तयोर्वधात् त्रिगुणान् राशीन् चतुर्गुणानंशांश्च विशोध्य शेषं नवतिं दृष्ट्वाऽऽवत्सरात् सूर्यं कुर्वन्नपि स गणक इति ।

अत्र राशिमानम् = या १ । अंशमानम् = का १ । तत प्रश्नालापानुसारेण

या का − ३ या − ४ का = ९०

या का = ३ या + ४ का + ९०

∴ वर्णाङ्काहतिरूपैक्यम् = ३ × ४ + ९० = १०२ । इष्टम् = ६ ।

फलम् = $\frac{१०२}{६}$ = १७ । ततो या = १० । का = २० ॥ ६१ ॥

इदानीं भाविते प्रकारान्तरमाह ।

**भावितके यद्घातो विनपूर्वर्णेन तत्प्रमाणानि ।**
**कृत्वेष्टानि तदाहतवर्णैक्यं भवति रूपाणि ॥ ६२ ॥ (६३)**

**वर्णप्रमाणभावित-**
**घातो भवतीष्टवर्णसङ्ख्यैवम् ।**
**सिध्यति विनाऽपि भावित**
**समकरणात् किं कृतं तदतः ॥ ६३ ॥ (६४)**

भावितके भावितसमीकरणे येषां वर्णानां घातो-(यद्घात) ऽस्ति । तत्प्रमाणानि विनपूर्वर्णेनेष्टानि कृत्वा तदाहतवर्णैक्यं रूपाणि भवति । एकवर्णमपहाय परेषां मानानीष्टानि प्रकल्प्य तद्गाहतानां वर्णगुणकानामैक्यं यद्भवति तानि रूपाणि व्यक्तानि भवन्ति । इष्टानां वर्णप्रमाणानां भावितस्य भावितगुणकस्य च घात इष्टविमुक्तवर्णमङ्ख्या भवति । एवं भावितसमकरणाद्भावितसमीकरणाद्विनाऽपि वर्णमानं सिध्यति । अतस्तत् पूर्वं कृतं भावितं किं किमर्थं कार्यमिति शेषः । 'कृत्वेष्टवर्णे

सुधिया परैरत्र कल्प्यानि मानानि तथेप्सितानि' इत्यादिभास्करोक्तमेत दनुरूपमेव ।

अत्रोपपत्तिरव्यक्तकल्पितमानानामुत्थापनेन स्फुटा ॥ ६२-६३ ॥

इति भावितबीजम् ।



# अथ वर्गप्रकृतिः ।

तत्र वज्राभ्यासतोऽनेककनिष्ठज्येष्ठानयनम् ।

मूलं द्विधेष्टवर्गाद्गुणकगुणादिष्टयुतविहीनाच्च ।
आद्यवधो गुणकगुणः सहान्त्यघातेन कृतमन्त्यम् ॥६४॥(६५)
वज्रवधैक्यं प्रथमं प्रक्षेपः क्षेपवधतुल्यः ।
प्रक्षेपशोधकहृते मूले प्रक्षेपके रूपे ॥ ६५ ॥ (६६)

इष्टवर्गाद्गुणकगुणादन्येनेष्टेन केन चिद्युताद्धीनाच्च यन्मूलं तदन्त्यसंज्ञमधोऽधो द्विधा स्थाप्यम् । यस्येष्टस्य वर्गः कृतः स चाद्यसंज्ञोऽप्यधोऽधो द्विधा स्थाप्यः । येन युतेनोनेन वा मूलं प्राप्तं स क्षेपसंज्ञः शोधकसंज्ञो वाऽधोऽधो द्विधा स्थाप्यः । एवं तिर्यक्पङ्क्तिद्वये द्विधा कनिष्ठज्येष्ठक्षेपाणां विन्यासो जातः । यदिष्टवर्गो येन गुणकेन गुणितस्तस्य संज्ञा प्रकृतिः । आद्यस्य कनिष्ठसंज्ञा । अन्त्यस्य च ज्येष्ठसंज्ञेति सर्वं भास्करबीजे प्रसिद्धम् । आद्ययोः कनिष्ठयोर्वधो गुणकेन प्रकृत्या गुणोऽन्त्ययोर्ज्येष्ठयोर्घातेन सह सहितः । एवमन्त्यमन्यज्ज्येष्ठं कृतमाचार्यैरिति शेषः । कनिष्ठज्येष्ठयोर्वज्रवधैक्यं चान्यत् प्रथमं कनिष्ठसंज्ञं भवति । तत्र क्षेपयोर्वधेन तुल्यः प्रक्षेपो भवतीति । एवं प्रक्षेपे वा शोधके ऋणक्षेपे तुल्ये भावनया ये मूले कनिष्ठज्येष्ठे ते प्रक्षेपकेण वा शोधकेन हृते रूपे प्रक्षेपके रूपक्षेपे कनिष्ठज्येष्ठे भवत इति सर्वं भास्करवर्गप्रकृतितः स्फुटम् ।

अत्रोपपत्त्यर्थं मत्कृतभास्करबीजटिप्पण्यां वर्गप्रकृत्युपपत्तिर्विलोक्या ॥ ६४–६५ ॥

इदानीं विशेषमाह ।

रूपप्रक्षेपपदे पृथगिष्टक्षेप्यशोध्यमूलाभ्याम् ।
कृत्वाऽऽन्त्याद्यपदे ये प्रक्षेपे शोधने वेष्टे ॥ ६६ ॥ (६८)

रूपक्षेपे ये पदे आद्यान्त्यपदे ते पृथक् स्थाप्ये । ततः इष्टक्षेपे चेष्टशोधके ये मूले ताभ्यां भावनयाऽन्ये अन्त्याद्यपदे ज्येष्ठकनिष्ठे कृत्वा ते इष्टे प्रक्षेपे चेष्टे शोधनेऽन्ये अन्त्याद्यपदे क्षेपे इति ॥ ६६ ॥

इदानीं चतुःक्षेपकनिष्ठज्येष्ठाभ्यां रूपक्षेपे कनिष्ठज्येष्ठानयनमाह ।

**चतुरधिकेऽन्त्यपदकृति-**

**रूप्यूनादलिताऽन्त्यपदगुणाऽन्त्यपदम् ।**

**अन्त्यपदकृतिर्व्येका**

**विहृताऽऽद्यपदाहृताऽऽद्यपदम् ॥ १७ ॥ (६६)**

चतुरधिके चतुःक्षेपेऽन्त्यपदकृतिस्त्रिभिरूनाऽर्धिताऽन्त्यपदगुणा फलं रूपक्षेपीयमन्त्यपदं ज्येष्ठं भवेत् । अन्त्यपदकृतिरेकेन हीना द्विहृता- ऽऽद्यपदेन हता फलं रूपक्षेपीयमाद्यपदं कनिष्ठं भवेत् ।

अत्रोपपत्तिः । यदि चतुःक्षेपे कनिष्ठम् $=$ क, ज्येष्ठम् $=$ ज्ये । तदा 'इष्टवर्गहृतः क्षेपः क्षेपः स्यात्'—इत्यादिभास्करविधिना रूपक्षेपे कनिष्ठम् $= \frac{\text{क}}{2}$ । ज्येष्ठम् $= \frac{\text{ज्ये}}{2}$ । तथा विलोमेन प्रकृतिः $= \frac{\text{ज्ये}^2 - 4}{\text{क}^2}$ समासभावनया $\frac{\text{क}}{2}, \frac{\text{ज्ये}}{2}$, आभ्यामन्ये कनिष्ठज्येष्ठे रूपक्षेपे साध्येते तदा कनिष्ठम् $= \frac{\text{क} \times \text{ज्ये}}{2}$ ज्येष्ठम् $= \frac{\text{ज्ये}^2 - 2}{2}$ आभ्यां $\frac{\text{क}}{2}$, $\frac{\text{ज्ये}}{2}$ एताभ्यां च पुनः रूपक्षेपे यदि कनिष्ठ ज्येष्ठे साध्येते तदा कनिष्ठम् $= \frac{\text{क}(\text{ज्ये}^2 - 1)}{2}$ । ज्येष्ठम् $= \frac{\text{ज्ये}(\text{ज्ये}^2 - 3)}{2}$ अत उपपद्यते ॥ ६७ ॥

इदानीं चतुःशोधक–कनिष्ठज्येष्ठाभ्यां रूपक्षेपे कनिष्ठज्येष्ठानयन- माह ।

**चतुरूनेऽन्त्यपदकृती द्व्येकयुते वधदलं पृथग्व्येकम् ।**

**द्व्येकाद्याहतमन्त्यं पदवधगुणमाद्यमान्त्यपदम् ॥१८॥ (७१)**

चतुरूनेऽन्त्यपदस्य कृतिर्द्विधा स्थाप्या एकत्र त्रियुताऽन्यत्रैकयुता । अनयोर्वधदलं पृथक् स्थाप्यमेकत्र व्येकं कार्यं तद्व्येकाद्याहतम् । अन्त्यपदकृ-

तिस्त्रियुता प्रथमं या साधिता तद्गुणकेना ज्ये$^{२}$ + २ नेन हतमित्यर्थः । फलं रूपक्षेपेऽन्त्यं ज्येष्ठपदं स्यात् । पृथक् स्थापितं पदयोः कनिष्ठज्येष्ठघातार्धेन गुणं फलमान्त्यपदं पूर्वागतान्त्यपदसम्बन्धि चाद्यं पदं भवेदिति ।

अत्रोपपत्तिः । कल्प्यते चतुःक्षेपे कनिष्ठम् = क । ज्येष्ठम् = ज्ये । तदा वर्गप्रकृतिनियमेन प्रकृतिः = $\frac{\text{ज्ये}^{२} + ४}{\text{क}^{२}}$ । रूपशोधके च कनिष्ठम् = $\frac{\text{क}}{२}$ । ज्येष्ठम् = $\frac{\text{ज्ये}}{२}$ । आभ्यां समासभावनया रूपक्षेपे कनिष्ठम् = $\frac{\text{क} \times \text{ज्ये}}{२}$ । ज्येष्ठम् = $\frac{\text{ज्ये}^{२} + २}{२}$ । आभ्यां पुनः समासभावनया रूपक्षेपे कनिष्ठम् = $\frac{\text{क ज्ये} (\text{ज्ये}^{२} + २)}{२}$ । ज्येष्ठम् = $\frac{\text{ज्ये}^{४} + ४ \text{ज्ये}^{२} + २}{२}$ । आभ्यां पूर्वसाधिताभ्याम् $\frac{\text{क} \times \text{ज्ये}}{२}$ । $\frac{\text{ज्ये}^{२} + २}{२}$ एताभ्यां च पुनः समासभावनया रूपक्षेपे कनिष्ठम् = $\frac{\text{क} \cdot \text{ज्ये} (\text{ज्ये}^{४} + ४ \text{ज्ये}^{२} + ३)}{२}$

$$= \text{क} \cdot \text{ज्ये} \frac{(\text{ज्ये}^{२} + १)(\text{ज्ये}^{२} + ३)}{२}$$ । ज्येष्ठम् = $(\text{ज्ये}^{२} + २)\left(\frac{\text{ज्ये}^{४} + ४ \text{ज्ये}^{२} + १}{२}\right)$

$$= (\text{ज्ये}^{२} + २)\left(\frac{\text{ज्ये}^{४} + ४ \text{ज्ये}^{२} + ३}{२} - १\right) = \left\{\text{ज्ये}^{२} + २\right\} \left\{\frac{(\text{ज्ये}^{२} + ३)(\text{ज्ये}^{२} + १)}{२} - १\right\}$$

अत उपपद्यते ॥ ६८ ॥

इदानीं वर्गात्मकप्रकृतौ कनिष्ठज्येष्ठानयनमाह ।

**वर्गे गुणके क्षेपः केनचिदुद्धृतयुतोनितो दलितः ।**
**प्रथमोऽन्त्यमूलमन्यो गुणकारपदोद्धृतः प्रथमः ॥ ६९ ॥ (७३)**

गुणके प्रकृतौ वर्गे वर्गात्मके सति क्षेपः केनचिदिष्टेनोद्धृतः फलं तेनेष्टेन युतमूनितं दलितं च कार्यम् । एवं राशिद्वये भवेत् तत्र प्रथमो राशिरन्त्यमूलं ज्येष्ठं भवेत् । अन्यो गुणकारपदोद्धृतो गुणकारः प्रकृतिस्तत्पदेनोद्धृतः फलं प्रथम आद्योऽर्थात् कनिष्ठं पदं भवेदिति । 'इष्टभक्तो द्विधा क्षेप' इत्यादि भास्करोक्तमेतदनुरूपमेव ।

अत्रोपपत्त्यर्थं मत्कृतभास्करबीजटिप्पण्याम्—इष्टभक्तो द्विधा क्षेपः इत्यस्योपपत्तिर्द्रष्टव्या ॥ ६९ ॥

अतोऽपि चैकाऽर्था प्रोक्ता सा कोलब्रूकानुवादानुसारेण ।

**वर्गच्छिन्ने गुणके प्रथमं तन्मूलभाजितं भवति ।**
**वर्गच्छिन्ने क्षेपे तत्पदगुणिते तदा मूले ॥ ७० ॥ (७५)**

एव भवितुमर्हति ।

यदि गुणकः प्रकृतिः केनचिद्वर्गेण निःशेषो भवति तदा तद्वर्गेण सहृत्य लब्धसमे गुणके मूले साध्ये तत्र प्रथममाद्यमर्थात् कनिष्ठं तस्य वर्गस्य मूलेन भाजितं फलमभीष्टे गुणके कनिष्ठं भवेत् । ज्येष्ठं त्वथापि तदेव । क्षेपे वर्गच्छिन्ने सति वर्गेण क्षेपं विभज्य लब्धसमे क्षेपे ये मूले ते तद्वर्गपदेन गुणिते अभीष्टगुणके मूले भवत इति । 'वर्गच्छिन्ने गुणे ह्रस्वं तत्पदेन विभाजयेदिति भास्करप्रकारः प्रथमप्रकारानुरूपः । 'गुण्यः गुण्यो तदा पदे' इति भास्करप्रकारश्च द्वितीयप्रकारानुरूपः ।

अत्रोपपत्त्यर्थं मत्कृतभास्करबीजटिप्पणी विलोक्या ॥ ७० ॥

इदानीं प्रश्नविशेषस्योत्तरमाह ।

**गुणकयुतिरष्टगुणिता गुणकान्तरवर्गभाजिता राशिः ।**
**गुणकौ त्रिगुणौ व्यस्ताधिकौ हृतावन्तरेण पदे ॥ ७१ ॥ (७८)**

(गुणकद्वयेन गुणितः पृथक् पृथग्राशिरेकयुक्तश्च ।
यदि तत्पदे निरये कुर्वन्नावत्सराद्गणकः ॥)

इति प्रश्नस्योत्तरार्थं गुणकयोर्युतिरष्टगुणिता गुणकयोरन्तरवर्गेण भाजिता राशिः स्यात् । गुणकौ द्वौ त्रिगुणौ कार्यौ तौ व्यस्ताधिकौ व्यस्तगुणकाधिकौ गुणकान्तरेण तौ हृतौ तदा ते एव निरये पदे भवतः ।

अत्रोपपत्तिः । कल्प्यते गुणकद्वयं क्रमेण $गु_1$, $गु_2$ । तथा राशिमानं $\frac{या^2 - 1}{गु_1}$ ।

अत्रैकालापः स्वयं घटतेऽतोऽमुं द्वितीयगुणकेन सङ्गुण्य रूपं प्रक्षिप्य कालकवर्गेण समं कृत्वा पदे।

$$\frac{गु_2 या^2 - गु_2 + गु_1}{गु_1} = का^2 \therefore गु_1 का^2 = गु_2 या^2 - गु_2 + गु_1 ।$$

$गु_1$ गुणितौ तदा प्रथमपदस्य मूलम् = $गु_1$ का । द्वितीय पदस्यास्य $गु_1 गु_2 या^2 - गु_1 गु_2 + गु_1^2$ वर्गप्रकृत्या

| क | ज्ये | क्षे |
|---|---|---|
| १ | $गु_1$ | $गु_1^2 - गु_1 गु_2$ |
| $\frac{२ इ}{गु_1 गु_2 \sim इ^2}$ | $\frac{गु_1 गु_2 + इ^2}{गु_1 गु_2 \sim इ^2}$ | १ |

समासभावनया क $\frac{२ गु_1 इ + गु_1 गु_2 + इ^2}{गु_1 गु_2 \sim इ^2}$ | ज्ये $\frac{२ गु_1 गु_2 इ + गु_1^2 गु_2 + गु_1 इ^2}{गु_1 गु_2 \sim इ^2}$

अत्र ह्रस्वं यावत्तावन्मान ज्येष्ठं प्रथमपदस्य $गु_1$ का अस्य समम् ।

अथ यदि इ = $गु_1$ तदोत्थापनेन राशिः

$$= \frac{या^2 - १}{गु_1} = \left[ \left\{ \frac{२ गु_1^2 + गु_1 गु_2}{गु_1 (गु_2 \sim गु_1)} \right\}^2 - १ \right] \div गु_1$$

$$= \left\{ \left( \frac{२ गु_1 + गु_2}{गु_2 \sim गु_1} \right)^2 - १ \right\} \div गु_1 = \left( \frac{४ गु_1^2 + ४ गु_1 गु_2 + गु_2^2}{गु_1^2 - २ गु_1 गु_2 + गु_2^2} - १ \right) \div गु_1$$

$$= \frac{८ गु_1^2 + ८ गु_1 गु_2}{(गु_2 \sim गु_1)^2} \div गु_1 = \frac{८ (गु_1 + गु_2)}{(गु_2 \sim गु_1)^2}$$ । तत आलापेन

$$प्रथमपदम् = \sqrt{\frac{८ गु_1^2 + ८ गु_1 गु_2}{गु_1^2 - २ गु_1 गु_2 + गु_2^2} + १} = \frac{३ गु_1 + गु_2}{गु_1 \sim गु_2}$$ ।

एवं द्वितीयपदम् = $\frac{३ गु_2 - गु_1}{गु_1 \sim गु_2}$ । अत उपपन्नं सर्वम् ॥ ७१ ॥

इदानीं प्रश्नान्तरविशेषस्योत्तरमाह ।

**वर्गोऽन्यकृतियुतोनस्तत्संयोगान्तरार्धकृतिभक्तः ।**
**तद्गुणितौ युतिवियुतौ वर्गौ घाते च रूपयुते ॥७२॥ (८०)**

ययो राश्योर्युतिवियुतौ वर्गौ भवतस्तथा घाते रूपयुते च वर्गः स्यात् तत्र राश्योरानयनाय कश्चिदिष्टो वर्गः कल्प्यः । स चान्येष्टवर्गेण युत ऊनश्च कार्यः । एवं राशिद्वयं यद्भवेत् तत्संयोगस्तदन्तरार्धवर्गेण भक्तो यत् फलमागच्छेत् तेन पूर्वसाधितौ द्वौ राशी गुणितावभीप्सितौ राशी भवतः ।

अत्रोपपत्तिः । कल्प्येते राशी

$\text{२ इ}^{२} (\text{या}^{२} + \text{का}^{२})$ । $\text{२ इ}^{२} (\text{या}^{२} - \text{का}^{२})$

अत्र राश्योर्योगवियोगौ वर्गौ भवतोऽत आलापद्वयं घटते । अथा-नयोर्घातः सैकः $= \text{४ इ}^{४} \text{या}^{४} - \text{४ इ}^{४} \text{का}^{४} + १$ अयं वर्गः । अत आद्यन्तयोः पदयोः $-\text{२ इ}^{२} \text{या}^{२}, -१$ अनयोर्द्विघ्नघातं $-\text{४ इ}^{२} \text{या}^{२}$ मध्यपदसमां कृत्वा पक्षौ $-\text{४ इ}^{२} \text{या}^{२} = -\text{४ इ}^{४} \text{का}^{४}$

$$\therefore \text{२ इ}^{२} = \frac{\text{२ या}^{२}}{\text{का}^{४}} = \frac{(\text{या}^{२} + \text{का}^{२}) + (\text{या}^{२} - \text{का}^{२})}{\left\{\frac{(\text{या}^{२} + \text{का}^{२}) - (\text{या}^{२} - \text{का}^{२})}{२}\right\}^{२}}$$

अत उपपद्यते यथोक्तम् ॥ ७२ ॥

इदानीं पुनः प्रश्नान्तरविशेषस्योत्तरमाह ।

**यैरूनो यैश्च युतो रूपैर्वर्गस्तदैक्यमिष्टहृतम् ।**
**इष्टोनं तद्दलकृतिरूनाऽभ्यधिका भवति राशिः ॥७३॥ (८४)**

को राशिरेतावद्भी रूपैर्युतस्तथैतावद्भी रूपैरूनश्च वर्गो भवतीति प्रश्नोत्तरार्थं यै रूपैरूनो यैर्युतश्च वर्गो भवति तेषामैक्यं केनचिदिष्टेन हृतं फलमिष्टोनं कार्यम् । तस्य शेषस्य दलस्यार्धीकृतस्य कृतिरूनाऽभ्यधिका । यै रूपैरूनो राशिर्वर्गो भवति तान्यूनरूपाणि तैरूनैरभ्यधिका राशिर्भवतीत्यर्थः ।

अत्रोपपत्तिः । कल्प्यते राशिमानम् $= \text{या } १$ । अत्र अ-रूपैर्युत, क-रूपैरूनश्च वर्गो भवतीति प्रश्नालापेन

$\text{का}^{२} = \text{या} + \text{अ}$

$\text{नी}^{२} = \text{या} - \text{क}$

$\therefore \text{का}^{२} - \text{नी}^{२} = \text{अ} + \text{क}$ । अथ कल्प्यते

$\text{का} - \text{नी} = \text{इ}$

$\therefore \text{का} + \text{नी} = \frac{\text{अ} + \text{क}}{\text{इ}}$

ततः संक्रमणेन $\text{नी} = \frac{१}{२}\left\{\left(\frac{\text{अ} + \text{क}}{\text{इ}}\right) - \text{इ}\right\}$

$$\text{अतः } \text{नी}^2 = \left[\tfrac{1}{2}\left\{\left(\frac{\text{अ}+\text{क}}{\text{इ}}\right) - \text{इ}\right\}\right]^2 = \text{या} - \text{क}$$

$$\text{ततः } \text{या} = \left[\tfrac{1}{2}\left\{\left(\frac{\text{अ}+\text{क}}{\text{इ}}\right) - \text{इ}\right\}\right]^2 + \text{क}$$

अत उपपद्यते यथोक्तम् ॥ ७३ ॥

इदानीं पुनः प्रश्नान्तरविशेषस्योत्तरमाह ।

**याभ्यां कृतिरधिकोनस्तदन्तरं हृतयुतोनमिष्टेन ।**
**तद्दलकृतिरधिकोनाऽधिकयोरधिकोनयो राशिः॥७४॥(८२)**

को राशिरुद्दिष्टराशिभ्यां युतः कृतिर्भवति । वा को राशिरुद्दिष्टराशिभ्यामूनः कृतिर्भवतीति प्रश्ने याभ्यामुद्दिष्टाभ्यामधिको वोनः कृतिर्भवति तदन्तरमिष्टेन हृतं योगप्रश्ने इष्टेनैव युतमूनप्रश्ने इष्टेनैवोनं कार्यम् । यद्यप्यत्र तद्दलस्य कृतिरधिकोद्दिष्टराशिनोना कार्या अधिकयोरुद्दिष्टराश्योः । उद्दिष्टराश्योरूनयोश्चाधिका कार्या । एवं राशिर्भवति ।

अत्रोपपत्तिः । कल्प्यते राशिमानम् = या । यश्च अ–क–राशिभ्यां युतो मूलदः । तथा अ > क तदा प्रश्नानुसारेण

$$\left.\begin{aligned} \text{का}^2 &= \text{या} + \text{अ} \\ \text{नी}^2 &= \text{या} + \text{क} \\ \text{का}^2 - \text{नी}^2 &= \text{अ} - \text{क} \\ \text{का} - \text{नी} &= \text{इ} \\ \therefore\ \text{का} + \text{नी} &= \frac{\text{अ} - \text{क}}{\text{इ}} = \text{ल} \end{aligned}\right\} \quad \begin{aligned} &\text{संक्रमणेन} \\ &\text{का} = \frac{\text{ल} + \text{इ}}{2} \\ &\text{ततः } \text{या} = \text{का}^2 - \text{अ} \end{aligned}$$

$$\left.\begin{aligned} &\text{एवमूनप्रश्ने} \\ \text{का}^2 &= \text{या} - \text{अ} \\ \text{नी}^2 &= \text{या} - \text{क} \\ \text{नी}^2 - \text{का}^2 &= \text{अ} - \text{क} \\ \text{नी} - \text{का} &= \text{इ} \\ \therefore\ \text{नी} + \text{का} &= \frac{\text{अ} - \text{क}}{\text{इ}} = \text{ल} \end{aligned}\right\} \quad \begin{aligned} &\text{संक्रमणेन} \\ &\text{का} = \frac{\text{ल} - \text{इ}}{2} \\ &\text{ततः } \text{या} = \text{का}^2 + \text{अ} \end{aligned}$$

अत उपपद्यते ॥ ७४ ॥

# अथोदाहरणानि ।

तत्रादौ वर्गप्रकृत्युदाहरणम् ।

**राशिकलाशेषकृतिं द्विनवतिगुणितां त्र्यशीतिगुणितां वा।**
**सैकां ज्ञदिने वर्गं कुर्वन्नावत्सराद्गणकः ॥ ७५ ॥ (६७)**

राशिशेषकृतिं द्विनवति–९२ गुणितां सैकां वा कलाशेषकृतिं त्र्यशीति–८३ गुणितां सैकां बुधदिने आवत्सराद्वर्गं कुर्वन्नपि स गणकोऽस्तीत्यहं मन्ये ।

प्रथमप्रश्ने प्र ९२ क्षे १

ततो वर्गप्रकृतिसूत्रतः

| | | | |
|---|---|---|---|
| | क १ | ज्ये १० | क्षे ८ |
| | क १ | ज्ये १० | क्षे ८ |
| भावनया, | क २० | ज्ये १९२ | क्षे ६४ |
| | क $\frac{5}{2}$ | ज्ये २४ | क्षे १ |
| | क $\frac{5}{2}$ | ज्ये २४ | क्षे १ |
| भावनया, | क १२० | ज्ये ११५१ | क्षे १ |

अतो राशिशेषम् = १२० । एवं भावनया बहुधा राशिशेषं स्यादतः कुट्टकविधिनाऽभीष्टाहेऽहर्गणः स्यात् ।

द्वितीयप्रश्ने गु ८३ क्षे १

| | | | |
|---|---|---|---|
| ततः | क १ | ज्ये ९ | क्षे २ |
| | क १ | ज्ये ९ | क्षे २ |
| | क १८ | ज्ये १६४ | क्षे ४ |
| | क ९ | ज्ये ८२ | क्षे १ |

भावनया कनिष्ठज्येष्ठयोरानन्त्यम् ।

ततः कलाशेषम् = ९ । कलाशेषात् कुट्टकविधिनाऽभीष्टदिनेऽहर्गणः स्यात् ॥ ७५ ॥

इदानीमन्यौ प्रश्नावाह ।

**सूर्यविलिप्ताशेषं पञ्चभिरूनाहतं तथा दशभिः ।**
**वर्गो बृहस्पतिदिने कुर्वन्नावत्सराद्गणकः ॥७६॥ (८६)**

सूर्यविलिप्ताशेषं पञ्चभिरूनं पञ्चाहतं च बृहस्पतिदिने वर्गो भवति । वा विलिप्ताशेषं तथैव दशभिरूनं दशभिराहतं च वर्गो भवतीति प्रश्नमावत्सरात् कुर्वन्नपि स गणकोऽस्तीति ।

प्रथमप्रश्ने विलिप्ताशेषम् = या । ततः प्रश्नानुसारेण

५ या − २५ अयं वर्ग इष्टवर्गेण समः कृतः ।

ततः $५ या - २५ = इ^२ \therefore या = \frac{इ^२ + २५}{५}$

यदि इ = ५ तदा या = १० ।

एवं द्वितीयप्रश्ने $१० या - १०० = इ^२ \therefore या = \frac{इ^२ + १००}{१०}$

यदि इ = १० तदा या = २० । विलिप्ताशेषात् कुट्टकेनाहर्गणानयनं सुगमम् ॥ ७६ ॥

इदानीमन्यान् प्रश्नानाह ।

**भगणादिशेषवर्गं त्रिभिर्गुणं संयुतं शतैर्नवभिः ।**
**कृतिमष्टशतोनं वा कुर्वन्नावत्सराद्गणकः ॥७७॥ (७०)**

भगणादीनां भगण राशि भाग कला विकलानां शेषवर्गं त्रिभिर्गुणं नवभिः शतैः संयुतं वाऽष्टशतोनं वर्गमावत्सरात् कुर्वन्नपि स गणकोऽस्तीति ।

अत्र भगणादिशेषमानम् = या । ततः प्रश्नालापेन प्रथमप्रश्ने $३ या^२ + ९००$ अयं वर्गः । अतः ७० सूत्रेण

क १ ज्ये २ क्षे १

क ३० ज्ये ६० क्षे ९००

भावनया कनिष्ठज्येष्ठयोरानन्त्यम् ।

अतो भगणादिशेषमानम् = ३० । द्वितीयप्रश्नेऽप्येवम् ।

$३ या^{२} - ८००$ अयं वर्गः ।

अतः क १ ज्ये १ क्षे २

क २० ज्ये २० क्षे ८००

रूपक्षेपपदाभ्यां भावनयाऽत्रापि पदयोरानन्त्यम् ।

अतो भगणादिशेषम् = २० ॥ ७७ ॥

इदानीमन्यं प्रश्नमाह ।

**भगणादिशेषवर्गं चतुर्गुणं पञ्चषष्टिसंयुक्तम् ।**
**षष्ट्यूनं वा वर्गं कुर्वन्नावत्सराद्गणकः ॥ ७८ ॥ (७४)**

स्पष्टार्थम् ।

प्रथमप्रश्ने भगणादिशेषमानम् = या । ततः प्रश्नानुसारेण ।

$४ या^{२} + ६५$ अयं वर्गः ।

अत्र ६९ सूत्रतः । इष्टम् = ५ । $\frac{६५}{५} = १३$

$१३ - ५, ८$ । $\frac{८}{२} = ४$ । $\sqrt{\frac{४}{४}} = २$ । अतो भगणादिशेषम् = २

रूपक्षेपपदाभ्यां भावनयाऽऽनन्त्यम् ।

द्वितीयप्रश्नेऽप्येवं $४ या^{२} - ६०$ अयं वर्गः ।

अत्रेष्टम् = २ । $\frac{६०}{२} = ३०$ । $३० + २ = ३२$ । $\frac{३२}{२} = १६$ ।

$\sqrt{\frac{१६}{४}} = ८$ । अतोऽत्र भगणादिशेषम् = ८ । एवं बुद्धिमता ऋणक्षेपे गुणके वर्गे चाधिकसङ्ख्यातः कनिष्ठानयनं कार्यमिति ॥ ७८ ॥

इदानीमन्यं प्रश्नमाह ।

**इष्टभगणादिशेषं द्विनवत्यूनं त्र्यशीतिसंगुणितम् ।**
**रूपेण युतं वर्गं कुर्वन्नावत्सराद्गणकः ॥ ७९ ॥ (८७)**

इष्टभगणादिशेषं द्विनवतिभिः—९२ ऊनं कार्यं शेषं त्र्यशीति—८३ संगुणितं रूपेण युतं च वर्गमावत्सरात् कुर्वन्नपि स गणकोऽस्तीति ।

इष्टभगणादिशेषमानम् = या । ततः प्रश्नालापेन

$$\text{८३}(\text{या} - \text{९२}) + \text{१} = \text{८३ या} - \text{८३} \times \text{९२} + \text{१}$$

$$= \text{८३ या} - \text{७६३६} + \text{१} = \text{८३ या} - \text{७६३५} = \text{र}^{2} \quad \text{या} = \frac{\text{र}^{2} + \text{७६३५}}{\text{८३}}$$

अत्र यदि र = १ तदा या = ९२ इदमेव भगणादिशेषमानम् ॥ ७९ ॥

इदानीमन्यौ प्रश्नावाह ।

**अधिमासशेषवर्गं त्रयोदशगुणं त्रिभिः शतैर्युक्तम् ।**
**त्रिघनोनं वा वर्गं कुर्वन्नावत्सराद्गणकः ॥ ८० ॥ (७२)**

त्रिघनेन सप्तविंशत्योनम । शेष स्पष्टार्थम ।

अत्राधिमासशेषमानम = या । तत प्रश्नालापेन

प्रथमे प्रश्ने $\text{१३ या}^{2} + \text{३००}$ । अय वर्ग ।

अत्र वर्गप्रकृत्या, क १ ज्ये ४ क्षे ३

क १० ज्ये ४० क्षे ३००

अत्र रूपक्षेपपदाभ्या भावनयाऽऽनन्त्य कार्यम् ।

अत्र कनिष्ठ-१० मधिमासशेषमानम ।

अत्र यदि क १ ज्य ३ क्षे ४ । तत ६८ सूत्रेण ।

$$\text{रूपक्षेपे कनिष्ठम्} = \frac{\text{क ज्य}(\text{ज्य}^{2} + \text{१})(\text{ज्य}^{2} + \text{३})}{\text{२}} = \frac{\text{१} \times \text{३}(\text{३}^{2} + \text{१})(\text{३}^{2} + \text{३})}{\text{२}}$$

$$= \frac{\text{३} \times \text{१०} \times \text{१२}}{\text{२}} = \text{१८०} \text{ ।}$$

$$\text{ज्येष्ठम्} = \left\{\text{ज्ये}^{2} + \text{२}\right\} \left\{\frac{(\text{ज्ये}^{2} + \text{३})(\text{ज्ये}^{2} + \text{१})}{\text{२}} - \text{१}\right\}$$

$$= \left\{\text{३}^{2} + \text{२}\right\} \left\{\frac{(\text{३}^{2} + \text{३})(\text{३}^{2} + \text{१})}{\text{२}} - \text{१}\right\}$$

$$= \text{११} \times \text{५९} = \text{६४९}$$

एव रूपक्षेपे पदे प्रसाध्य भावनयाऽऽनन्त्य कार्यम् ।

द्वितीयप्रश्नेऽप्येवम $\text{१३ या}^{2} - \text{२७}$ अय वर्ग ।

अत क १ ज्ये ४ क्षे ३

क १ ज्ये २ क्षे ९

भावनया, क ६ ज्ये २१ क्षे २७

अत्रापि रूपक्षेपपदाभ्यां भावनयाऽनन्त्यं कार्यम् ।

अत्राधिशेषमानं व्यक्तम् = ६ ॥ ८० ॥

इदानीमन्यौ प्रश्नावाह ।

**इन्दुविलिप्ताशेषं सप्तदशगुणं त्रयोदशगुणं चापि ।**
**पृथगेकयुतं वर्गं कुर्वन्नावत्सराद्गणकः ॥ ८१ ॥ (७६)**

स्पष्टार्थम् ।

अत्र ७१ सूत्रतः । गु$_1$ = १७ । गु$_2$ = १३,

ततः विलिप्ताशेषम् = $\frac{८(गु_1 + गु_2)}{(गु_1 \sim गु_2)^2} = \frac{८(१७ + १३)}{(१७ - १३)^2} = \frac{८ \times ३०}{४^2}$

$= \frac{८ \times ३०}{४ \times ४}$, = १५ ।

इदानीमन्यं प्रश्नमाह ।

**अधमासशेषवर्गं द्वादशगुणितं शतेन संयुक्तम् ।**
**त्रिभिरूनं वा वर्गं कुर्वन्नावत्सराद्गणकः ॥ ८२ ॥ (७७)**

स्पष्टार्थम् ।

प्रथमप्रश्ने सधशेषमानम् = या । ततः प्रश्नानुसारेण

१२ या$^2$ + १०० अयं वर्गः ।

वर्गप्रकृत्या, क १ ज्ये ४ क्षे ४

क ५ ज्ये २० क्षे १०० ।

अथ चतुःक्षेपपदाभ्यां ६७ सूत्रेण

रूपक्षेपे क = $\frac{क(ज्ये^2 - १)}{२} = \frac{१(४^2 - १)}{२} = \frac{१५}{२}$ ।

ज्ये = $\frac{ज्ये(ज्ये^2 - ३)}{२} = \frac{४(४^2 - ३)}{२} = २६$ ।

आभ्यां भावनयाऽनन्त्यं कार्यम् । अत्र क्षेपशेषम् = ५ ।

द्वितीयप्रश्नेऽप्येवम् । १२ या$^2$ − ३ वर्गः ।

अतः क १ ज्ये ३ क्षे $\dot{३}$

रूपक्षेपपदाभ्यामनयोरानन्त्यं कार्यम् । अत्र सधशेषम् = १ ।

इदानीमन्यं प्रश्नमाह ।

**बुदिनेऽर्ककलाशेषं गुरुदिनविकलावशेषयुक्तोनम् ।**
**वर्गौ वधं च सैकं कुर्वन्नावत्सराद्गणकः ॥ ८३ ॥ (८४)**

बुधदिनेऽर्कस्य यत् कलाशेषं तद्गुरुदिनजेनार्कस्य विकलावशेषेण युक्तमूनं च वर्गौ तथा तयोः कलाविकलाशेषयोर्वधं सैकं च वर्गमावत्सरात् कुर्वन्नपि स *गणकोऽस्तीति* ।

अत्र ७२ सूत्रेण कल्पित एको वर्गः १६ । अन्यश्च ४ ।

ततः १६ + ४ = २० । १६ − ४ = १२ ।

$\frac{२० + १२}{\left(\frac{२० - १२}{२}\right)^२} = \frac{३२}{१६} = २$ । अनेन गुणितौ

२० । १२ जातौ राशी ४० । २४ । अत्र प्रथमं ४० कलाशेषं द्वितीयं लघु २४ विकलाशेषम् । कलाशेषात् कुट्टकेन बुधदिनेऽहर्गणः साध्यः । विकलाशेषाच्च कुट्टकेन गुरुदिनेऽहर्गणः साध्य इति ।

इदानीमन्यं प्रश्नमाह ।

**विकलाशेषं सहितं त्रिनवत्या सप्तषष्टिहीनं च ।**
**भानोर्बुधदिने वर्गं कुर्वन्नावत्सराद्गणकः ॥ ८४ ॥ (८५)**

भानोर्बुधदिने यद्विकलाशेषं तत् त्रिनवत्या सहितं वर्गं तथा सप्तषष्टिहीनं च वर्गमावत्सरात् कुर्वन्नपि स गणकोऽस्तीति ।

अत्र ७३ सूत्रेण इष्टम् = ४

$\frac{९३ + ६७}{४} = \frac{१६०}{४} = ४०$ ।

$४० - ४ = ३६$ । $\frac{३६}{२} = १८$ । $१८^२ = ३२४$ ।

३२४ + ६७ = ३९१ इदं विकलाशेषमतः कुट्टकेन बुधदिनेऽहर्गणानयनं सुगमम् ॥ ८४ ॥

इदानीमन्यौ प्रश्नावाह ।

**बुधदिनेऽर्ककलाशेषं द्वादशभिः संयुतं त्रिषष्ट्या च ।**
**षष्ट्याऽष्टाभिश्चोनं कुर्वन्नावत्सराद्गणकः ॥ ८५ ॥ (८६)**

बुधदिनेऽर्कस्य कलाशेषं यत् तद्द्वादशभिः संयुतं वर्गं तथा त्रिषष्ट्या संयुतं च वर्गमावत्सरात् कुर्वन्नपि स गणकोऽस्तीत्येकः प्रश्नः । वा तत् कलाशेषं षष्ट्या–६० नं वर्गं तथाऽष्टाभिश्चोनं वर्गमावत्सरात् कुर्वन्नपि स गणकोऽस्तीति द्वितीयः प्रश्नः ।

अत्र ७४ सूत्रेण ।

प्रथमप्रश्ने इष्टं ३ प्रकल्प्य

$\frac{६३ - १२}{३} = \frac{५१}{३} = १७$

$\frac{१७ + ३}{२} = \frac{२०}{२} = १० । १०^{२} = १००$

१००–६३=३७ इदमेव कलाशेषम् ।

द्वितीयप्रश्ने इष्टं २ प्रकल्प्य

$\frac{६० - ८}{२} = \frac{५२}{२} = २६ ।$

$\frac{२६ - २}{२} = \frac{२४}{२} = १२ । १२^{२} = १४४ ।$

१४४ + ६० = २०४ इदमेव कलाशेषम् ॥ ८५ ॥

इदानीमन्यान् प्रश्नानाह ।

**इन्दुविलिप्ताशेषादुरविलिप्ताशेषमंशशेषं वा ।**
**अथवा मध्यममिष्टं कुर्वन्नावत्सराद्गणकः ॥ ८६ ॥ (८८)**

इन्दुविलिप्ताशेषात् रविलिप्ताशेषं वाऽंशशेषमथवाऽभीष्टं मध्यमं ग्रहमावत्सरात् कुर्वन्नपि स गणकोऽस्तीति प्रश्नत्रयम् ।

अत्र चन्द्रविकलाशेषात् कुट्टकविधिनाऽहर्गणज्ञानम् । तस्मादिष्टमध्यानयनं रवेः कलाद्यशेषानयनं च सुगमम् ॥ ८६ ॥

इदानीमन्यात् प्रश्नानाह ।

**जीवविलिप्ताशेषात् कुजमिन्दुं भौमलिप्तिकाशेषात् ।**
**रविमिन्दुभागशेषात् कुर्वन्नावत्सराद्गणकः ॥ ८७ ॥ (८९)**

गुरुविलिप्ताशेषात् कुजं भौमकलाशेषाच्चन्द्रं चन्द्रभागशेषाद्रविमावत्सरात् कुर्वन्नपि स गणकोऽस्तीति ।

गुरोर्विकलाशेषाद्वा भौमकलाशेषादथवा चन्द्रभागशेषात् कुट्टकेनाहर्गणज्ञानं ततोऽहर्गणादभीष्टग्रहज्ञानं स्फुटमेवेति ॥ ८७ ॥

इदानीं कलावशेषार्थं पूर्वप्रश्नोत्तरमाह ।

**इष्टग्रहेष्टशेषाद्द्युगणो गतनिरपवर्त्तसङ्गुणितैः ।**
**छेददिनैरधिकोऽस्मादन्यग्रहशेषमिष्टो वा ॥ ८८ ॥ (९०)**

इष्टग्रहस्येष्टकलाविकलादिशेषात् कुट्टकविधिना द्युगणोऽहर्गणः साध्यः । स च गतनिरपवर्त्तसङ्गुणितैश्छेददिनैरिष्टाहतदृढकुदिनैरधिकोऽनेकधा स्यादस्मादहर्गणादन्यग्रहस्य कलाविकलादिशेषं वाऽभीष्टो मध्यमग्रह एव साध्य इति स्फुटमेव सिद्धान्तविदाम् ॥ ८८ ॥

इदानीमुद्दिष्टाहर्गणे ग्रहयोर्भगणादिशेषे ये ते एव पुनः कस्मिन्नहर्गणे इत्यस्योत्तरमाह ।

**निश्छेदभागहारौ ग्रहयोर्विपरीतौ ग्रहयोर्युगणात् ।**
**यस्मात् तन्निश्छेदेनोद्धृतयोर्लब्धसंगुणितौ ॥ ८९ ॥**

(निश्छेदभागहारौ ग्रहयोर्भगणादिशेषयोर्युगणात् ।
यस्मात् तन्निश्छेदेनोद्धृतयोर्लब्धसङ्गुणितौ ॥ ८९ ॥) (९१)

**निश्छेदभागहारौ विपरीतौ तद्युतात् पुनस्तस्मात् ।**
**शेषे युगणादेवं ग्रहादीनां प्राग्वदिष्टदिने ॥ ९० ॥ (९२)**

यस्माद्द्युगणादहर्गणाद्ग्रहयोर्ये भगणादिशेषे भवतस्तयोर्यौ निश्छेदभागहारौ स्वस्वदृढकुदिनसंज्ञौ तयोर्निश्छेदेन महत्तमापवर्त्तेनोद्धृतयोस्तयोर्दृढकुदिनसंज्ञयोः यतो ये लब्धे ताभ्यां विपरीतौ निश्छेदभागहारौ गुणितौ । महत्तमापवर्त्तभक्तात् प्रथमदृढकुदिनसंज्ञाद्यल्लब्धं तेन

द्वितीयदृढकुदिनमानं गुण्यं द्वितीयलब्धेन च प्रथमदृढकुदिनमानं गुण्य-मित्यर्थः । एवं समच्छेदौ भवतः । तद्युतात् तस्मात् पूर्वसाधिताद्युगु-भगणात् पुनर्ग्रहयोस्त एव भगणादिशेषे भवतः । उद्दिष्टाहर्गणः पूर्वसा-धितसमच्छेदेन युतस्तदा योगसमेऽहर्गणे पुनस्त एव ग्रहयोर्भगणादिशेषे भवत इत्यर्थः । एवं त्र्यादीनां ग्रहाणामिष्टदिने यानि भगणादिशेषाणि तानि पुनः कदेति प्रश्नोत्तरं प्राग्वत् कार्यम् । द्वयोर्निरछेदभागहाराभ्यां पूर्ववत् समच्छेदं विधाय नूतनो निरछेदभागहारः कल्प्यः । पुनरस्य तृतीयदृढकुदिनस्य च लघुतमापवर्त्योऽन्वेषणीयः । एवमग्रेऽपि कर्म का-र्यम् । अन्ते सर्वदृढकुदिनानां यो लघुतमापवर्त्यस्तेन युतोऽहर्गणः कार्यः । योगसमेऽहर्गणे च पुनस्तान्येव शेषाणि भवन्ति ।

अत्रोपपत्तिः । यदि ग्रहाणां दृढभगणाः $भ_{१}$, $भ_{२}$, $भ_{३}$ दृढकुदिनानि च $कु_{१}$, $कु_{२}$, $कु_{३}$ कल्प्यन्ते तथा दृढकुदिनानां लघुतमापवर्त्यश्च ल तदा

अ + लह अस्मिन्नहर्गणे दृढभगणगुणे दृढकुदिनहृते प्रथमवर्गे निरवयवभगणा लभ्यन्ते ते प्रयोजनाभावात्त्यक्ता अत उद्दिष्टाह-र्गणाद्ग्रहगणशेषं तदेव अ + लह अस्मादपि । आचार्येणात्र द्वयोर्द्वयोर्नि-रछेदभागहारयोर्महत्तमापवर्तेनापवर्तितयोः सतोर्यौ लब्धी ताभ्यामन्योन्य-हारौ सङ्गुण्य लघुतमापवर्त्यं प्रोत्पादित इति गणितविदां सुविदि-तमेवेति ॥ ८९–९० ॥

इदानीमन्यान् प्रश्नानाह ।

युगणमवमावशेषाद्रविचन्द्रौ मध्यमौ स्फुटावथ वा ।
एवं तिथिं ग्रहं वा कुर्वन्नावत्सराद्गणकः ॥ ९१ ॥ (९५)

अवमावशेषात् अवशेषात् युगणमहर्गणं वा मध्यमौ रविचन्द्रौ अथ वा स्फुटौ रविचन्द्रौ एवं तिथिं वा ग्रहमिष्टग्रहं बीजाद्यनन्तरमवाक्स-रात् कुर्वन्नपि स गणकोऽस्तीति पञ्च प्रश्ना अत्र ॥ ९१ ॥

इदानीमन्यान् प्रश्नानाह ।

एकदिनमवमशेषं पञ्चचमेकरविचन्द्रभगणानाम् ।

शुध्यति भूदिनभक्तं व्येकं चान्द्रैस्तदुक्तिरियम् ॥६२॥ (६३)

एकादिनसम्बन्ध्यवमशेषं यद्गुणं येन गुणमेकोनं भूदिनभक्तं शुध्यति वाऽवमशेषं यद्गुणं रविभगणोनं भूदिनभक्तं शुध्यति । वाऽवमशेषं यद्गुणं चन्द्रभगणोनं भूदिनभक्तं शुध्यति । वाऽवमशेषं यद्गुणं व्येकं चान्द्रैश्चान्द्रदिनैर्भक्तं शुध्यति । यथेयं वक्ष्यमाणा तेषां प्रश्नानामुक्तिरुत्तरोक्तिरिति ॥ ६२ ॥

अथादौ प्रथमप्रश्नोत्तरमाह ।

इषुशरकृताष्टदिग्भिः १०८४५५
सङ्गुणितादवमशेषकाद्रूपात् ।
रूपाष्टवेदरसशू-
न्यशरगुणै-३५०६४८१ र्दिनगणः शेषम् ॥६३॥ (६४)

अवमशेषादिषुशरकृताष्टदिग्भि १०८४५५ सङ्गुणितात् रूपाष्टवेदरसशून्यशरगुणै-३५०६४८१ र्भक्ताच्छेषं दिनगणोऽहर्गणो भवति ।

अत्रोपपत्तिः । कल्पदृढावमानि दिनगणगुणानि दृढावमशेषोनानि कल्पदृढकुदिनहृतानि फलं निरग्रं गतावमानि । अतो दृढकल्पावमानि भाज्यं दृढावमशेषमृणक्षेपं दृढकल्पकुदिनानि हारं प्रकल्प्य यो गुणः सोऽहर्गणः स्यात् । तत्र लाघवार्थमाचार्येण रूपशुद्धौ शरशरवेदाष्टपक्षाभ्रमितः स्थिरकुट्टकः कृतः । रूपाष्टवेदादि – संख्या कल्पदृढकुदिनानि तदानयनं च ।

$$\frac{\text{कअ}}{\text{ककुदि}} = \frac{२५०८२५५००००}{१५७७९१६४५००००} = \frac{५०००० \times ५०१६५१}{५०००० \times ३१५५८३२९}$$

$$= \frac{५०००० \times ९ \times ५५७३९}{५०००० \times ९ \times ३५०६४८१} = \frac{५५७३९}{३५०६४८१} = \frac{\text{दृअवि}}{\text{दृकुदि}}$$

अथ प्रसङ्गाद्दृढरविभगणकुदिनानयनं प्रदर्श्यते ।

$$\frac{\text{करभ}}{\text{ककुदि}} = \frac{४३२००००००००}{१५७७९१६४५००००} = \frac{५०००० \times ८६४००}{५०००० \times ३१५५८३२९}$$

$$= \frac{५०००० \times ९ \times ९६००}{५०००० \times ९ \times ३५०६४८१}$$

$$= \frac{५०००० \times ६ \times ३ \times ३२००}{५०००० \times ६ \times ३ \times ११६८८२७} = \frac{३२००}{११६८८२७} = \frac{दृगभ}{दृकुदि} ।$$

एवम्

$$\frac{चकभ}{चकुदि} = \frac{५७७५३३०००००}{१५७७९१६४५००००} = \frac{५०००० \times ११५५०६६}{५०००० \times ३१५५८३२९}$$

$$= \frac{५०००० \times ३ \times ३८५०२२}{५०००० \times ३ \times १०५१९४४३} = \frac{३८५०२२}{१०५१९४४३} = \frac{दृचभ}{दृकुदि} ।$$

इदानीमधमशेषाद्रव्यानयनमाह ।

**जिनरसगोऽङ्घिरद—३२४९६२४ गुणात्**
**शशिवसुकृतरसखभूतराम ३५०६४८१ हृतात् ।**
**दृष्टावमशेषाद्यत्**
**शेषं रविभगणशेषं तत् ॥ ९४ ॥ (९५)**

स्पष्टार्थम् ।

अत्रोपपत्तिः ।

अत्र पूर्वप्रकारेणाहर्गणः = १०८४५५चशे − ३५०६४८१ह । अयं रवि-
दृढभगणगुणस्तद्दृढकुदिनगुणो जातो रविभगणात्मकः

$$= \frac{३२०० \times १०८४५५चशे - ३२०० \times ३५०६४८१ह}{११६८८२७}$$

$$= \frac{३४७०५६००० \; चशे}{११६८८२७} - ३२०० \times ३ह$$

$$= \frac{१०८३२०८ \; चशे}{११६८८२७} + ९६ \; चशे - ९६०० ह$$

अतो दृढभगणशेषम् = १०८३२०८चशे − ११६८८२७ह, । आचा-
र्येण गुणहरौ त्रिभिः सङ्गुण्य दृढचयशेषसम्बन्धिदृढकुदिनहरे रविभगणशे-
षम् = ३२४९६२४चशे − ३५०६४८१ ह, । इद साधितमत एव सर्वदा
त्रिभिरपवर्त्यं तदा वास्तवमर्कदृढभगणशेषं ज्ञेयम् । यद्याचार्यानीत भग-
णशेषं त्रिभिर्नापवर्त्यं तदा प्रश्नः खिलो ज्ञेय इति सुगणकैर्भृशं विचि-
न्त्यम् ॥ ९४ ॥

इदानीमवमशेषात् तिथ्यानयनं करोति ।

**गोऽगेन्दुखेश-११०१७९ गुणिताद्-**
**भक्तान्नखपञ्चयमरसेषुगुणैः ३५६२२२० ।**
**शेषमवमावशेषात्**
**तिथयोऽवमशेषकाब्धिकलम् ॥ ९५ ॥ (९६)**

अवमशेषकाब्धिकलं वर्तमानतिथेर्भुक्तं मानं साध्यम् । शेषं स्पष्टम् ।

अत्रोपपत्तिः । चान्द्रेभ्यो यान्यवमानि यत्र तच्छेषं तान्यवमानि तद्देव शेषं च सावनेभ्य इति 'सावनान्यवमानि स्युश्चान्द्रेभ्यः साधितानि चेत्'–इत्यादिमिताक्षरायां स्वगोलाध्याये भास्करेण स्फुटीकृतम् । अतो गतचन्द्रदिनैः कल्पावमानि गुणानि कल्पचन्द्रदिनैर्भक्तानि फलं गतावमानि शेषं तपशेषम् ।

अतः $\frac{\text{कअवदि} \times \text{गचादि} - \text{अशे}}{\text{कचादि}}$ । अयमभिन्नः ।

अतः तथदिनानि भाज्यं तपशेषमृणक्षेपं चान्द्रदिनानि हारं प्रकल्प्य यः कुट्टकः साध्यते तान्येव चान्द्रदिनानि गततिथयो भवन्ति । तत्राचार्येण लाघवार्थे रूपविशुद्धौ स्थिरकुट्टकः साधितः स एवावमशेषगुणकः पठितः । अथ दृढावमचन्द्रदिनज्ञानार्थे न्यासः ।

$$\frac{\text{कअवदि}}{\text{कचादि}} = \frac{२५०८२५५००००}{१६०२९९९००००००} = \frac{५०००० \times ५०१६५१}{५०००० \times ३२०५९९८०}$$

$$= \frac{५०००० \times ९ \times ५५७३९}{५०००० \times ९ \times ३५६२२०} = \frac{५५७३९}{३५६२२०} = \frac{\text{दृअवदि}}{\text{दृचादि}}$$

अतो दृढचान्द्रदिनान्येव हर इति सर्वं स्फुटम् । गणितागतमवमशेषम् ५०००० × ९ अनेन विभज्य लब्धमत्र दृढावमशेषं सुधीभिर्ज्ञेयमिति ।

९१ आर्यायामस्य येऽवशिष्टा. प्रश्नास्तेषामुत्तराणि तपशेषावदर्शमानीय ततोऽहर्गणात् कार्याणि । ९२ आर्यायां च ये प्रश्नास्तेषामुत्तराणि कुट्टकविधिना स्फुटानि । आचार्येणापीह स्फुटत्वात् तेषामुत्तराणि नोक्तानीति ॥ ९५ ॥

इदानीं पुनः प्रश्नान्तरं तदुत्तरं चाह ।

**भागकलाविकलैक्यं दृष्ट्वा विकलान्तरं च के शेषे ।**
**ऐक्यं द्विधाऽन्तराधिकहीनं च द्विभाजितं शेषे ॥ ९६ ॥ (९७)**

भागविकलं भागशेषम् । कलाविकलं कलाशेषम् । अनयोरैक्यं तथाऽनयोर्विकलयोः शेषयोरन्तरं च दृष्ट्वा शेषे ते द्वे के स्त इति प्रश्नः । अथ तदुत्तरमाहैक्यमिति ।

ऐक्यं द्विधा स्थाप्यमन्तरेणैकत्राधिकमन्यत्र हीनं कार्यं ततो द्वि-भाजितं दलितं शेषे भवतः ।

अत्रोपपत्तिः । सङ्क्रमणगणितेन स्फुटा ॥ ९६ ॥

इदानीं पुनः प्रश्नान्तरं तदुत्तरं चाह ।

**तद्वर्गान्तरमाद्ये तदन्तरं चान्तरोद्धृतयुतोनम् ।**
**वर्गान्तरं विभक्तं द्वाभ्यां शेषे ततो द्युगणः ॥ ९७ ॥ (९८)**

आद्येऽनन्तरोक्ते प्रश्ने यदि तयोः शेषयोर्वर्गान्तरं तथा तयोरन्तरं चोद्दिष्टं भवेत् तदा वर्गान्तरमन्तरेणोद्धृतं लब्धं चान्तरेण युतमूनं च कार्यम् । ततो द्वाभ्यां विभक्तं शेषे भवतः । ततो भागकलाशेषाभ्यां प्राग्वत् कुट्टकविधिनाऽहर्गणः साध्यः ।

अत्रोपपत्तिः । विषमकर्मणा स्फुटा ॥ ९७ ॥

अत्र कोलब्रूकानुवादानुसारेणैकार्यात्रुटिः सा च ।

**(कृतिसंयोगाद् द्विगुणाद्युतिवर्गं प्रोह्य शेषमूलं यत् ।**
**तेन युतोनो योगो दलितः शेषे पृथगभीष्टे ॥ ९८ ॥) (९९)**

एव भवितुमर्हति ।

यदाऽनन्तरोक्ते प्रश्ने शेषयोर्वर्गयोग शेषयोगश्चोद्दिष्टो भवेत् तदा द्विगुणात् कृतियोगाच्छेषयोर्युतिवर्गे प्रोह्य शेषस्य यन्मूलं भवेत् तद्भागकलाशेषयोरन्तरं भवेत् तेन योगो युतोनो दलितः पृथगभीष्टे भाग-कलयोः शेषे भवतः ।

अत्रोपपत्तिः । अत्र प्रश्नानुसारेण ।

$$भाशे^2 + कशे^2 = वयु$$

$$\text{भाशे} + \text{कशे} = \text{यु}$$

$$\therefore\ २\ \text{भाशे}^{२} + २\ \text{कशे}^{२} = २\ \text{वयु}$$

$$\text{भाशे}^{२} + २\text{भाशे} \times \text{कशे} + \text{कशे}^{२} = \text{यु}^{२}$$

द्वयोरन्तरेण

$$\text{भाशे}^{२} - २\text{भाशे} \times \text{कशे} + \text{कशे}^{२}$$

$$= (\text{भाशे} - \text{कशे})^{२} = २\ \text{वयु} - \text{यु}^{२}$$

$$\therefore\ \text{भाशे} - \text{कशे} = \sqrt{२\ \text{वयु} - \text{यु}^{२}}$$

अवशिष्टोपपत्तिः सङ्क्रमणेन स्फुटा ॥ ९८ ॥

इदानीं पुनः प्रश्नान्तरस्योत्तरमाह ।

**शेषवधाद् द्विकृतिगुणात् शेषान्तरवर्गसंयुतान्मूलम् ।**
**शेषान्तरोनयुक्तं दलितं शेषे पृथगभीष्टे ॥ ९९ ॥ (१००)**

यदाऽनन्तरोक्त प्रश्न भागकलाशेषयोरन्तर वधश्चेति द्वयमुद्दिष्ट भवेत् तदा द्विकृतिगुणात् । द्वयोर्या कृतिर्वर्गस्तेनार्थाद्वेदे-४ गुणाच्छेष-वधाच्छेषान्तरवर्गसयुतान्मूल ग्राह्यम् । तच्छेषान्तरेणोन युक्त दलित च पृथगभीष्टे भागकलाशेषे भवतः ।

अत्रोपपत्तिः । अत्र प्रश्नानुसारेण

$$\text{भाशे} - \text{कशे} = \text{अ}$$

$$\text{भाशे} \times \text{कशे} = \text{व}$$

$$\therefore\ (\text{भाशे} - \text{कशे})^{२} = \text{भाशे}^{२} - २\ \text{भाशे} \times \text{कशे} + \text{कशे}^{२} = \text{अ}^{२}$$

$$४\ \text{भाशे} \times \text{कशे} \qquad = ४\ \text{व}$$

द्वयोर्योगेन

$$\text{भाशे}^{२} + २\ \text{भाशे} \times \text{कशे} + \text{कशे}^{२} = (\text{भाशे} + \text{कशे})^{२} = \text{अ}^{२} + ४\ \text{व}$$

मूलग्रहणेन, $\text{भाशे} + \text{कशे} = \sqrt{\text{अ}^{२} + ४\ \text{व}}$

शेषवासना सङ्क्रमणेन स्फुटा ॥ ९९ ॥

इदानीं छात्रानुपदेशयति ।

***इदिधात्रममी प्रश्नाः प्रश्नानन्यान् सहस्रशः कुर्यात् ।**

* कुम्भात्रममी प्रश्ना -इति पाठ साधु ।

**अन्यैर्दत्तान् प्रश्नानुक्त्यैवं साधयेत् करणैः ॥ १०० ॥ (१०१)**

अमी पूर्वोक्ताः प्रश्नाश्छात्राणां सुगमाय हृदये बोधार्थमात्रमेव मया लिखिताः । एतान् बुद्धा बुद्धिमान् सहस्रशोऽन्यान् प्रश्नान् कुर्यात् । एवमुक्त्या पूर्वोक्त्या करणैः साधनप्रकारैश्चान्यैर्दत्तान् प्रश्नानपि बुद्धिमान् साधयेत् प्रश्नोत्तराणीति शेषः ॥ १०० ॥

इदानीं प्रश्नप्रशंसामाह ।

**जनसंसदि दैवविदां तेजो नाशयति भानुरिव भानाम् ।**
**कुट्टाकारप्रश्नैः पठितैरपि किं पुनः शत*शः ॥ १०१ ॥ (१०२)**

गणकः कुट्टाकारप्रश्नैः पठितैरपि जनसंसदि गणकजनसभायां दैवविदां ज्योतिर्विदां तेजो नाशयति भानां भानुरिव । पुनः सूत्रैः किं वक्तव्यमस्ति । प्रश्नपाठैरेव गणको ज्योतिर्विदां मध्ये भानुरिव भवति तत्सूत्रज्ञानेन पुनः किं भवतीति वर्णनातीतमित्यर्थः ॥ १०१ ॥

इदानीमध्यायोपसंहारमाह ।

**प्रतिसूत्रममी प्रश्नाः**
**पठिताः सोद्देशकेषु सूत्रेषु ।**
**आर्याभ्यधिकशतेन च**
**कुट्टश्चाष्टादशोऽध्यायः ॥ १०२ ॥ (१०३)**

**इति श्रीब्राह्मस्फुटसिद्धान्ते कुट्टकाध्यायोऽष्टादशः ॥ १८ ॥**

प्रतिसूत्रं मयाऽमी प्रश्नाः पठिताः । एवं सोदाहरणेषु सूत्रेषु आर्याभ्यधिकशतेनायं कुट्टकनामाऽध्यायोऽष्टादशः ।

मधुसूदनसूनुनोदितो यस्तिलकः श्रीपृथुनेह जिष्णुजोक्ते ।
हृदि तं विनिधाय नूतनोऽयं रचितः कुट्टविधौ सुधाकरेण ॥

इति श्रीकृपालुदत्तसूनुसुधाकरद्विवेदिविरचिते ब्राह्मस्फुटसिद्धान्त-
नूतनतिलके कुट्टकाध्यायोऽष्टादशः ॥ १८ ॥

---

* सूत्रै –इति पाठः साधुः ।

# अथ शङ्कुच्छायादिज्ञानाध्यायः ॥

तत्रादौ प्रश्नानाह ।

**दृष्ट्वा दिनार्धघटिका योऽर्कज्ञोऽस्तांशकान् विजानाति ।**
**उदयान्तरघटिकाभिर्ज्ञाताज्ज्ञेयं स तन्त्रज्ञः ॥ १ ॥**

योऽर्कज्ञो दिनार्धघटिका दृष्ट्वाऽस्तांशकान् विजानाति । एकग्रहस्योदयाद्यावतीभिर्घटिकाभिरन्यो ग्रह उदेति ता उदयान्तरघटिकास्ताभिर्द्वयोरुदययोर्मध्ये यो ज्ञातो ग्रहोऽस्ति तस्माज्ज्ञातादपरं ज्ञेयं ग्रहं वा यो विजानाति स एव तन्त्रज्ञः सिद्धान्तविद्याविदित्यहं मन्ये इति शेषः ॥ १ ॥

इदानीमन्यान् प्रश्नानाह ।

**अस्तान्तरघटिकाभिर्यो ज्ञाताज्ज्ञेयमानयति तस्मात् ।**
**मध्यगतिं युगभगणानानयति ततः स तन्त्रज्ञः ॥ २ ॥**

एकग्रहस्यास्तानन्तरमन्यो ग्रहो यावतीभिर्घटिकाभिरस्तं याति ता अस्तान्तरघटिकास्ताभिर्ज्ञाताच्चैकस्माद्ग्रहादन्यं ज्ञेयं ग्रहं य आनयति । तस्मात् स्पष्टज्ञेयग्रहात् मध्यमगतिं मध्यमं ज्ञेयं ग्रहं च आनयति । ततस्तस्मान्मध्यमज्ञेयाद्युगभगणान् तस्य च आनयति स एव तन्त्रज्ञ इति ॥ २ ॥

इदानीमन्यान् प्रश्नानाह ।

**आनयति यस्तमोरविशशाङ्कमानानि दीपकशिखोच्च्यात् ।**
**शङ्कुतलान्तरभूमिज्ञाने छायां स तन्त्रज्ञः ॥ ३ ॥**

यो राहुरविचन्द्रबिम्बमानान्यानयति । दीपकशिखोच्च्यात् प्रदीपोच्छ्रितेः शङ्कुतलान्तरभूमिज्ञाने प्रदीपतलाच्छङ्कुमूलान्तरं शङ्कुतलान्तरम् । तदेव भूमिरिति शङ्कुतलान्तरभूमिस्तस्या ज्ञाने यश्छायामानयति स एव तन्त्रज्ञः ॥ ३ ॥

इदानीमन्यं प्रश्नमाह ।

**इष्टगृहोच्छ्रयज्ञो यस्तदन्तरज्ञो निरीक्ष्यते तु जले ।**

गृहभित्त्यग्रं दर्शयति दर्पणे वा स तज्ज्ञः ॥ ४ ॥

य इष्टगृहौच्च्यज्ञ आत्मस्थानात् तस्य गृहस्यान्तरज्ञश्च जले गृहभित्त्यग्रं निरीक्षते वा दर्पणे तदग्रं दर्शयति स एव तन्त्रज्ञः ॥ ४ ॥

इदानीमन्यं प्रश्नमाह ।

छायाद्वितीयभागान्तरविज्ञानेन वेत्ति दीपौच्च्यम् ।
शङ्कुच्छायाज्ञो वा भूमेश्छायां स तज्ज्ञः ॥ ५ ॥

यः शङ्कुच्छायाज्ञः (शङ्कोर्ये द्वे छाये ते जानातीति शङ्कुच्छायाज्ञः) छायाद्वितीयभागान्तरविज्ञानेन छायायाः प्रथमच्छायाया द्वितीयभागस्य द्वितीयच्छायाया यदन्तरं तस्य विज्ञानेन दीपौच्च्यं वेत्ति वा भूमेर्भूमिमानाच्छायां वेत्ति स एव तन्त्रज्ञः ॥ ५ ॥

? दृष्ट्वा गृहतलान्तरजाम्भोदृष्ट्वाग्रं गृहस्य भूमिज्ञः ।
वेत्ति गृहौच्च्यं दृष्ट्वा तैलस्थं वा स तज्ज्ञः ॥ ६ ॥

(गृहपुरुषान्तरसलिले यो दृष्ट्वाऽग्रं गृहस्य भूमिज्ञः ।
वेत्ति *गृहौच्च्यं दृष्ट्वा तैलस्थं वा स तन्त्रज्ञः ॥ ६ ॥

पुरुषो द्रष्टा । गृहपुरुषयोरन्तरे मध्ये स्थापितं यत् सलिलं जलं तस्मिन् गृहस्याग्रं दृष्ट्वा यो भूमिज्ञो जले यत्र गृहाग्रस्य प्रतिबिम्बं तस्माद्गृहान्तरं नरान्तरं च यत् तद्भूमिपदेनोच्यते तज्ज्ञो गृहौच्च्यं वेत्ति वा तैलस्थं गृहाग्रं दृष्ट्वा यो भूमिज्ञो गृहौच्च्यं वेत्ति स एव तन्त्रज्ञ इत्यहं मन्ये ॥ ६ ॥

इदानीमन्यं प्रश्नमाह ।

वीक्ष्य गृहाग्रं सलिले प्रसार्य सलिलं पुनः स्वभूज्ञाने ।
आनयति जलाद्भूमिं गृहस्य वौच्च्यं स तज्ज्ञः ॥ ७ ॥

सलिले गृहाग्रं वीक्ष्य सलिलं च तस्मिन्नेव मार्गे स्थानान्तरे प्रसार्य पुनस्तस्मिन् सलिले गृहाग्रं वीक्ष्यात्मसलिलान्तरे ये वेधद्वये ते स्वभूसंज्ञे तयोर्ज्ञाने जलाद्गृहस्यान्तरं भूमिं य आनयति वा गृहस्यौच्च्यं य आनयति स एव तन्त्रज्ञ इत्यहं मन्ये ॥ ७ ॥

---

* अयं पाठः साधु ।

इदानीमन्य प्रश्नमाह ।

ज्ञातैश्छायापुरुषैर्विज्ञाते तोयकुड्ययोर्विवरे ।
कुड्येऽर्कतेजसो यो वेत्त्यारूढिं स तन्त्रज्ञः ॥ ८ ॥

तोयकुड्ययोर्जलभित्त्योर्विवरेऽन्तरे विज्ञाते छायापुरुषैर्ज्ञातैः पुरुषस्योच्छ्रित्या जले तच्छायामानेन च यश्चारूढिं भित्त्युच्छ्रितिं वेत्ति वाऽर्कतेजसोऽर्कप्रकाशतश्छायादिज्ञानं विज्ञायारूढिं वेत्ति स एव तन्त्रज्ञ इत्यहं मन्ये ॥ ८ ॥

## अथोत्तराणि ।

तत्रादौ प्रथमप्रश्नोत्तरमाह ।

इष्टदिवसार्धघटिका घटिकापञ्चदशान्तरप्राणाः ।
तद्दिवसचरप्राणास्तैरर्कं साधयेत् प्राग्वत् ॥ ९ ॥

(इष्टदिवसार्धघटिकापञ्चदशान्तरघटीभवाः प्राणाः ।
तद्दिवसचरप्राणास्तैरर्क *साधयेत् प्राग्वत् ॥ ९ ॥

पञ्चदशेष्टदिनार्धान्तरघटीना ये प्राणास्ते गोलयुक्त्या चरप्राणा भवन्ति । तैश्चरासुभिरर्कात् क्रान्तिज्ञानेन च प्राग्वत् त्रिप्रश्नोत्तराध्याय विधिना गणकोऽवमतांशान् साधयेत् ॥ ९ ॥

इष्टानीमुदयान्तरघटिकाभिस्तथास्तान्तरघटिकाभिरित्यादिप्रश्नद्वयस्योत्तरमाह ।

ज्ञातज्ञेयग्रहयोरुदयान्तरनाडिकाभिरधिकोनः ।
उदयैर्ज्ञातो ज्ञाताज्ज्ञेयः प्रागपरयोर्ज्ञेयः ॥ १० ॥
ज्ञातः सभार्धं उदयैरस्तान्तरनाडिकाभिरधिकोनः ।
ज्ञातात् पूर्वापरयोर्ज्ञेयो भार्धान्विते ज्ञेयः ॥ ११ ॥.

ज्ञातज्ञेयग्रहयोर्या उदयान्तरघटिकास्ताभिरुदयैः स्वदेशोदयैर्ज्ञातात् प्रागपरयोः पूर्वपश्चिमयोर्ज्ञातोऽधिकोनः कार्यः । यदि ज्ञेयो ज्ञातात् पूर्वक्षितिजोदये तदा ज्ञातमर्कं प्रकल्प्य स्वदेशोदयैरुदयान्तर-

* अयं पाठः साधुः ।

घटीमितेष्टे क्रमलग्नं ज्ञातात् पश्चिमस्थे च ज्ञेये विपरीतलग्नं यत् स एव स्फुटो ज्ञेयो ग्रहो ज्ञेयः । अस्यान्तरघटीज्ञाने च ज्ञातः सभार्धोऽर्कः कल्प्यः । अस्तान्तरघटिका इष्टघटिकाः । अत्रापि ज्ञातात् पूर्वस्थे ज्ञेये क्रमलग्नं पश्चिमस्थे च विपरीतलग्नं यत् तस्मिन् भार्धान्विते सति ज्ञेयो ग्रहो भवतीति ।

अत्र वासना लग्नानयनवत् सुगमा ॥ १०–११ ॥

इदानीं तस्मान्मध्यगतिं ततो युगभगणानानयति य इत्यस्योत्तरमाह ।

**ज्ञातं कृत्वा मध्यं भूयोऽन्यदिने तदन्तरं भुक्तिः ।**
**त्रैराशिकेन भुक्त्या कल्पग्रहमण्डलानयनम् ॥ १२ ॥**

एवं स्फुटज्ञेयग्रहात् स्पष्टीकरणविलोमविधिना मध्यं ग्रहं ज्ञातं कृत्वा भूयः पुनरन्यदिने च मध्यं ग्रहं ज्ञातं कृत्वा तदन्तरं तयोरन्तरं कार्यमेवं ग्रहस्य मध्यमा भुक्तिर्भवेत् । ततो भुक्त्या त्रैराशिकेनैकस्मिन् दिने मध्यमा गतिस्तदा कल्पकुदिनैः किमिति त्रैराशिकेन कल्पग्रहभगणानयनं सुगममिति ॥ १२ ॥

इदानीमानयति यस्तमोरविशशाङ्कमानानीत्यस्योत्तरमाह ।

**स्थित्यर्धाद्विपरीतं तमःप्रमाणं स्फुटं ग्रहणे ।**
**मानोदयाद्रवीन्द्वोर्घटिकावयवेन भोदयतः ॥ १३ ॥**

स्थित्यर्धाद्विपरीतं विपरीतविधिना ग्रहणे स्फुटं तमःप्रमाणं भूभाबिम्बप्रमाणं भवति । अत्रैतदुक्तं भवति । स्थित्यर्धं रविचन्द्रगत्यन्तरकलागुणं षष्टिहृतं स्थित्यर्धकला भवन्ति । तद्वर्गाच्छरवर्गयुतान्मूलं मानैक्यार्धकलास्ताभ्यश्चन्द्रबिम्बार्धं प्रोह्य भूभाबिम्बार्धम् । एवं विपरीतक्रमेण ज्ञेयमिति । मानोदयाद्घटिकावयवेन भोदयतः स्वदेशराश्युदयतो रवीन्द्वोर्बिम्बमाने ज्ञेये । यदा प्राक् क्षितिजे बिम्बोर्ध्वपालिदर्शनं जातं ततोऽनन्तरं यावता घटिकावयवेनाधःपालिदर्शनं जातं स घटिकावयवो वेधेन ज्ञेयः । ततः स्वदेशराश्युदयघटीभिरष्टादशशतकलास्तदा वेधोपलब्धघटिकावयवेन किमेवं बिम्बकला रवेश्चन्द्रस्य च भवन्तीति ।

रविबिम्बस्योर्ध्वाधरप्रदेशौ यत्र क्रान्तिवृत्ते लग्नौ तयोरेव मध्येऽनेकानि बिम्बकला भवन्ति । चन्द्रश्च त्रिमण्डले भ्रमति तेनैव चन्द्रबिम्बकलाः स्वल्पान्तराद्भवन्ति ॥ १३ ॥

इदानीं दीपशिखौच्च्यात् शङ्कुतलान्तरभूमिज्ञाने छाया च ज्ञायतेत्यस्योत्तरमाह ।

दीपतलशङ्कुतलयोरन्तरमिष्टप्रमाणशङ्कुगुणम् ।
दीपशिखौच्च्याच्छङ्कुं विशोध्य शेषाद्धृतं छाया ॥ १४ ॥

गणिताध्यायस्य ५३ आर्यमतस्तत्रैव स्फुटा ॥ १४ ॥

इदानीं छायाद्वितीयछायान्तरविज्ञानेनेत्यादिप्रश्नोत्तरमाह ।

शङ्क्वन्तरेण गुणिता छाया छायान्तरेण भक्ता भूः ।
सच्छाया शङ्कुगुणा दीपौच्च्यं छायया भक्ता ॥ १५ ॥

छायेष्टस्य कस्यापि शङ्कोश्छाया शङ्क्वोरन्तरेण शङ्कुमूलान्तरेण गुणिता छाययोरन्तरेण भक्ता भूर्भवति । सा सच्छाया छायया सहिता शङ्कुगुणा छायया भक्ता च दीपौच्च्यं भवति ।

अत्रोपपत्तिः ।




तशि = दीपौच्च्यम् । $श_1 शं_1 = श_2 शं_2$ = शङ्कुप्रमाणम् ।

$श_1 भा_1$ = प्रथमशङ्कुच्छाया ।
$श_2 भा_2$ = द्वितीयशङ्कुच्छाया ।
} $श_2 भा_2 - श_1 भा_1$ = छाअं

$श_1 श_2$ = शङ्क्वन्तरम् = शअं

$भा_1 भा_2$ = छायाग्रान्तरम् = भाअं

$$= \text{श}_2\,\text{भा}_2 - (\text{श}_1\,\text{भा}_1 - \text{श}_1\,\text{श}_2)$$

$$= \text{श}_2\,\text{भा}_2 - \text{श}_1\,\text{भा}_1 + \text{श}_1\,\text{श}_2$$

$$= \text{छा अं} + \text{श अ}$$

ततो गणिताध्यायस्य ५४ सूत्रेण

$$\frac{(\text{छा अं} + \text{श अ})\,\text{श}_1\,\text{भा}_1}{\text{छा अं}} = \text{तभा}_1$$

$$\therefore \quad \text{श}_1\,\text{त} = \text{तभा}_1 - \text{श}_1\,\text{भा}_1 = \frac{(\text{छा अं}+\text{श अ})\,\text{श}_1\,\text{भा}_1 - \text{छा अं}\ \text{श}_1\,\text{भा}_1}{\text{छा अं}} \text{ ।}$$

$$= \frac{\text{श अ}\ \text{श}_1\,\text{भा}_1}{\text{छा अं}} \text{ ।}$$

अत्राचार्येण तश$_1$ मानमेव भूसंज्ञं कल्पितमित्युपपन्नम् । द्वितीयच्छायाग्रहणेन द्वितीया भूर्भवति । इयं भूः सच्छाया तदा छायाग्रप्रहारस्य ५४ सूत्रीया भूर्भवति ततो दीपौच्च्यं प्राग्वदिति । अत उपपन्नम् ॥ १५ ॥

इदानीं छायातो गृहादीनामौच्च्यमाह ।

**ज्ञात्वा शङ्कुच्छायामनुपातात् साधयेत् समुच्छ्रायान् ।**
**गृहचैत्यतरुनगानामौच्च्यं विज्ञाय वा छायाम् ॥ १६ ॥**

शङ्कुच्छाया ज्ञात्वाऽनुपाताद्गृहचैत्यतरुपर्वताना समुच्छ्रायान् गणकः साधयेत् । वा तेषामौच्च्य विज्ञाय तेषामिष्टकाले छाया साधयेत् । इष्टकाले गृहादीना छायाप्रमाण ज्ञात्वा तत्रैवेष्टशङ्कोश्च छायाप्रमाण विज्ञाय शङ्कुच्छायया शङ्कुप्रमाण तदा गृहादिच्छायया किम् । एवं गृहादीनामौच्च्य भवति । औच्च्याच्चैवमनुपातेन गृहादीना छाया साधयेत् ॥ १६ ॥

इदानीमिष्टगृहौच्च्यज्ञो य इत्यादिप्रश्नोत्तरमाह ।

**युतदृष्टिगृहौच्च्यहृता ह्यन्तरभूमिर्दृगौच्च्यसङ्गुणिता ।**
**फलभून्यस्ते तोये प्रतिरूपाग्रं गृहस्य नरात् ॥ १७ ॥**

गृहस्य नरस्य च मध्ये याऽन्तरभूमिः सा दृगौच्च्येन दृगुच्छ्रित्या सङ्गुणिता युतदृष्टिगृहौच्च्यहृता दृगुच्छ्रितियुतगृहोच्छ्रित्या हृता ।

यत् फलं प्राप्तं तन्मिता भूर्नराद्गृहाभिमुखी या तत्र तोये जले न्यस्ते तस्मिन् गृहस्य प्रतिरूपायमयस्य प्रतिबिम्बं दृश्यं भवेदिति ।

अत्रोपपत्तिः । गृन=गृहनरान्तरभूमि=अक । गृउ=गृहोच्चम् ।

प=जलम् । न दृ=दृगौच्च्यम् ।

तदा ज्योतिर्विदया गृहाग्रप्रतिबिम्बं चेद् दृ—दृष्ट्या दृश्यं तदा

$\angle$ गृ प उ $=\angle$ न प दृ ।

अतः गृ उ = गृ अ = न क ।

दृ क = न दृ + गृ उ । दृ अ क, दृ प न त्रिभुजे च सजातीये ।

अत प न $=\frac{\text{अक}\times\text{दृन}}{\text{दृक}}$ । अत उपपन्नम् ॥ १७ ॥

इदानीं गृहपुरुषान्तरसलिले यो दृष्ट्वाऽग्रमित्यादिप्रश्नोत्तरमाह ।

**गृहपुरुषान्तरसलिले वीक्ष्य गृहाग्रं दृगौच्च्यसङ्गुणितम् ।**
**गृहतोयान्तरमौच्च्यं गृहस्य नृजलान्तरेण हृतम् ॥ १८ ॥**

गृहपुरुषयोर्मध्ये यत् सलिलं स्थापितं तस्मिन् गृहाग्रं वीक्ष्य यदि गृहोच्च्यमपेक्षितं तदा गृहतोयान्तरं दृगौच्च्यसङ्गुणितं नृजलान्तरेण हृतं फलं गृहस्यौच्च्यं भवेत् ।

अत्रोपपत्तिः । पूर्वश्लोकक्षेत्रे गृहतोयान्तरम्=गृप । नृजलान्तरम्=पन । पगृउ, दृनपत्रिभुजे च सजातीये ततः=गृउ= $\frac{\text{गृप}\times\text{नदृ}}{\text{पन}}$

अत उपपन्नेति ॥ १८ ॥

इदानीं वीक्ष्य गृहाग्रं सलिले प्रथमेत्यादिप्रश्नोत्तरमाह ।

**प्रथमद्वितीयनृजलान्तरान्तरेणोद्धृता जलापसृतिः ।**
**दृष्ट्यौच्च्यगुणाच्छ्रायस्तोयाग्नृजलान्तरगुणा भूः ॥ १९ ॥**

यत्र प्रथमं जले गृहाग्रप्रतिबिम्बं नरेण दृष्टं तत्र यन्नृजलान्तरं तत् प्रथमं ज्ञेयम् । एवं द्वितीयं नृजलान्तरं जानीयात् । ततो जलापसृतिर्

तयोरन्तरे भूमिः सा प्रथमद्वितीयनृजलान्तरयोरन्तरेणोद्धृता लब्धिर्द्विधा स्थाप्या । एकत्र दृगौच्च्यगुणा तदा एरोच्छ्रायः स्यादन्यत्र नृजलान्तरेण गुणा तदा तेयाद्गृहतलपर्यन्त भूर्भूमि स्यात् ।

अत्रोपपत्तिः ।




अए = एउ = एरौच्च्यम् । $\text{ज}_1$, $\text{ज}_2$ प्रथमद्वितीयजलस्थाने । $\text{न}_1$, $\text{न}_2$ प्रथमद्वितीयनरस्थाने । अक = $\text{न}_1\text{दृ}_1$ = $\text{न}_2\text{दृ}_2$ = दृगौच्च्यम् । $\text{ज}_1\text{ज}_2$ = जलान्तरम् = तलापसृतिः । $\text{न}_1\text{न}_2$ = $\text{दृ}_1\text{दृ}_2$ = नरान्तरम् । द्वयोरन्तरम् = $\text{न}_1\text{न}_2 - \text{ज}_1\text{ज}_2 = \text{न}_1\text{न}_2 - (\text{ज}_1\text{न}_1 + \text{न}_1\text{ज}_2)$

$$= \text{न}_1\text{न}_2 - \text{न}_1\text{ज}_2 - \text{ज}_1\text{न}_1 = \text{ज}_2\text{न}_2 - \text{ज}_1\text{न}_1 \text{ ।}$$

अ$\text{ज}_1\text{ज}_2$, अ$\text{दृ}_1\text{दृ}_2$ सजातीयत्रिभुजयोः क्रमेण अए, अक बहिर्लम्बौ ।

तेन $\frac{\text{अक}}{\text{अए}} = \frac{\text{दृ}_1\text{दृ}_2}{\text{ज}_1\text{ज}_2}$ $\therefore$ $\frac{\text{अक} - \text{अए}}{\text{अए}} = \frac{\text{कए}}{\text{अए}} = \frac{\text{दृ}_1\text{दृ}_2 - \text{ज}_1\text{ज}_2}{\text{ज}_1\text{ज}_2}$

$= \frac{\text{न}_1\text{न}_2 - \text{ज}_1\text{ज}_2}{\text{ज}_1\text{ज}_2}$ । ततः अए $= \frac{\text{दृगौ} \times \text{ज}_1\text{ज}_2}{\text{ज}_2\text{न}_2 - \text{ज}_1\text{न}_1}$ ।

ततः ए$\text{ज}_1$उ, $\text{ज}_1\text{न}_1\text{दृ}_1$ सजातीयजात्ययोः

ए$\text{ज}_1$ $= \frac{\text{ज}_1\text{न}_1 \cdot \text{ज}_1\text{ज}_2}{\text{ज}_2\text{न}_2 - \text{ज}_1\text{न}_1}$ । एवम् ए$\text{ज}_2$ $= \frac{\text{ज}_2\text{न}_2 \times \text{ज}_1\text{ज}_2}{\text{ज}_2\text{न}_2 - \text{ज}_1\text{न}_1}$

अत उपपन्ने ॥ १९ ॥

इदानीमुक्तिमाह ।

**छायापुरुषच्छिन्नं जलकुड्यान्तरमवाप्तमारूढिः ।**
**अध्यायो विंशत्यार्याणामेकोनविंशोऽयम् ॥ २० ॥**

इति श्रीब्राह्मस्फुटसिद्धान्ते शङ्कुच्छायादिज्ञानं नामैकोनविंशोऽध्यायः ॥ १९ ॥

छायाया यः पुरुषः शङ्कुभागस्तेन जलभित्त्योरन्तरं भक्तमत्र यद्वाप्तं सा भित्तेरारूढिरुच्छ्रितिर्भवति। जलाद्यावताऽन्तरेण नरो भित्त्यग्रस्थितिबिम्बं जले पश्यति तदन्तरमेवात्र नरस्य छाया कल्प्या। यत्तेजसो या भित्तेश्छाया साऽन्यप्रश्ने जलकुड्यान्तरं तदा नरस्य रवितेजसो या छाया सैव छाया ज्ञातव्या। (छायाव्यवहारस्य प्रथमश्लोकस्य छायापुरुषार्थ द्रष्टव्यः) शेषं स्पष्टार्थम्।

अत्रोपपत्तिः। नरस्य छायया नरप्रमाणसमोच्छ्रितिस्तदा भित्तेश्छायया किमित्यनुपातेन भित्तेरुच्छ्रितिः स्फुटा।

मधुसूदनसूनुनोदितो यस्तिलकः श्रीपृथुनेह जिष्णुजोक्तेः।

हृदि तं विनिधाय नूतनोऽयं रचितो भादिविधौ सुधाकरेण॥

इति श्रीकृपालुदत्तसूनुसुधाकरद्विवेदिविरचिते ब्राह्मस्फुटसिद्धान्तनूतनतिलके शङ्कुच्छायादिज्ञानं नामैकोनविंशोऽध्यायः ॥ १९ ॥



# अथ छन्दश्चित्युत्तराध्यायः ।

*ऋग्वर्गः पर्यायः समूहयोगावयुक्षु युग्मेषु ।
सो याः प्राग्वत् प्रासादाश्चतुष्ककाः शेषयुक्तयोन्त्यः ॥१॥
एकादियुतविहीनावाद्यन्तौ तद्विपर्ययौ यावत् ।
वर्गादिषु विषमयुजां क्रमोत्क्रमाद्वर्धयेत् पादान् ॥ २ ॥
एकैकेन द्वा द्वाः सोऽप्यप्यधिकेषु तत् प्रतिष्ठेषु ।
वर्गादिरभीष्टान्तः प्रस्तारो भवति यवमध्यः ॥ ३ ॥
सूनोन्त्यो द्विपदाग्रं त्रिपदाद्यानामधः पृथक् संख्या ।
तच्छोध्यो व्येकः पृथगन्ताद्रूपमूर्ध्वयुतम् ॥ ४ ॥
यावत् पादाव्येकागच्छाद्वर्णेष्वथैकवृद्धेषु ।
रूपाद्युतघाते वर्गाद्यानां परा संख्या ॥ ५ ॥
रूपाधिकपादार्धैर्विषमेपूर्वैः समेषु पादार्धे ।
अर्धाद्विगुणाव्येकांयुलान्यधस्तस्य सर्वेषाम् ॥ ६ ॥
माध्यैस्तथार्धहीनैः क्रमपादैर्व्यस्ततुल्यपादाद्यः ।
विषमैरव्येकं मध्ये प्रोह्याद्यान्यतः कुर्यात् ॥ ७ ॥
सैकक्रमतुल्याद्यैर्न्यासोऽभ्यधिको विशोधितश्चाधः ।
संख्यैक्यं तादृक् यादृक् प्रथमस्त्रिरहितो नष्टे ॥ ८ ॥
माध्यैः कृतैश्च दलितैः समसंख्यायां क्रमोत्क्रमात् क्षेप्यम् ।
विषमायां व्येकायां दलं क्रमादुत्क्रमात्सैकम् ॥ ९ ॥
समसंख्यायां सोपानक्रमोत्क्रमाभ्यां तथैव विषमाभ्याम् ।
कल्प्या पचिते दृष्टे प्रथमः शेषान्तराण्यन्ते ॥ १० ॥

---

* एतदध्यायस्थाना श्लोकानामभिप्राया बहुशुद्धतया प्राचीनलक्ष्मतस्यातिदुर्बोधतया च प्रकाशयितुमशक्या इति ये केचन संशोध्य तदभिप्रायान् प्रकाशयिष्यन्ति सुधीविभव तत्परिश्रममुररीकरिष्यामीति *

समदलसमविषमाणां संख्यापादार्धसर्वकल्पवधः ।
स्वाद्यवधोऽन्यैः पादैः स्वपरस्य प्राग्वधः सैकैः ॥ ११ ॥
आद्यादनन्तरोऽधः कल्प्योऽन्यतुल्यमाद्यः प्राक् ।
न्यासो वर्गोऽन्योनः प्रस्तारोऽर्धसमविषमाणाम् ॥ १२ ॥
नष्टेन्त्यात् स्वाधस्थोनकल्पघातोऽर्धतुल्यविषमाणाम् ।
व्येकः पृथक् स्ववर्गोद्धृतः फलं तुल्यकल्पानाम् ॥ १३ ॥
उद्दिष्टे कल्पहृतेऽतीतैः प्रथमः फले सरूपेऽन्यः ।
असकृद्वर्गांशयुते सैके वार्धसमविषमाणाम् ॥ १४ ॥
कल्पेषु पृथक् गुरुलघुसंख्यैकादिभाजिता प्राग्वत् ।
विषमेष्वाद्यलघूनो लघुभिर्मेरुः समादीनाम् ॥ १५ ॥
एकद्वितयोः परतो द्विसंगुणोऽनन्तराद्विरूपोऽधः ।
वर्गधराद्योनोदलसमविषमाणां ध्वजो लघुभिः ॥ १६ ॥
लघुसंख्या पददलिता परतोऽधोऽधश्च शुद्ध्यति हता यैः ।
द्विगुणान्तैः शुद्धैर्वर्गपरैर्मन्दरो लघुभिः ॥ १७ ॥
कृत्वाधोऽधः कल्प्यान्येकाद्येकोत्तरानधस्तेषाम् ।
स्वात्परतोऽन्यैक्यमधः प्रस्ताराद्युक्तवदिहाद्यैः ॥ १८ ॥
गुरुलघ्वेकानिघटीद्विगुणान्येकांगुलानि संख्या स्यात् ।
द्राविंशतिरार्याणां छन्दश्चित्युत्तरोऽध्यायः ॥ १९ ॥

इति श्रीब्राह्मस्फुटसिद्धान्ते छन्दश्चित्युत्तराध्यायो
विंशतितमः ॥ २० ॥



# अथ गोलाध्यायः ।

तत्रादौ गोलारम्भप्रयोजनमाह ।

ग्रहनक्षत्रभ्रमणं न समं सर्वत्र भवति भूस्थानाम् ।
तद्विज्ञानं गोलाद्यतस्ततो गोलमभिधास्ये ॥ १ ॥

भूस्थानां जनानां सर्वत्र ग्रहनक्षत्रभ्रमणं समं न भवति । तद्भ्रमणसंस्थानविज्ञानं च यतो गोलादेव भवति ततोऽहं गोलमभिधास्ये कथयामीति ॥ १ ॥

इदानीं भूगोलसंस्थानमाह ।

शशिबुधसितार्ककुजगुरुशनिकक्षावेष्टितो भकक्षान्तः ।
भूगोलः सत्त्वानां शुभाशुभैः कर्मभिरुपात्तः ॥ २ ॥

अथ भूगोलः सत्त्वानां प्राणिनां शुभाशुभैः कर्मभिरुपात्तः प्राप्तो भवति । 'भूमेः पिण्डः शशाङ्कज्ञकविरवि–इत्यादिभास्करोक्तमेतदनुरूपमेव । शेषं स्पष्टम् ॥ २ ॥

इदानीं देवासुरसंस्थानमाह ।

खे भूगोलस्तदुपरि मेरौ देवाः स्थितास्तले दैत्याः ।
खे भगणाक्षाग्रस्थावुपर्यधश्च ध्रुवौ तेषाम् ॥ ३ ॥

आकाशे भूगोलस्तदुपरि मेरुस्तत्र मेरावुपरि देवाः स्थिताः । तले मेरुतले कुमेरौ दैत्याः स्थिताः । तेषां देवदैत्यानां खे आकाशे भगणाक्षाग्रस्थौ भगणान्तो ध्रुवयष्टिस्तदग्रस्थौ ध्रुवावुपर्यधश्च । देवानामुत्तरो ध्रुव उपरि दक्षिणोऽधो दैत्यानां दक्षिण उपरि उत्तरो ध्रुवश्चाध इति । 'सौम्यं ध्रुवं मेरुगताः खमध्ये'–इत्यादि भास्करोक्तमेतदनुरूपम् ॥ ३ ॥

इदानीं देवदैत्यानां भचक्रभ्रमणव्यवस्थामाह ।

ध्रुवयोर्बद्धं सव्यगममराणां क्षितिजसंस्थमुडुचक्रम् ।
अपसव्यगमसुराणां भ्रमति प्रवहानिलाक्षिप्तम् ॥ ४ ॥

स्पष्टम् । 'सव्यापसव्य भमद्भुवचक्रम्'—इत्यादि भास्करोक्तमेतद-नुरूपमेव ॥ ४ ॥

इदानीं चक्रभ्रमणव्यवस्थामाह ।

**अन्यत्र सर्वतो दिशमुन्नमति भपञ्जरो ध्रुवो नमति ।**
**लङ्कायामुडुचक्रं पूर्वापरगं ध्रुवौ क्षितिजे ॥ ५ ॥**

अन्यत्र मेरुतोऽन्यत्र सर्वतो दिश भूगोले भपञ्जरो भचक्रमुन्नमति ध्रुवश्च नमति । लङ्कायामुडुचक्र भचक्र पूर्वापरगं समम्पडलाकार ध्रुवौ च क्षितिजे स्त इति । आचार्येण यथा यथा मेरुतो द्रष्टा सर्वतो दिशं याति तथा तथा ध्रुवो नमतीत्युक्तम् । भास्करेण लङ्कामेव मूलस्थानं प्रकल्प्य स्थितिः प्रतिपादिता । 'यतो निरक्षदेशे क्षितिमण्डलोपगौ ध्रुवौ नरः पश्यति दक्षिणोत्तरौ'इत्यादि भास्करोक्तमेतदनुरूपमेव ॥ ५ ॥

इदानीं देवादीनां रविभ्रमणस्थितिमाह ।

**देवाः सव्यगमसुराः पश्यन्त्यपसव्यगं रविं क्षितिजे ।**
**विषुवति समपश्चिमगं निरक्षदेशस्थिताः पुरुषाः ॥ ६ ॥**

विषुवति मेषतुलादौ देवाः क्षितिजे रवि सव्यगमसुरा अपसव्यगं निरक्षदेशस्था पुरुषाश्च समपश्चिमग पश्यन्तीति प्रसिद्धम् ॥ ६ ॥

इदानीं देवदैत्यानां राशिसस्थानमाह ।

**सौम्यमपमण्डलार्धं मेषाद्यं सव्यगं सदा देवाः ।**
**पश्यन्ति तुलाद्यर्धं दक्षिणमपसव्यगं दैत्याः ॥ ७ ॥**

देवाः सदा मेषाद्यं सौम्यमुत्तर क्रान्तिमण्डलार्धं सव्यग दैत्याश्च तुलादि क्रान्तिमण्डलार्धं दक्षिणमपसव्यग पश्यन्ति ।

अत्रोपपत्ति । गोलसस्थानेन 'लम्बाधिका क्रान्तिरुदक् च यावत्'-इत्यादिभास्करविधिना स्फुटा ॥ ७ ॥

इदानीं देवादीनां रविदर्शनकालमाह ।

**पश्यन्ति देवदैत्या रविवर्षार्धमुदितं सकृत् सूर्यम् ।**
**शशिगाः शशिमासार्धे पितरो भूस्था नराः स्वदिनम् ॥ ८ ॥**

देवदैत्याः सकृदुदितं सूर्यं रविवर्षार्धं मेरवर्षदलपर्यन्तं शशिगाः शशिपृष्ठस्थाः पितरश्च शशिमासार्धं पर्यन्तं भूस्था नराश्च स्वदिनं स्वद्दिनमानपर्यन्तं पश्यन्ति ।

अत्रोपपत्तिः । भास्करगोलाध्यायतः स्फुटा ॥ ८ ॥

इदानीं भूगोले लङ्कावन्तीसंस्थानमाह ।

**भूपरिधितुर्यभागे लङ्का भूमस्तकात् क्षितितलाच ।**
**लङ्कोत्तरतोऽवन्ती भूपरिधेः पञ्चदशभागे ॥ ९ ॥**

भूमस्तको मेरुः क्षितितलश्च कुमेरुस्तस्माद्भूपरिधिचतुर्थभागेऽन्तरे दक्षिणदिशि लङ्का नाम नगरी । लङ्कोत्तरतश्च भूपरिधिपञ्चदशभागेऽवन्ती वर्तते । भास्करश्चाचार्यानुयायी 'निरक्षदेशात् क्षितिषोडशांशे भवेदवन्ती'-इति कथितवान् । तेनान्येषां मते 'षोडशे भागे' इत्यत्र पाठान्तरम् । चतुर्वेदाचार्यसम्मतः पाठश्च 'पञ्चदशभागे' अयमेव ॥ ९ ॥

इदानीं निरक्षस्वदेशान्तरयोजनान्याह ।

**अक्षांशकुपरिधिवधान्मण्डलभागाप्तयोजनैर्विषुवत् ।**
**नतभागयोजनैरेवमुपरि सूर्योऽन्यदनुपातात् ॥ १० ॥**

अक्षांशानां भूपरिधेश्च वधात् मण्डलभागैश्चक्रांशैर्भक्ताद्यान्यवाप्तानि तैर्नतभागयोजनैः स्वदेशाद्विषुवन्निरक्षदेशो भवति । एवं क्रान्त्याढ्ये देशे खस्वस्तिकोपरि यदा सूर्यो भवति तदा कैर्नतभागयोजनैर्विषुवद्देशो भवति । इत्यन्यत्र मेरुस्वदेशान्तरयोजनादिज्ञानं तत्तदन्तरभागतोऽनुपातात् कार्यमिति स्फुटम् । अत्र टीकायां चतुर्वेदाचार्यः 'कान्यकुब्जेऽक्षभागाः २६ । ३५' ॥

इदानीं भकक्षां खकक्षां चाह ।

**अम्बरयोजनपरिधिः**
**शशिभगणाः शून्यखखजिनाग्निगुणाः ३२४०००।**
**पस्य भगणैर्विभक्ता-**
**स्तत्कक्षाऽर्को भपष्ठ्यंशः ॥ ११ ॥**

कल्पे ये चन्द्रभगणास्ते ३२४००० हतैर्गुणा खकक्षा भवति । सा च यस्य ग्रहस्य कल्पभगणैर्विभक्ता तत्कक्षा तस्य ग्रहस्य कक्षा भवति । अर्कस्य भचक्रम. । अर्ककक्षा भकक्षायाः षष्टिभागः । अतोऽर्ककक्षा षष्टिगुणा भकक्षा भवतीति ।

अत्रोपपत्तिः ।

कल्पे चन्द्रभगणाः = ५७७५३३'००००० )१८७१२०६'९२०००'००००० = खक (३२४०००
१७३२५९९
―――――
१३८६०७९
११५५०६६
―――――
२३१०१३२
२३१०१३२
―――――
०

अतो भास्कराचार्योक्तैव खकक्षा पठिता । शेषोपपत्तिर्भास्करोक्तविधिना स्फुटा ॥ ११ ॥

इदानीं ग्रहाः कियन्ति योजनानि परिभ्रमन्तीत्याह ।

**भपरिधिसमानि षष्ट्या रविपरिधितुल्यानि कल्परविवर्षैः ।**
**गच्छन्ति योजनानि ग्रहाः स्वकक्षासु तुल्यानि ॥ १२ ॥**

षष्ट्या रविवर्षषष्ट्या ग्रहाः स्वकक्षासु भपरिधिसमानि नक्षत्रकक्षासमानि योजनानि कल्परविवर्षैश्च खपरिधितुल्यानि खकक्षासमानि योजनानि गच्छन्ति । तथा सर्वे ग्रहाः कल्पे तुल्यान्येव योजनानि खकक्षामितानि गच्छन्ति ।

अत्रोपपत्तिः । भास्करोक्तेन विधिना स्फुटा ।

$$\text{नकक्षा} = ६० \text{रकक्षा} = \frac{\text{खक}}{\text{कसौरव}} \times ६० \therefore \text{खक} = \frac{\text{भक} \times \text{कसौरव}}{६०}$$ ।

कल्पसौरवर्षैः खकक्षामितयोजनानि तदा सौरवर्षषष्ट्या किम् । लब्धानि भ्रमणयोजनानि = नक्षत्रकक्षा । अत उपपन्नं भपरिधिसमानि यान्तीति । सम्प्रति वेधेन नवीनानां मते ग्रहाणां योजनात्मिका गतिर्न समानेति सुधीभिश्चिन्त्यम् ॥ १२ ॥

इदानीं ग्रहकक्षाक्रममाह ।

**भगणस्याधः शनिगुरुभूमिजरविशुक्रसौम्यचन्द्राणाम् ।**
**कक्षाः क्रमेण शीघ्राः शनैश्चराद्याः कलाभुक्त्या ॥ १३ ॥**

भगणस्याधो भकक्षाया अध क्रमेण शनि–गुरु–कुज–रवि शुक्र–बुध–चन्द्राणां कक्षाः सन्ति । कलाभुक्त्या शनैश्चराद्याः शीघ्राः शीघ्रगतयः सन्ति । शनेर्गुरुः शीघ्रगामी । गुरोर्भौमः । भौमाद्रविरित्यादि । एवं शीघ्रतमः शशी भवतीति । यदि शशिन ऊर्ध्वक्रमेण कक्षापाठः क्रियते तदा 'भूमेः पिण्ड. शशाङ्कज्ञकविरविकुजे'–इत्यादिभास्कराक्रमेतदनुरूपमेव ।

अत्रोपपत्ति । 'कक्षाः सर्वा अपि द्विविपदाम्'–इत्यादिभास्करविधिना शनैश्चराद्याः शीघ्रा भवन्ति । कक्षाक्रमस्य वेधोपलब्ध्या । सम्प्रति वेधेन सर्वे ग्रहा दीर्घवर्त्तुले भ्रमन्ति । यद्केन्द्राभो रविरवस इति सर्वमुपलभ्यते । प्राचीनैर्भ्रमाद्ग्रहाणां कक्षा वृत्ताभा भूकेन्द्रकाश्च निश्चिता इति ॥ १३ ॥

इदानीं शनैश्चराद्याः कथं शीघ्रा इत्यस्य हेतुमाह ।

**लघवोऽल्पे राश्यंशा महति महान्तोऽल्पवृत्तमल्पेन ।**
**पूरयतीन्दुर्महता कालेन महच्छनैश्चारी ॥ १४ ॥**

अल्पे वृत्ते राश्यंशाश्चक्रांशविभागा लघवो महति वृत्ते च महान्तो भवन्ति । अत इन्दुश्चन्द्रोऽल्पवृत्त स्वकक्षाया अल्पेन कालेन शनैश्चारी शनिश्च महद्वृत्त स्वकक्षाया महता कालेन पूरयति ।

अत्रोपपत्तिश्चैककेन्द्रकवृत्ताना चक्रांशविभागेनैव स्फुटा ॥ १४ ॥

इदानीं परिधिव्यासानयनमाह ।

**यन्मूलं तद्व्यासो मण्डललिप्ताकृतेर्दशहृतायाः ।**
**तस्यार्धं व्यासार्धं योजनकर्णप्रमाणार्थम् ॥ १५ ॥**

मण्डललिप्ताकृतेश्चक्रकलाकृतेर्दशहृताया यन्मूल तच्चक्रकलापरिधेर्व्यासो भवति । तस्यार्धं व्यासार्धं भवति । तद्व्यासार्धं ग्रहकक्षायोजनैर्गुण

द्वादश षोडश ज्याखण्डानि ज्यार्धानि भवन्ति । अत एभ्यो ज्यार्धेभ्यो-ऽन्यानि वक्ष्यमाणविधिना साध्यानि । अत्रैतदुक्तं भवति । त्रिज्यावर्ग एकगुणश्चतुर्भक्तस्तन्मूलं राशिज्याऽष्टमी ज्या । त्रिज्यावर्गो द्विगुणश्चतुर्भक्तस्तन्मूलं शरवेदभागज्या द्वादशी ज्या । त्रिज्यावर्गस्त्रिगुणश्चतुर्भक्तस्तन्मूलं षष्टिभागज्या षोडशी ज्या ।

अत्रोपपत्तिः । भास्करज्योत्पत्त्या स्फुटा । भास्करेणापि तथैव पठितत्वादिति ॥ १९ ॥

इदानीमर्धभागज्यानयनमाह ।

तुल्यक्रमोत्क्रमज्यासमखण्डकवर्गयुतिचतुर्भागम् ।
प्रोह्यानष्टं व्यासार्धवर्गतस्तत्पदे प्रथमम् ॥ २० ॥
तद्दलखण्डानि तदूनजिनसमानि द्वितीयमुत्पत्तौ ।
कृतयमलैकदिगीशेषुसप्तरसगुणनवादीनाम् ॥ २१ ॥

तुल्यचापस्यैकस्यैव चापस्य समक्रमज्योत्क्रमज्ययोर्वर्गयुतेश्चतुर्थांशमनष्टं व्यासार्धकृतेः प्रोह्य हित्वा तत्पदे अनष्टस्य शेषस्य च पदे ग्राह्ये । तत्र प्रथमं पदं तद्दलखण्डानि तच्चापार्धज्या द्वितीयं च तदूनजिनसमानि तदर्धचापकोटिज्या स्यात् । एवमुत्पत्तौ ज्योत्पत्तौ पुनः पुनः समज्यार्धादष्टमाद् द्वादशाच्च कर्मणि कृते कृतयमलैकदिगीशेषुसप्तरसगुणनवादीनां ज्यार्धानामुत्पत्तिः स्यात् ।

यथाऽष्टमाज्ज्यार्धात् तदर्धभागज्यया तत्कोट्यर्धभागज्यया च

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ४ | २० | १० | १४ | ५ | १९ | ७ | १७ |
| २ | २२ | ११ | १३ | | | | |
| १ | २३ | | | | | | |

द्वादशाज्ज्यार्धाच्च

| | | | |
|---|---|---|---|
| ६ | १८ | ९ | १५ |
| ३ | २१ | | |

एतानि सिध्यन्ति ।

द्वादश षोडश चतुर्विंशतिमत्र त्रिज्येति ज्या च ज्ञातमेव । अत इष्टव्यासार्धे तदर्धज्यानयनेन चतुर्विंशतिर्ज्याः सिध्यन्ति ।

अत्रोपपत्तिः । 'क्रमोत्क्रमज्याकृतियोगमूलाद्'—इत्यादिभास्करविधिना स्फुटा ॥ २०–२१ ॥

इदानीं विशेषमाह ।

**एवं जीवाखण्डान्यल्पानि बहूनि वाऽऽद्यखण्डानि ।**
**ज्यार्धानि वृत्तपरिधेः षष्ठचतुर्थत्रिभागानाम् ॥ २२ ॥**

एवं तदर्धज्यानयनेन गणकेनाल्पानि वा बहूनि यथेप्सितानि जीवाखण्डानि साध्यानि । आचार्येण च स्वग्रन्थे चतुर्विंशतिर्ज्यार्धानि साधितानि यदीप्सितानि ९६ ज्यार्धानि स्युस्तदा पुनस्तदर्धभागज्याविधिः कार्यः । अर्धभागज्याविधौ सर्वत्र त्रिज्यार्धं त्रिज्यावर्गार्धपदं त्रिगुणत्रिज्यावर्गचतुर्थांशपदं क्रमेण वृत्तपरिधेः षष्ठचतुर्थत्रिभागानां ज्यार्धानि चाद्यखण्डानि च्युक्तानि । परिधिषष्ठभागस्य षष्टिभागानां या ज्या पूर्णज्या तस्या अर्धं त्रिज्यार्धम् । चतुर्थभागस्य नवतेर्ज्यार्धं त्रिज्यावर्गार्धपदम् । त्रिभागस्य विंशत्यधिकशतभागानां ज्यार्धं त्रिगुणत्रिज्यावर्गचतुर्थांशपदम् । इति ज्यार्धान्याद्यानि विज्ञाय ततस्तदर्धभागज्यानयनविधानेन वृत्तपादे यथेप्सितानि ज्याखण्डानि साध्यानीति सर्वं स्फुटम् ॥ २२ ॥

इदानीं प्रकारान्तरेणार्धभागज्यानयनमाह ।

**उत्क्रमसमखण्डगुणाद्व्यासादथवा चतुर्थभागाद्यत् ।**
**कृत्वोक्तखण्डकानि ज्यार्धानयनं न लघ्वस्मात् ॥ २३ ॥**

इति ज्याप्रकरणम् ।

अथवोत्क्रमसमखण्डं सममङ्कज्याया उत्क्रमज्या तया गुणाद् व्यासात् किंविशिष्टात् चतुर्थभागाच्चतुर्भिर्भक्ताद्यल्लब्धं तदुक्तखण्डानि क्रमोत्क्रमज्यायोगसमानि कृत्वा ज्यार्धानयनं प्राग्वत् कार्यम् । अस्मा दानयनादन्यदानयनं न लघ्वस्तीति । अनेन प्रकारेण लाघवेन ज्यार्धानि सिध्यन्तीत्यर्थः ।

अत्रोपपत्तिः । 'त्रिज्योत्क्रमज्यानिहतेर्दलस्य'—इत्यादिभास्करविधिना स्फुटा । ज्योत्पत्तावन्ये विशेषा भास्करान्त्यज्योत्पत्तौ प्रसिद्धा एव ॥ २३ ॥

इति ज्याप्रकरणम् ।

# अथ स्फुटगतिवासना ।

तत्रादौ स्पष्टीकरणे छेद्यकमाह ।

कक्षामण्डलमध्यं भूमध्ये मध्यमः स्वकक्षायाम् ।
अनुलोमं मन्दोच्चात् प्रतिलोमं भ्रमति शीघ्रोच्चात् ॥ २४ ॥

भूमध्ये कक्षामण्डलस्य मध्यं केन्द्रमस्ति । मध्यमो ग्रहः स्वकक्षायां प्रतिवृत्ते मन्दोच्चादनुलोमं शीघ्रोच्चाच्च प्रतिलोमं भ्रमति । 'भूमेर्मध्ये खलु भवलयस्यापि मध्यम्'–इत्यादिना तथा 'मन्दोच्चतोऽथ प्रतिमण्डले प्राग्ग्रहोऽनुलोमं निजकेन्द्रगत्या'–इत्यादिना भास्करविधिनाऽपीयमेव स्थितिः ॥ २४ ॥

इदानीं नीचोच्चवृत्तभङ्गिमाह ।

नीचोच्चवृत्तमध्यं मध्ये तद्भ्रमति मध्यगः स्वोच्चात् ।
तत्परिधौ प्रतिलोमं मन्दोच्चाद्भ्रमति शीघ्रोच्चात् ॥ २५ ॥
अनुलोमं मध्यसमं भूस्थः पश्यति यतो न कक्षायाम् ।
स्पष्टं तन्मध्यान्तरमृणं धनं वा ग्रहे मध्ये ॥ २६ ॥

कक्षायां यत्र मध्यग्रहचिह्नं तस्मिन् मध्ये नीचोच्चवृत्तस्य मध्यं नीचोच्चवृत्तकेन्द्रं भवति तत् केन्द्रं च मध्यचलनाद्भ्रमति । शेषं भास्करभङ्ग्या स्फुटम् ॥ २४–२६ ॥

इदानीं नीचोच्चवृत्तभङ्ग्या शीघ्रफलं साधयति ।

कोटिफलं व्यासार्धात् पदयोराद्यन्तयोर्भवत्युपरि ।
द्वितृतीययोर्यतोऽधस्तद्युक्तोनं ततः कोटिः ॥ २७ ॥
कर्णस्तद्भुजफलकृतिसंयोगपदं तदुद्धृता त्रिज्या ।
भुजफलगुणिताप्तधनुर्गुणितेनैवं फलं शीघ्रे ॥ २८ ॥

स्पष्टार्थमार्याद्वयं भास्करोक्तभङ्ग्या ॥ २७–२८ ॥

इदानीं मन्दकर्मणि कर्णः किमु न क्रियत इत्यत्र कारणमाह।

**त्रिज्याभक्तः कर्णः परिधिगुणो बाहुकोटिगुणकारः।**
**असकृन्मान्दे तत् फलमाद्यसमं नात्र कर्णोऽस्मात् ॥ २९ ॥**

'स्वल्पान्तरत्वान्मृदुकर्मणीह'–इत्यादिभास्करोक्तेन स्पष्टेयमार्या ॥ २९ ॥

इदानीं विशेषमाह।

**प्रतिपादनार्थमुच्चं प्रकल्पितं ग्रहगतेस्तथा पातः।**
**भुक्तेरूनाधिकता मानस्य च भवति कर्णवशात् ॥ ३० ॥**

**इति स्फुटगतिवासना।**

ग्रहगतेः प्रतिपादनार्थमुच्चं प्रकल्पितं तथा पातश्च प्रकल्पितः। क्रान्तिवृत्तीयगत्यर्थमुच्चं विमण्डलीयगत्यर्थं पातः प्रकल्पित इति। कर्णस्य न्यूनाधिकवशात् भुक्तेर्बिम्बमानस्य च न्यूनाधिकता भवतीति। एवं मन्दस्पष्टग्रहे स्थितिर्भवति। भौमादीनां शीघ्रकर्णवशतश्च बिम्बमाने न्यूनाधिकता भवति परन्तु स्पष्टगतौ कर्णवशेन न न्यूनाधिकत्वो-त्पद्यत इति छेद्यकेन सर्वं स्फुटम्। 'यः स्यात् प्रदेशः प्रतिमण्डलस्य' इत्यादि तथा 'उच्चस्थितो व्योमचरः सुदूरे' इत्यादि च भास्करोक्तमेत-दनुरूपमेव ॥ ३० ॥

इति स्फुटगतिवासना।

इदानीं योजनात्मककर्णानयनमाह।

**कक्षा व्यासार्धगुणा मण्डललिप्ताविभाजिता कर्णः।**
**स्वकलाकर्णेन गुणः कर्णस्त्रिज्याहृतः स्पष्टः ॥ ३१ ॥**

ग्रहकक्षा व्यासार्धेन त्रिज्यया गुणा मण्डललिप्ताभिश्चक्रकलाभि-र्विभाजिता फलं मध्यमयोजनकर्णः स्यात्। स कर्णः स्वकलाकर्णेन स्फुट-शीघ्रकर्णेन गुणस्त्रिज्याहृतः स्पष्टो योजनकर्णः स्यात्।

अत्रोपपत्तिः। दूर्वाधस्य परिधितो व्यासार्धानयनेन स्फुटा। त्रि-ज्यातुल्येन कलाकर्णेन मध्यो योजनकर्णस्तदा स्वेष्टकलाकर्णेन किमित्य-

नुपातेन स्फुटो योजनकर्णो भवति। 'लिप्ताश्रुतिघ्नस्त्रिगुणेन भक्तः'-इत्यादि भास्करोक्तमेतदनुरूपमेव ॥ ३१ ॥

इदानीं भूरविचन्द्राणां योजनव्यासानाह।

मृद्दहनजलमयानां
विष्कम्भो योजनैः क्रिनेन्दूनाम्।
शशिवसुतिथिभि-१५८१ र्यमप-
ञ्चशररसैः ६५२२ शून्यवसुवेदैः ४८० ॥ ३२ ॥

क्रिनेन्दूना भू-रवि-चन्द्राणां क्रमविशिष्टानां मृद्दहनजलमयानां क्रमेण शशिवसुतिथिभिर्यमपञ्चशररसैः शून्यवसुवेदैर्योजनैर्विष्कम्भो ज्ञेयः। भूगोलस्य मृण्मयस्य व्यासः = १५८१। सूर्यगोलस्याग्निमयस्य व्यासः = ६५२२। जलमयस्य चन्द्रस्य व्यासः = ४८०। योजनात्मको ज्ञेय इत्यर्थः।

अत्रोपपत्तिः। भास्करविधिना 'पुरान्तरं चेदिदमुत्तरं स्यात्'-इत्यादिना तथा 'बिम्बं रवेर्द्विद्विशरर्तुसङ्ख्यानि'-इत्यादिना ससद्वासनया च स्फुटा ॥ ३२ ॥

इदानीं भूभाबिम्बमाह।

अर्कव्यासान्तरगुणमिन्दुस्फुटकर्णमर्ककर्णहृतम्।
प्रोह्य भुवो भूच्छाया विष्कम्भश्चन्द्रकक्षायाम् ॥ ३३ ॥

इन्दुस्फुटकर्णं अर्कव्यासान्तरगुणमर्ककर्णहृतं फलं भुवो भूव्यासात् प्रोह्य चन्द्रकक्षायां भूच्छायाविष्कम्भो भवति। 'भूव्यासहीनं रविबिम्बमिन्दुकर्णाहतम्-इत्यादि भास्करोक्तमेतदनुरूपमेव।

अत्रोपपत्तिः। भास्करोक्तेन विधिना स्फुटा। अनेन प्रकारेण चन्द्रकक्षायां भूभाव्यासो नायातीत्यस्य मीमांसा कमलाकरेण तत्त्वविवेकचन्द्रग्रहणाधिकारे समीचीना कृता। लाघवेन सूक्ष्मभूभाबिम्बानयनं मदुक्तं यथा।

रविसन्द्रुसजीवा लम्बनोऽर्घ्या विहीना
क्षितिजजनितया तत्कार्मुकं कार्यमार्यैः।

द्विजपतिजपराख्य लम्बन तद्विहीनं
भवति यमुनतीभाविम्बखण्ड सुसूत्रम् ॥

अत्रोपपत्तिर्भूभादेत्रेण त्रिकोणमित्या च सुगमा ।

यदि रविभूबिम्बयोर्बिन्दुपातिमता स्पर्शरेखा क्रियते तदा भूभा-भोत्पद्यते यद्वशाच्चन्द्रबिम्बे मालिन्यमुपलभ्यते । भूभाभासाधनार्थमुपरि-भूभानयनसूत्रे प्रथमपादे 'विहीना' स्थाने 'च युक्ता' तृतीयपादे 'तद्वि-हीन'मित्यत्र 'तद्युत सत्' इति ज्ञेयम् । ग्रहणान्यविशेषार्थं मदीयं ग्रह-णकरणं निरीक्षणीयमिति ॥ ३३ ॥

इदानीं कलात्मकबिम्बान्याह ।

**तद्गुणितं व्यासार्धं शशिकर्णहृतं तमःप्रमाणकलाः ।**
**एवं त्रिज्या रविशशिविष्कम्भगुणा स्वकर्णहृता ॥ ३४ ॥**

स्पष्टार्थम् । 'सूर्येन्दुभूभातनुयोजनानि त्रिज्याहतानि'—इत्यादि भास्करोक्तमेतदनुरूपमेव ।

अत्रोपपत्तिः । त्रैराशिकेन भास्करोक्तया स्फुटा ॥ ३४ ॥

इदानीं छादकमाह ।



## अथ ग्रहणवासना ।

तत्रादौ छादकनिर्णयमाह ।

**महदिन्दोरावरणं कुण्ठविषाणो यतोऽर्धसञ्छन्नः ।**
**अर्धच्छन्नो भानुस्तीक्ष्णविषाणस्ततोऽस्याल्पम् ॥ ३६ ॥**

यतोऽर्धसञ्छन्नश्चन्द्रः कुण्ठविषाणो भवत्यत इन्दोरावरणं छादकमानं महत् । भानुश्चार्धच्छन्नस्तीक्ष्णविषाणो भवति ततस्तस्यावरणमल्पमस्तीत्यवगम्यते । लघुपरिधौ महापरिधिखण्डितेन विषाणयोः परिधियोगबिन्दौ. कुण्ठता महापरिधौ च लघुपरिधिखण्डितेन विषाणयोस्तीक्ष्णतोत्पद्यते । अतश्चन्द्रस्य छादकः पृथुतरः सूर्यस्याल्पतर इति । 'छादकः पृथुतरस्ततो विधोः'—इत्यादि भास्करोक्तमेतदनुरूपमेव ॥ ३६ ॥

इदानीं राहुकृतं ग्रहणं नेति वराहमिहिरादीनां मतं प्रतिपादयति ।

**यदि राहुः प्राग्भागादिन्दुं छादयति किं तथा नार्कम् ।**
**स्थित्यर्धं महदिन्दोर्यथा तथा किं न सूर्यस्य ॥ ३७ ॥**
**किं प्रतिविषयं सूर्यो राहुश्चान्यो यतो रविग्रहणे ।**
**ग्रासान्यत्वं न ततो राहुकृतं ग्रहणमर्केन्द्वोः ॥ ३८ ॥**
**एवं वराहमिहिरश्रीषेणार्यभटविष्णुचन्द्राद्यैः ।**
**लोकविरुद्धमभिहितं वेदस्मृतिसंहिताबाह्यम् ॥ ३९ ॥**

आर्यात्रय स्पष्टार्थम् । एवं वराहमिहिरादिभी राहुकृत रवीन्द्वोर्न ग्रहणमिति लोकविरुद्धं वेदस्मृतिसंहिताबाह्यं चाभिहितम् ॥ ३७—३९ ॥

इदानीं संहितामतमवलम्ब्य वराहादीन् निराकरोति ।

**यद्येवं ग्रहणफलं गर्गाद्यैः संहितासु यदभिहितम् ।**
**तदभावे होमजपस्नानादीनां फलाभावः ॥ ४० ॥**

गर्गाद्यै राहुवशतः संहितासु यद्ग्रहणफलमभिहितं तद्व्यर्थमेव यद्येवमेव वराहमिहिरादीनां मतमिति । तदभावे राहुकृतग्रहणाभावे । शेषं स्पष्टार्थम् ॥ ४० ॥

इदानीं लोकमतमाह ।

राहुकृतं ग्रहणद्वयमागोपालाङ्गनादिसिद्धमिदम् ।
बहुफलमिदमपि सिद्धं जपहोमस्नानफलमत्र ॥ ४१ ॥

स्पष्टार्थम् ॥ ४१ ॥

इदानीं राहुकृतं ग्रहणमित्यत्र स्मृतिवाक्यं प्रदर्शयति ।

स्मृतिषूक्तं न स्नानं राहोरन्यत्र दर्शनाद्राज्ञी ।
राहुग्रस्ते सूर्ये सर्वं गङ्गासमं तोयम् ॥ ४२ ॥

स्पष्टार्थम् ॥ ४२ ॥

इदानीं वेदवाक्यं राहुकृतग्रहणे प्रदर्शयति ।

स्वर्भानुरासुरिरिनं
तमसा विव्याध वेदवाक्यमिदम् ।
श्रुतिसंहितास्मृतीनां
भवति यथैक्यं तदुक्तिरतः ॥ ४३ ॥

'स्वर्भानुर्ह वा आसुरिः सूर्यं तमसा विव्याध'—इति माध्यन्दिनी श्रुतिः । अथ यथा श्रुतिसंहितास्मृतीनामैक्यं भवति तथा कथनमुचितमत एकवाक्यताप्रतिपादनार्थं तदुक्तिरत्रोचिता ॥ ४३ ॥

इदानीं स्वोक्तिमाह ।

राहुस्तच्छादयति प्रविशति यच्छुक्लपक्षदर्शयन्ते ।
भूछायातमसीन्दोर्वरप्रदानात् कमलयोनेः ॥ ४४ ॥
चन्द्रोऽम्बुमयोऽधःस्थो यदग्निमयभास्करस्य मासान्ते ।
छादयति शमिततापो राहुश्छादयति तत् सवितुः ॥ ४५ ॥

इन्दोर्यद्बिम्बं शुक्लपक्षदर्शयन्ते पूर्णान्ते भूछायातमसि भूभान्धकारे प्रविशति तदेव बिम्बं कमलयोनेर्ब्रह्मणो वरप्रदानाद्भूछायामाश्रित्य राहुश्छादयति । एवं मासान्ते दर्शान्तेऽग्निमयस्य भास्करस्य यद्बिम्बं जलमयः शमिततापोऽधःस्थश्च चन्द्रश्छादयति सवितुः सूर्यस्य तदेव बिम्बं चन्द्रच्छायामाश्रित्य राहुश्छादयतीति । भास्करोक्तिरप्येतादृशी ॥ ४५ ॥

इदानीं राहुतनुमाह ।

भूछायाव्याससमः शशिकक्षायां स्थितः शशिग्रहणे ।
राहुश्छादयतीन्दुं सूर्यग्रहणेऽर्कमिन्दुसमः ॥ ४६ ॥

शशिग्रहणे शशिकक्षायां स्थितो भूछायाव्याससमो राहुरिन्दुं सूर्यग्रहणे चेन्दुसमोऽर्कं सूर्यं च छादयति ॥ ४६ ॥

इदानीं राहुदर्शनं ग्रहणे किमु न भवतीत्याशङ्क्याह ।

यत् तदधिकं तमोमयराहुव्यासस्य सूर्यदृष्टत्वात् ।
नश्यति भूछायेन्द्वोर्व्याससमोऽस्माद्भवति राहुः ॥ ४७ ॥

तमोमयराहुव्यासस्य यन्मानं तदधिकं ताभ्यां भूभाचन्द्रव्यासाभ्यामधिकं तत् सूर्यदृष्टत्वात् तत्तेजसा नश्यति तस्माद्राहुर्भूछायासमश्चन्द्रसमो व्याससमश्चैव भवति । स चान्धकारमध्ये स्थितत्वान्न दृश्यो भवतीति स्फुटम् ॥ ४७ ॥

इदानीं निर्गलितार्थमाह ।

भूछायेन्दुमतो हि ग्रहणे छादयति नार्कमिन्दुर्वा ।
तत्स्थस्तद्व्याससमो राहुश्छादयति शशिसूर्यौ ॥ ४८ ॥

अतो ग्रहणे भूछाया चन्द्रं वा चन्द्रः सूर्यं न छादयति । किन्तु तद्व्याससमस्तत्स्थो राहुरेव शशिसूर्यौ छादयतीति सिद्धान्तः ॥ ४८ ॥

इति ग्रहणवासना ।



## अथ गोलबन्धाधिकारः ।

तत्रादौ पूर्वापरयाम्योत्तरक्षितिजवृत्तान्याह ।

प्राच्यपरं सममण्डलमन्यद्याम्योत्तरं क्षितिजमन्यत् ।
परिकरवत् तन्मध्ये भूगोलस्तत्स्थितद्रष्टुः ॥ ४९ ॥

पूर्वापरमेव वृत्तं सममण्डलम् । अन्यद्याम्योत्तरवृत्तम् । परिकरवत् कटिबन्धनवत् तदर्धेऽन्यत् क्षितिजम् । तन्मध्ये तेषां वृत्तानां गर्भीयकेन्द्रे तत्स्थितद्रष्टुस्तस्य भूगोलस्योपरि स्थितो यो द्रष्टा तस्य भूगोलः कल्प्य इति ॥ ४९ ॥

इदानीमुन्मण्डलमाह ।

पूर्वापरयोर्लग्नं याम्योत्तरयोर्नतोन्नतं क्षितिजात् ।
स्वाक्षांशैरुन्मण्डलमहर्निशोर्हानिवृद्धिकरम् ॥ ५० ॥

स्पष्टार्थम् । 'पूर्वापरक्षितिजसक्तमु...विलग्नम्'—इत्यादि भास्करोक्तमेतदनुरूपम् ॥ ५० ॥

इदानीं विषुवन्मण्डलमाह ।

विषुवन्मण्डलमूर्ध्वं सममण्डलतः स्थितं स्वकाक्षांशैः ।
याम्येनोत्तरतोऽधः क्षितिजे प्राक्पश्चयोर्लग्नम् ॥ ५१ ॥

ऊर्ध्वं खस्वस्तिकम् । अधोऽध स्वस्तिकम् । शेषं स्पष्टम् ।

'पूर्वापरस्वस्तिकयोर्विलग्नम्'—इत्यादि भास्करोक्तं चिन्त्यम् ॥ ५१ ॥

इदानीं क्रान्तिमण्डलमाह ।

विषुवन्मण्डललग्नं मेषतुलादावुदक् कुलीरादौ ।
जिनभागैर्याम्येन मृगादावपमण्डलमिहार्कः ॥ ५२ ॥
पाताश्चन्द्रादीनां भ्रमन्ति भार्धे रवेश्च भूछाया ।
पातादपमण्डलवद् विमण्डलानि स्वविक्षेपैः ॥ ५३ ॥

स्पष्टार्थम् । 'क्रान्तिवृत्तं विधेयम्'—इत्यादि तथा 'क्रान्तिपाते च पाताद्भपट्कान्तरे' इत्यादि भास्करोक्तं चिन्त्यम् । आचार्यमतेऽयनाभावो

ज्ञेयं । पातादपमण्डलवदित्यनेन ग्रहाणां विमण्डलानि न्यस्तानीत्यवे सम्बन्धः ।

इदानीं विमण्डलान्याह ।

**सौम्यं विमण्डलार्धं प्रथमं याम्यं द्वितीयमेतेषु ।**
**चन्द्रकुजजीवमन्दा भ्रमन्ति शीघ्रेण बुधशुक्रौ ॥ ५४ ॥**

प्रथमं विमण्डलार्धं मेषादिराशिषट्के विक्षेपांशैः सौम्यं द्वितीयमर्धं तुलादिषट्के च याम्यं विक्षेपांशैर्भवतीति । बुधशुक्रौ शीघ्रेण शीघ्रोच्चेन स्वस्वविमण्डले भ्रमतः । तयोः शीघ्रोच्चे विमण्डले भ्रमत इति शेषं स्पष्टार्थम् ॥ ५४ ॥

इदानीं दृङ्मण्डलमाह ।

**दृङ्मण्डलार्धमूर्ध्वं यत् तत्परिधिस्थितं ग्रहं द्रष्टा ।**
**पश्यति यतः क्षितिस्थस्तद् भ्रमति ततो ग्रहाभिमुखम् ॥ ५५ ॥**

यतः क्षितिस्थः क्षितिगर्भस्थो द्रष्टा यदूर्ध्वं दृङ्मण्डलार्धं तत्परिधिस्थितं ग्रहं पश्यति ततस्तस्मात् कारणात् तद्दृङ्मण्डलं ग्रहाभिमुखं भ्रमति । 'ऊर्ध्वाधःस्वस्तिककीलयुग्मे' इत्यादि भास्करोक्तं विचिन्त्यम् ॥ ५५ ॥

इदानीं दृक्क्षेपमण्डलमाह ।

**क्षितिजापमण्डलयुतिर्लग्नं लग्नाग्रया दिशा लग्नम् ।**
**दृक्क्षेपमण्डलं दक्षिणोत्तरं त्रिभविलग्ने ॥ ५६ ॥**

क्षितिजक्रान्तिमण्डलयोर्यत्र युतिस्तदेव लग्नम् । दृक्क्षेपमण्डलं लग्नाग्रया दिशा लग्नं त्रिभलग्ने त्रिभलग्नस्थाने क्रान्तिमण्डले दक्षिणोत्तरं तिर्यग्भवति । लग्नाग्रा यद्युत्तरा तदा लग्नाग्रांशैर्दक्षिणसमस्थानात् पूर्वस्वस्तिकाद् दक्षिणायां च लग्नाग्रांशैरुत्तरसमस्थानात् पश्चिमस्वस्तिकादिशि क्षितिजे लग्नं त्रिभलग्नस्वस्तिकगतं दृक्क्षेपमण्डलं भवतीत्यर्थः । 'क्षेप तदेशाखिलखेचराणाम्'—इत्यादि भास्करोक्तं विचिन्त्यम् ॥ ५६ ॥

इदानीं द्वादशराशीनामहोरात्रवृत्तान्याह ।

**विषुवद्वृत्तवद्बध्नीयात् क्रान्त्यंशसमान्तरेष्वजादीनाम् ।**

वृत्तत्रितयं व्यस्तं कर्क्यादीनां तुलादीनाम् ॥ ५७ ॥
विषुवद्दक्षिणतोऽन्यन्मकरादीनां तदेव विपरीतम् ।
स्वाहोरात्राण्येषां व्यासाः पृथगेवमिष्टमपि ॥ ५८ ॥

स्वाहोरात्राणि द्युज्या एषामहोरात्रवृत्तानां व्यासा ज्ञेयाः । एवमिष्टमहोरात्रवृत्तमपि पृथग्गोलोपरि निवेश्यम् । शेषं स्पष्टम् । 'येष्विष्टक्रान्तितुल्येऽन्तरे'-इत्यादि तथा 'अथ कल्प्या मेषाद्याः' इत्यादि च भास्करोक्तं विचिन्त्यम् ॥ ५७–५८ ॥

इदानीं राश्युदयाः किमु समा नेत्याशङ्क्याह ।

लङ्कासमपश्चिमगं प्राणेन कलां भमण्डलं भ्रमति ।
अपमण्डलस्य राशिर्द्वादशभागः क्षितिजलग्नाः ॥ ५९ ॥
यान्त्युदयं मेषाद्या यतस्तदुदया न कालसमाः ।
क्रान्तिवशात्लङ्कायां तदूनताधिक्यमक्षवशात् ॥ ६० ॥

लङ्कासमपश्चिमगं भमण्डलं भचक्रमध्यप्रदेशरूपं नाडीमण्डलं प्राणेनैकेनासुना कलामेकां कलां भ्रमति । नाडीमण्डलस्यैका कलैकेनासुनोदेति । क्रान्तिमण्डलस्य द्वादशभागो द्वादशसमानभागो राशिरुच्यते । ते मेषाद्याः क्षितिजलग्ना यत उदयं यान्त्यतो लङ्कायां क्रान्तिवशात् तिरश्चीनत्वात् तदुदयाः कालसमाः कालेन समा न सन्ति । एवं स्वदेशेऽपि क्रान्तिवशादक्षवशाच्च तेषां राशीनामुदयेषु ऊनताधिक्यं भवति । 'यो हि प्रदेशोऽपममण्डलस्य तिर्यक्स्थितो यात्युदयं तथाऽस्तम्'–इत्यादि भास्करोक्तं चिन्त्यम् ॥ ६० ॥

इदानीं चरार्धयोर्व्याख्यानमाह ।

क्षितिजोन्मण्डलयोर्यत् स्वाहोरात्रान्तरं चरदलं तत् ।
क्षितिजेऽग्रा प्राच्यपरस्वाहोरात्रान्तरांशज्या ॥ ६१ ॥

स्पष्टार्थम् । 'उन्मण्डलस्यावलयान्तरं ते'–इत्यादि तथा 'स्वाग्रे द्युरात्रसममण्डलमध्यभागः'–इत्यादि भास्करोक्तमेतदनुरूपं विचिन्त्यम् ॥ ६१ ॥

ज्ञेय । पातादपमण्डलवदित्यनेन यद्वाच्या विमण्डलानि न्यस्तानीत्यस्य सम्बन्ध ।

इदानीं विमण्डलान्याह ।

**सौम्यं विमण्डलार्धं प्रथमं याम्यं द्वितीयमेतेषु ।**
**चन्द्रकुजजीवमन्दा भ्रमन्ति शीघ्रेण बुधशुक्रौ ॥ ५४ ॥**

'प्रथमविमण्डलार्धे मेषादिराशिषट्कं विक्षेपांशै सौम्य द्वितीयमर्धं तुलादिषट्कं च याम्य विक्षेपांशैर्भवेत् । बुधशुक्रौ शीघ्रेण शीघ्रोच्चेन स्वस्वविमण्डले भ्रमत । तयो शीघ्रोच्चे विमण्डले भ्रमत इति शेष स्पष्टार्थम् ॥ ५४ ॥

इदानीं दृग्मण्डलमाह ।

**दृग्मण्डलार्धमूर्ध्वं यत् तत्परिधिस्थितं ग्रहं द्रष्टा ।**
**पश्यति यतः क्षितिस्थस्तद् भ्रमति ततो ग्रहाभिमुखम् ॥५५॥**

यत क्षितिस्थ क्षितिगर्भस्थो द्रष्टा यदूर्ध्वं दृग्मण्डलार्धं तत्परिधिस्थित ग्रहं पश्यति ततस्तस्मात् कारणात् तद्दृग्मण्डल ग्रहाभिमुखं भ्रमति । 'ऊर्ध्वाधरस्वस्तिककीलयुग्मे' इत्यादि भास्करोक्तं विचिन्त्यम् । ५५॥

इदानीं दृक्क्षेपमण्डलमाह ।

**क्षितिजापमण्डलयुतिर्लग्नं लग्नाग्रया दिशा लग्नम् ।**
**दृक्क्षेपमण्डलं दक्षिणोत्तरं वित्रिभविलग्ने ॥ ५६ ॥**

क्षितिजक्रान्तिमण्डलयोर्यत्र युतिस्तदेव लग्नम् । दृक्क्षेपमण्डल लग्नाग्रया दिशा लग्न वित्रिभलग्ने वित्रिभलग्नस्थाने क्रान्तिमण्डले दक्षिणोत्तर तिर्यग्भवति । लग्नाग्रा यद्युत्तरा तदा लग्नाग्रांशैर्दक्षिणमस्थानात् पूर्वस्वस्तिकदिशि दक्षिणाग्राया च लग्नाग्रांशैर्दक्षिणमस्थानात् पश्चिमस्व स्तिकदिशि क्षितिजे लग्न वित्रिभखस्वस्तिकगत दृक्क्षेपमण्डल भवती-त्यर्थ. । 'मेष तदेवाखिलखेचराणाम्'—इत्यादि भास्करोक्तं विचिन्त्यम् ॥५६॥

इदानीं द्वादशराशीनामहोरात्रवृत्तान्याह ।

**विषुवद्युगण्भीयात् क्रान्त्यंशसमान्तरेऽजादीनाम् ।**

वृत्तत्रितयं व्यस्तं कर्क्यादीनां तुलादीनाम् ॥ ५७ ॥
विषुवद्दक्षिणतोऽन्यन्मकरादीनां तदेव विपरीतम् ।
स्वाहोरात्राण्येषां व्यासाः पृथगेवमिष्टमपि ॥ ५८ ॥

स्वाहोरात्राणि क्रान्त्या एषामहोरात्रवृत्तानां व्यासा ज्ञेयाः । एवमिष्टमहोरात्रवृत्तमपि पृथग्गोलोपरि निवेश्यम् । शेषं स्पष्टम् । 'ईप्सितक्रान्तितुल्येऽन्तरे'-इत्यादि तथा 'अथ क्रान्त्या मेषाद्याः' इत्यादि च भास्करोक्तं विचिन्त्यम् ॥ ५७–५८ ॥

इदानीं राश्युदयाः किमु समा नेत्याशङ्क्याह ।

लङ्कासमपश्चिमगं प्राणेन कलां भमण्डलं भ्रमति ।
अपमण्डलस्य राशिर्द्वादशभागः क्षितिजलग्नाः ॥ ५९ ॥
यान्त्युदयं मेषाद्या यतस्तदुदया न कालसमाः ।
क्रान्तिवशाल्लङ्कायां तदूनताधिक्यमक्षवशात् ॥ ६० ॥

लङ्कासमपश्चिमगं भमण्डलं भचक्रमध्यप्रदेशरूपं नाडीमण्डलं प्राणेनैकेनामुना कलामेकां कलां भ्रमति । नाडीमण्डलस्यैका कलैकेनासुनोदेति । क्रान्तिमण्डलस्य द्वादशभागो द्वादशसमानभागो राशिरुच्यते । ते मेषाद्याः क्षितिजलग्ना यत उदयं यान्त्यतो लङ्कायां क्रान्तिवशात् तिरश्चीनत्वात् तदुदयाः कालसमाः कालेन समा न सन्ति । एवं स्वदेशेऽपि क्रान्तिवशादक्षवशाच्च तेषां राशीनामुदयेषु ऊनताधिक्यं भवति । 'यो हि प्रदेशोऽपममण्डलस्य तिर्यक्स्थितो यात्युदयं तथाऽस्तम्'–इत्यादि भास्करोक्तं विन्त्यम् ॥ ६० ॥

इदानीं चरार्धयोः ज्यानमाह ।

क्षितिजोन्मण्डलयोर्यत् स्वाहोरात्रान्तरं चरदलं तत् ।
क्षितिजेऽग्रा प्राच्यपरस्वाहोरात्रान्तरांशज्या ॥ ६१ ॥

स्पष्टार्थम् । 'उन्मण्डलक्ष्मावलयान्तरं से –

इत्यादि तथा 'स्वाग्रे द्युरात्रसममण्डलमध्यभाग'–इत्यादि भास्करोक्तमेतदनुरूपं विचिन्त्यम् ॥ ६१ ॥

इदानीं शङ्कुदृग्ज्ययोः संस्थानमाह ।

**स्वाहोरात्रे क्षितिजाद्दिनगतशेषोच्छ्रिता रवेः शङ्कुः ।**
**तस्माद्दिनगतशेषं शङ्कुकुमध्यान्तरं दृग्ज्या ॥ ६२ ॥**

क्षितिजात् सकाशात् स्वाहोरात्रवृत्ते दिनगते वा पश्चिमकपाले दिनशेषे या रवेरुच्छ्रिता लम्बरूपा स शङ्कुर्भवति । तस्माच्छङ्कोश्च त्रिप्रश्नाधिकारविधिना दिनगतशेषं च भवति । शङ्कुकुमध्यान्तरं शङ्कुमूलस्य कुमध्यस्य भूगर्भस्य चान्तरं दृग्ज्येत्युच्यते । रविकेन्द्रात् क्षितिजोपरि लम्बः शङ्कुः । शङ्कुमूलं भूगर्भान्तरं च दृग्ज्या भवतीत्यर्थः ॥ ६२ ॥

इदानीं प्रकारान्तरेण पुनस्तयोः संस्थानं शङ्कुतलं चाह ।

**दृग्मण्डले नतांशज्या दृग्ज्या शङ्कुरुन्नतांशज्या ।**
**अर्कोदयास्तसूत्राद्दिनशङ्कोर्दक्षिणेन तलम् ॥ ६३ ॥**

दिनशङ्कोर्दिवा शङ्कोस्तलं मूलमर्कोदयास्तसूत्राद्दक्षिणेन भवति । अर्कग्रहणमुपलक्षणार्थम् ।

शेषं स्पष्टार्थम् । 'दृङ्मण्डलभवा लवा. कुजात्'—इत्यादि भास्करोक्तमेतदनुरूपं विचिन्त्यम् ॥ ६३ ॥

इदानीं दृग्गोलस्य दृश्यादृश्यत्वं लम्बनावनत्युत्पत्तौ कारणं चाह ।

**दृश्यादृश्यं दृग्गोलार्धं भूव्यासदलविहीनयुतम् ।**
**द्रष्टा भूगोलोपरि यतस्ततो लम्बनावनती ॥ ६४ ॥**

दृग्गोलार्धं दृग्मण्डलार्धं भूव्यासदलेन विहीनं कुपृष्ठगानां दृश्यखण्डं भूव्यासदलेन युतं चादृश्यखण्डं भवति । यतो द्रष्टा भूगोलोपरि भूपृष्ठे तिष्ठति ततस्तस्माल्लम्बनावनती भवतः । 'कुपृष्ठगानां कुदलेन हीनम्'—इत्यादि तथा 'यतः क्वर्धोच्छ्रितो द्रष्टा'—इत्यादि भास्करोक्तमेतदनुरूपं विचिन्त्यम् ॥ ६४ ॥

इदानीं परमलम्बनावनती चाह ।

**क्षितिजे भूदललिप्ताः कक्षायां दृङ्नतिर्नभोमध्यात् ।**
**अवनतिलिप्ता याम्योत्तरा रविग्रहवदन्यच्च ॥ ६५ ॥**

नभोमध्यात खस्वस्तिकात् कक्षाया ग्रहगोले दृग्मण्डले क्षितिजे या भूदललिप्ता. कुक्कलिप्ता. सा दृङ्नतिर्दृग्लम्बन परममुच्यते। अथ नतिलिप्ता तत्र दृग्मण्डले याम्योत्तरा लम्बरूपा भवति। अन्यत्र ग्रहयोर्वा भग्रहयोर्युतावेव दृग्लम्बननतिसंस्थान विज्ञाय स्पष्टलम्बनादिक रविग्रहवत् कार्यमिति दिग्मात्रमिहाचार्येण प्रदर्शित ग्रहयुत्यादौ च विशेषतः प्रतिपादितमिति ॥ ६५ ॥

इदानीं दृक्कर्माह।

**सत्रिगृहक्रान्तिरुदग्दक्षिणयोस्त्रिज्यया हृतं वलनम्।**
**विक्षेपगुणमृणधनं ग्रहेऽन्यदृक्कर्म चरदलवत् ॥ ६६ ॥**

उदग्दक्षिणयोरुत्तरदक्षिणायनयोः सत्रिगृहक्रान्तिः सत्रिभग्रहक्रान्तिज्या वलनमायन वलन भवति। तद्विक्षेपेण गुण त्रिज्यया हृत ग्रहे ऋण वा धनमायन दृक्कर्म भवति। अन्यदृक्कर्माक्षज दृक्कर्म चरदलवत् चरसाधनवज्ज्ञेयम्।

अत्रोपपत्त्यर्थमुदयास्ताधिकारे ३–४ श्लोकयोरुपपत्तिर्विलोक्या। अत्रैव चतुर्वेदाचार्येण 'सत्रिगृहग्रहोत्क्रमज्यया क्रान्ति' साध्ये'त्यन्यथा व्याख्यातमत एव भास्कर. 'ब्रह्मगुप्तकृतिरत्र सुन्दरी सान्यथा तदनुगैर्विचार्यते' इत्याद्युक्तवान् ॥ ६६ ॥

इदानीं ग्रहर्क्षगोलयो. स्थिरवृत्तान्याह।

**कक्षामण्डलतुल्यं प्राच्यपरं दक्षिणोत्तरं क्षितिजम्।**
**उन्मण्डलविषुवन्मण्डले स्थिराणि ग्रहर्क्षाणाम् ॥ ६७ ॥**

पूर्वापरम्। दक्षिणोत्तरम्। क्षितिजम्। उन्मण्डलम्। विषुवन्मण्डलम्। सर्वं कक्षामण्डलतुल्य समान महद्वृत्त च ज्ञेयम्। ग्रहर्क्षाणा गोलयोरेतानि स्थिराणि वृत्तानि सन्तीति ॥ ६७ ॥

इदानीं ग्रहाणा चलवृत्तान्याह।

**मन्दोच्चानां सशीघ्रोच्चनीचवृत्तानि पञ्च शीघ्राणाम्।**
**प्रतिमण्डलानि चैवं प्रत्येकं भास्करादीनाम् ॥ ६८ ॥**

दृग्मण्डलविक्षेपापमण्डलानि सुधाकरादीनाम् ।
षट्कं विमण्डलानां चलवृत्तान्येकपञ्चाशत् ॥ ६९ ॥

मन्दनीचोच्चवृत्तानि = ७
भौमादीनां शीघ्रनीचोच्चवृत्तानि = ५
मन्दप्रतिवृत्तानि = ७
शीघ्रप्रतिवृत्तानि = ५

दृग्मण्डलं दृक्क्षेपमण्डलं कक्षा-

मण्डलं चेति सप्तानां ग्रहाणाम् = २१
चन्द्रादीनां षड् विमण्डलानि = ६
५१

एवं चलवृत्तान्येकपञ्चाशत् सन्तीति ॥ ६८–६९ ॥

इदानीमध्यायोपसंहारमाह ।

यत् स्पष्टीकरणार्थं गोलादुत्प्रेक्ष्य तत् कृतं सर्वम् ।
गोलाध्यायः समस्त्यार्याणामेकविंशोऽयम् ॥ ७० ॥

इति श्रीब्राह्मस्फुटसिद्धान्ते गोलाध्यायो नामै-
कविंशतितमोऽध्यायः ॥ २१ ॥

इह मया यत् स्पष्टीकरणार्थं सर्वं कृतं तद्गोलादुत्प्रेक्ष्यावगम्य कृत-
मतः सर्वं सयुक्तिकं ज्ञेयमिति । शेषं स्पष्टार्थम् ॥ ७० ॥

मधुसूदनसूनुनोदितो यस्तिलकः श्रीपृथुनेह जिष्णुजोक्ते ।
हृदि तं विनिधाय नूतनोऽयं रचितो गोलविधौ सुधाकरेण ॥

इति श्रीकृपालुदत्तसूनुसुधाकरद्विवेदिविरचिते ब्राह्मस्फुटसिद्धान्तनूतन-
तिलके गोलाध्यायो नामैकविंशोऽध्यायः ॥ २१ ॥



# अथ यन्त्राध्यायः ।

तत्रादौ गोलप्रशंसामाह ।

**मध्यायमिह यदुक्तं तत् प्रत्यक्षमिव दर्शयति यस्मात् ।**
**तस्मादाचार्यत्वं गोलविदो भवति नान्यस्य ॥ १ ॥**

यस्मादिह सिद्धान्ते यन्मध्याद्यं गणितमुक्तमस्ति तत् सर्वं गोल-वित् प्रत्यक्षमिव दर्शयति तस्माद्गोलविद एवाचार्यत्वं भवति नान्यस्येति ॥ १ ॥

इदानीं स्वगोलग्रथने कारणमाह ।

**आचार्यैर्न ज्ञातः श्रीषेणार्यभटविष्णुचन्द्राद्यैः ।**
**गोलो यस्मात् तस्मात् ब्राह्मो गोलः कृतः स्पष्टः ॥ २ ॥**

यस्मात् श्रीषेणार्यभटविष्णुचन्द्राद्यैर्गोलो न ज्ञातस्तस्मान्मयाऽयं ब्राह्मो गोलः स्पष्टः कृत इति ॥ २ ॥

इदानीं गणितगोलप्रशंसामाह ।

**गणितज्ञो गोलज्ञो गोलज्ञो ग्रहगतिं विजानाति ।**
**यो गणितगोलबाह्यो जानाति ग्रहगतिं स कथम् ॥ ३ ॥**

यो गणितज्ञः स गोलज्ञो भवति गोलस्य गणितक्षेत्रान्तर्गतत्वात् । यो गोलज्ञः स एव ग्रहगतिं विशेषेण जानाति । तस्माद्यो गणितगोल-बाह्योऽस्ति स कथं ग्रहगतिं जानाति । न जानातीत्यर्थः ॥ ३ ॥

इदानीं यन्त्राध्यायारम्भे कारणमाह ।

**गोलस्य परिच्छेदः कर्तुं यन्त्रैर्विना यतोऽशक्यः ।**
**संक्षिप्तं स्पष्टार्थं यन्त्राध्यायं ततो वक्ष्ये ॥ ४ ॥**

यतो यन्त्रैर्विना गोलस्य परिच्छेदः सम्यग्विचारः कर्तुं गणकेनाऽशक्यो भवति ततो गोलस्य स्पष्टार्थं संक्षिप्तं यन्त्राध्यायमहं वक्ष्य इत्याचार्योक्तिः ॥ ४ ॥

इदानीं यन्त्राण्याह ।

सप्तदश कालयन्त्राण्यतो धनुस्तुर्यगोलकं चक्रम् ।
यष्टिः शङ्कुर्घटिका कपालकं कर्त्तरी पीठम् ॥ ५ ॥
सलिलं भ्रमोऽवलम्बः कर्णश्छाया दिनार्धमर्कोऽक्षः ।
नतकालज्ञानार्थं तेषां संसाधनान्यष्टौ ॥ ६ ॥

अतो धनुर्यन्त्रम् । तुर्यगोल तुरीयम् । चक्रयन्त्रम् । यष्टि । शङ्कु । घटिका घटीयन्त्रम् । कपालयन्त्रम् । कर्त्तरी । पीठसञ्ज्ञं यन्त्रम् । सलिल जलम् । भ्रम शाण । अवलम्बोऽवलम्बसूत्रम् । कर्णश्छायाकर्णः । छाया शङ्कुच्छाया । दिनार्धं दिनार्धमानम् । अर्क सूर्य । अक्ष पला शा । अतो नतकालज्ञानार्थं सप्तदश कालयन्त्राणि सन्ति । तेषां यन्त्राणां मध्ये सलिलादीन्यष्टौ यन्त्रसंसाधनानि यन्त्ररचनामूलभूतानि सन्ति ॥ ५–६ ॥

इदानीं सलिलादिभिः किं क्रियत इत्याह ।

सलिलेन समं साध्यं भ्रमेण वृत्तमवलम्बकेनोर्ध्वम् ।
तिर्यक्कर्णेनान्यैः कथितैश्च नव प्रवक्ष्यामि ॥ ७ ॥

सलिलेन समं साम्यं साध्यम् । भ्रमेण शाणेन वृत्तं साध्यम् । अवलम्बकेनोर्ध्वमूर्ध्वाधरत्वं साध्यम् । कर्णेनान्यैः कथितैश्छायादिभिश्च यन्त्रस्य तिर्यक् तिर्यक्त्वं साध्यम् । एतन्नवविधानि नव यन्त्राणि प्रवक्ष्याम्यहमित्याचार्योक्तिः ॥ ७ ॥

इदानीं धनुर्यन्त्रमाह ।

धार्यं धनुस्तथाऽन्यत् छायासाम्यं यथोन्नता भागाः ।
दिनगतशेषा घटिकाः स्वलम्बभुक्ता धनुर्मध्यात् ॥ ८ ॥

धनुर्यन्त्रं तथा धार्यं यथाऽन्यत् छायासाम्यं भवेत् । अर्थात्तुल्यं भवति । यस्मिन् दिने धनुर्यन्त्रेण कालज्ञानमभीष्टं तद्दिनसम्बन्धिक्रान्ति चरादिना [illegible]

छाया [illegible] धनुर्धार्यं

यथा कीलच्छायाधनुरुदयोरन्तरे परिधौ कीलच्छायासम्बन्धि गणितागत-शङ्कुभागसमा भागाः स्युस्तथाग्रे वाऽवलम्बोऽपि दृक्सूत्राकारो लगति । अतो धनुर्मध्यात् स्वलम्बयुक्ता भागा रवेरुन्नता भागास्तथा तत्कालिक उन्नतकालश्च पूर्वापरकपालयोर्दिनगतशेषा घटिकाः स्युः ।

अत्रोपपत्तिः । गोलयुक्त्यैव स्फुटा ॥ ८ ॥

इदानीं प्रकारान्तरेण यन्त्रं सूर्याभिमुखे कथं समं धार्यमित्येतदर्थमाह ।

**धार्यं समं तथा वा ज्या छाया मध्यगा यथा भवति ।**
**अग्रादिष्टा घटिका ज्यामध्यच्छायया भुक्ताः ॥ ९ ॥**

यथा ज्याछाया धनुषो ज्यायाः पूर्णज्यायाश्छाया मध्यगा धनुषो मध्यगा भवति तथा वा यन्त्रं समं धार्यम् । दृग्मण्डलाकारं धार्यं यथा तत्पार्श्वयो रवेस्तुल्यं तेजो लगतीत्यर्थः । एवं ज्यामध्यच्छायया ज्याया धनुःपूर्णज्याया मध्येऽर्थात् केन्द्रे स्थापितो यः कीलस्तस्य छायया भुक्ता या अग्राद्धनुःकोट्यग्रादङ्किता घटिकास्ता इष्टा घटिकाः स्युः ॥ ९ ॥

गोलयुक्त्यैव वासनाऽत्र ज्ञेया ॥ ९ ॥

इदानीं प्रकारान्तरेणेष्टघटिका धनुःस्वरूपं चाह ।

**घटिका स्वशङ्कुभागैः पृथग्गतैर्लम्बभूसमज्यार्धात् ।**
**साशीतिशतांशाङ्कं चक्रस्यार्धं धनुर्यन्त्रम् ॥ १० ॥**

पृथग्गतैः स्वशङ्कुभागैर्लम्बभूसमज्यार्धाद्वा घटिकाः साध्याः । अत्रैतदुक्तं भवति । यदि स्वाभीष्टदिनेष्टकाले शङ्कुभागा एव विदितास्तदा धनुःकोट्यग्रात् तान् भागान् दत्त्वा तदग्राद्धनुर्ज्या या भूमिस्तस्या उपरि लम्ब एव यो ज्यार्धात् ज्याखण्डतो भवति स शङ्कुस्तस्मात् विप्रश्नविधिनेष्टशङ्कोश्चरादिनेष्टान्त्यामानीय घटिका ज्ञेया इति । चक्रस्य एतस्यार्धे साशीतिशताङ्कं चक्रार्धांशाङ्कं धनुर्यन्त्रं भवति ॥ १० ॥

इदानीं परोक्तघट्यानयनं निराकरोति ।

**मध्यदिवसोन्नतांशैर्दिनार्धनाडीर्वदन्ति तुल्या ये ।**
**ते मूर्खास्तच्छाया इष्टच्छायासमा न यतः ॥ ११ ॥**

ये मध्यदिवसोन्नतांशैर्दिनार्धनाडीस्तुल्या इष्टघटिकाः स्वल्पान्नी-ष्टोन्नतांशेऽनुपातेनेष्टा घटिका वदन्ति ते मूर्खाः सन्ति । यत इष्ट-टीतो यदि दिनार्धघटिकाभिर्मध्योन्नतांशास्तदेष्टघटिकाभिः किमित्य-नुपातेन ये इष्टोन्नतांशा आयान्ति तच्छाया वेधोपलब्धेष्टकालिकच्छा-यासमा न भवन्तीति तेषामानयनमसत् ॥ ११ ॥

इदानीं यन्त्रेण नतोन्नतकालज्ञानार्थमाह ।

जीवां स्वाहोरात्रे परिकल्प्याग्रान्नतोन्नतत्रिज्याः ।
अनुपातात् कार्यास्तुर्यगोलके चक्रके चैवम् ॥ १२ ॥

स्वाहोरात्रे द्युज्यावृत्तेऽनुपाताद् द्वादश कोट्या चलकर्णं तदा शङ्कु-कोट्या किमित्यनुपातात् जीवामिष्टहृतिं प्रकल्प्य ततोऽग्राद्धनु कोट्य यावन्नतोन्नतत्रिज्या कार्या त्रिज्यावशेन नतोन्नतकालौ कार्यौ । अत्रैतदुक्तं भवति । इष्टहृतिवशेन त्रिज्यानुपातेनेष्टान्त्या कार्या । तत्र चरसंस्कारेण सूत्रमुत्पाद्य तत्समा ज्या धनुषि दत्त्वा धनुराद्या घटिकास्ताश्चर-संस्कृतोन्नतकालघटिका । ज्याया धनुरन्त्याधरभागपर्यन्तं या घटिकास्ता नतकालघटिका । एवं गोलयुक्तिवशान्नतोन्नतकालौ तुर्यगोलके तुरीये चक्रे च भवत इति ॥ १२ ॥

इदानीं यन्त्रादेव नतोन्नतकालज्ञानार्थमाह ।

दिनघटिकाङ्कितयष्ट्यस्तन्नतज्याग्रभुजज्यां च ।
दिङ्मध्ये च शलाका तच्छायाग्रान्नता नाड्यः ॥ १३ ॥

दिनघटिकाङ्कितयष्टिसंज्ञा तस्याः सकाशात् प्रतिघटिकं बिन्दु-मध्यस्थापितशलाकाच्छाया प्रसाध्या सा रवितो व्यस्तदिक्का भवति । तत्र प्रतिघटिकोन्नतकालसम्बन्धिच्छायायां तात्कालिकं नतज्यां नतज्याभुज-तज्यां नतकालमुन्नतकालं चाङ्कयेत् । एवमेकस्मिन् फलके प्रतिद्युज्यावृत्त-मिलनीं नतकालाग्राङ्किता भाभ्रमरेखामुत्पादयेत् । इष्टदिने इष्टकाले समभू-तले यथादिक्के स्थापिते फलके बिन्दुस्थशलाकाच्छायाग्रं तद्द्युज्यावृत्तस्थ-भाभ्रमरेखायां यत्र लग्नं तत्राङ्किता नाड्यो नता नाड्यः स्युः । एवं तत्राङ्कि-तोन्नतकालादितश्च नतकालादिज्ञानं भवतीति गोलयुक्त्या स्फुटम् ॥ १३ ॥

इदानीं धनुर्यन्त्रे विशेषमाह ।

धनुषः पृष्ठे दृष्ट्वा वेध्या ज्यामध्यसंस्थया दृष्ट्या ।
दृष्टान्तरं नतज्या धनुषि च्छायोन्नतज्यायाः ॥ १४ ॥
ज्यार्धं दृष्टेर्दृग्ज्यां नतजीवांशं कुमुन्नतज्यां च ।
धनुषि प्रकल्प्य योज्यं यद्युक्तं नाडिकाद्यं च ॥ १५ ॥

दृष्ट्वा पुरुषेण धनुषः पृष्ठे ज्यामध्यसंस्थया पूर्णज्योपरिस्थापितन-लकरन्ध्रगतया दृष्ट्या दृष्टग्रहयोरन्तरम् । उन्नतज्यायाः सकाशात् धनुषि यन्त्रे नतज्या छाया चेत्यादि सर्वं पदार्था वेध्याः । एवं धनुषि धनुर्यन्त्रे दृष्टेर्ज्यार्धमेव दृग्ज्या नतजीवाश नतभागान् । कु भूमिपर्यन्तमर्थात् यन्त्रे कल्पितक्षितिजपर्यन्तमुन्नतज्या च प्रकल्प्य यन्नाडिकाद्यमुपयुक्त मस्ति तत् सर्वं योज्य गोलयुक्तित । तथैव यन्त्रचिन्तामण्यादौ तुरीय यन्त्रेऽङ्कितास्वाक्षतांशादयः प्रसिद्धा. सिद्धान्तविदाम् ॥ १४–१५ ॥

इदानीमन्य विशेषमाह ।

अवलम्बनं शलाकां ज्यार्धं यष्टिं प्रकल्प्य वा धनुषि ।
भूम्युच्छ्रायाल्लम्बो यष्ट्युक्तैरानयेत् करणैः ॥ १६ ॥

वा धनुषि धनुर्यन्त्रे केन्द्रगा शलाकामवलम्बनमवलम्बसूत्र ज्यार्धं चापाना ज्यार्धानि शलाकाप्रोता यष्टि च प्रकल्प्य यष्ट्युक्तैर्यष्ट्याधिकारोक्तै करणै साधनैर्भूम्युच्छ्रायात् क्षितिजोच्छ्रायाल्लम्बो शङ्कुभागादीन् गणक आनयेत् आचार्याक्तित एव तथैव भास्करेण फलकयन्त्रे भवं रचित मिति ॥ १६ ॥

इदानीं तुर्यगोलमाह ।

अङ्कितमंशनवत्या धनुषोऽर्धं तुर्यगोलकं यन्त्रम् ।
घटिकानतोन्नतांशग्रहान्तराद्यं धनुर्वदिह ॥ १७ ॥

धनुषोऽर्धं कोदण्डखण्डमंशनवत्याऽङ्कितं तुर्यगोलकं यन्त्रं भवति । इहापि धनुर्यन्त्रवद्घटिकानतोन्नतांशग्रहान्तराद्यं सिध्यति ॥ १७ ॥

इदानीं चक्रयन्त्रमाह ।

परिधौ भगणांशाङ्कं मीनान्तं चक्रतो विद्धा ।

चक्रकुपत्रं मध्याल्लम्बोऽत्र फलं धनुस्तुल्यम् ॥ १८ ॥

चक्रयन्त्र परिधौ मीनान्त द्वादशराश्यङ्क भगणांशाङ्क च कार्यम् । अत्र परिधौ कल्पिताधारमध्याल्लम्ब कार्यं । अस्माल्लम्बतश्चक्रयन्त्राङ्कादीन् विद्धा फल धनुस्तुल्य धनुर्यन्त्रसम भवति । विशेषार्थं भास्कर-चक्रयन्त्र तदीयगोलयन्त्राध्याये चिन्त्यम् ॥ १८ ॥

इदानीं यष्ट्या शङ्क्वाद्याह ।

यष्टिस्तिर्यग्धार्या नष्टच्छायावलम्बकः शङ्कुः ।

दृग्ज्यान्तरमनुपातात् स्वाहोरात्रार्धमग्रा च ॥ १९ ॥

क्षितिजवृत्तकेन्द्रगता यष्टिस्तथा धार्या यथा सा नष्टच्छाया स्यात् । एवं यष्टिव्यासार्धभगोले यष्ट्यग्रे रविकेन्द्र भवति तस्मात् क्षितिजोपरि योऽवलम्बक स शङ्कुर्भवति । यष्टिमूलाच्छङ्कुमूलपर्यन्तमन्तर दृग्ज्या भवति । अनुपातात यष्टेरनुपातात स्वाहोरात्रार्ध द्युज्या तथा ऽग्रा च साध्या । उदयकाले रविकेन्द्रोपरि यष्ट्यनुपातेनाग्राग्रथा तेन क्षितिजे तत्पातबिन्द्वन्तरमग्राशा तत पलकर्णन द्वादशकोटिस्तदा ऽग्रया कि जाता क्रान्तिज्या । तत्कोटिज्या द्युज्या प्रसिद्धैव । 'यष्ट्यग्रा ल्लम्बोना ज्ञेया दृग्ज्या नृकेन्द्रयोर्मध्ये' इति तथा उदयेऽस्ते यष्ट्यग्रयाऽपरा मध्यमया स्यात्'—इति च भास्करोक्त चिन्त्यम् ॥ १९ ॥

इदानीं यष्टियन्त्रमाह ।

परिलिख्य वृत्तमवनौ यष्टिव्यासार्धमन्यदस्यान्तः ।

स्वाहोरात्रार्धार्धे घटिकाषष्ट्यङ्कितं परिधौ ॥ २० ॥

यष्टिव्यासार्धेऽग्रायष्ट्यग्रान्तरसमज्यया धनुषि ।

घटिका क्षितिपवृत्ते याताः प्रागपरतः शेषाः ॥ २१ ॥

अवनौ समावनौ यष्टिव्यासार्ध वृत्त परिलिख्यास्यान्तरेकेन्द्रकम न्यद्द्युज्यावृत्त च स्वाहोरात्राधार्धं स्वाहोरात्रार्ध द्युज्या सैवार्धे व्यासवृत्त

यस्य तस्य परिलिख्यास्य परिधौ घटिकाषष्ट्यङ्कितं कार्यम् । ततो यष्टिव्यासार्धे गोले यत्र यष्टेर्नष्टच्युतिर्जाता तत्र यष्टिः स्थिरा कार्या । क्षितिजेऽयायास्तदग्रस्य च यदन्तरं तत्समा या ज्या पूर्वज्या तया द्वितीयवृत्ते द्युज्यावृत्ते यद्धनुर्भवेत् तस्मिन् धनुषि या घटिकास्ताः प्राक्कपाले याता अपरत पश्चिमकपाले शेषा दिनशेषा घटिकाः स्युः । 'त्रिज्याविष्कम्भार्धं वृत्तं कृत्वा दिनङ्कितं तत्र' इत्यादि भास्करोक्तमेतदनुरूपमेव । एकस्मिन् दिने यदि द्युज्या स्थिरा स्यात् तदैवानेन विधिना कालज्ञानमिति स्फुटं सिद्धान्तविदाम् ॥ २०–२१ ॥

इदानीं प्रकारान्तरेण घटिकानयनमाह ।

**यष्टेः स्वाहोरात्रार्धभाजिताऽन्तरदलाहता त्रिज्या ।**
**फलचापांशा द्विगुणाः षड्भिर्वा भाजिता घटिकाः ॥ २२ ॥**

पूर्वमपायग्रयोरन्तरं मित्वा यद्गृहीतं तस्य दलं कार्यम् । तेनान्तरदलेन त्रिज्याऽऽहता यष्टेः स्वाहोरात्रार्धेन यष्टिव्यासार्धभवद्युज्यया भाजिता फलचापांशा द्विगुणाः षड्भिर्भाजिता वा घटिकाः स्युरिति ।

अत्रोपपत्तिः । अन्तरं यष्ट्यंशपूर्णज्याऽतस्तदर्धं तदर्धज्या द्युज्याव्यासार्धे ततोऽनुपातेन त्रिज्यावृत्ते परिणता कृता तस्याश्चापं द्विगुणमंशात्मकं तत् षड्भिर्विभज्य घटिकाः कृता इति स्फुटम् ॥ २२ ॥

इदानीं यष्टियन्त्रात् प्रकारान्तरेण घटिकाज्ञानमाह ।

**यष्टिव्यासार्धे वा घटिका शङ्कुतलादितो मूलात् ।**
**अवलम्बसूत्रयुक्त्या घटिका दिवसस्य गतशेषाः ॥ २३ ॥**

वा यष्टिव्यासार्धे गोले शङ्कुतलादितो मूलात् शङ्कुतलाच्च घटिकाः साध्याः । शङ्कुतलात् शङ्कोरिष्टहृतिमानीय ततो द्युज्यानुपातेनेष्टान्त्यां सूत्रं चानीय त्रिप्रश्नोक्त्या घटिकाः साध्या इत्यर्थः । वाऽवलम्बसूत्रयुक्त्या दिवसस्य गतशेषा घटिकाः साध्याः । अर्थाद्गोलरचनां विनैव नष्टच्युतेर्यष्टेरपादवलम्बकं कृत्वा शङ्कुं विज्ञाय १९ सूत्रयुक्त्या द्युज्येष्टान्त्यादिना त्रिप्रश्नोक्त्या गतशेषा घटिका ज्ञेयाः ॥ २३ ॥

इदानीं यष्टियन्त्रेण वेधेन रविचन्द्रान्तरांशानाह ।

यष्टिव्यासार्धाद्भुवि वृत्तं भगणांशकं कृत्वा ।
यष्टी कीलप्रोते मूले पृथगग्रयोर्बद्धे ॥ २४ ॥
ताभ्यां सूर्यशशाङ्कौ वेध्यावग्रस्थितेन सूत्रेण ।
सूत्रज्यया ऽन्तरांशा ये तेऽर्कविभाजितास्तिथयः ॥ २५ ॥

यष्टिव्यासार्धेन समभुवि भगणांशाङ्कं चक्रांशाङ्कितं वृत्तं कृत्वा केन्द्रगतं कीलं कार्यं । कीलप्रोते तु यष्टी वृत्तव्यासार्धप्रमाणे कार्ये । छिद्रविशिष्टे यष्टी मूले पृथगग्रयोर्बद्धे । यत्र कीले यष्टिमूलाग्रे ते एकत्र मिलिते कार्ये इत्यर्थः । ताभ्यां मूलमिलिताभ्यां यष्टिभ्यां मूलस्थदृष्ट्या युगपदेकैकयष्ट्यग्रगतौ सूर्यशशाङ्कौ गणकेन यष्ट्यग्रयोर्गतं यत् सूत्रं तेन सूत्रेण वेध्यौ । तत् सूत्रं च रविचन्द्रान्तरांशपूर्णज्या गोलयुक्त्या भवति । अतस्तत्सूत्रज्यया पूर्णज्यया विलिखितवृत्ते यद्धनुस्ते रविचन्द्रयोरन्तरांशा भवन्ति । अथ येऽन्तरांशास्तेऽर्कविभाजिता द्वादशभक्तास्तिथयः स्युरिति ॥ २४–२५ ॥

इदानीं प्रकारान्तरेणान्तरांशानयनमाह ।

सूत्रार्धगुणा त्रिज्या यष्टिहृता फलधनुर्द्विगुणितं वा ।
रविचन्द्रान्तरमिष्टव्यासार्धोल्लिखितवृत्तस्य ॥ २६ ॥

पूर्वं यत् पूर्णज्यारूपं सूत्रमागतं तस्यार्धेन त्रिज्या गुणा यष्टिहृता फलधनुर्द्विगुणितं वा रविचन्द्रान्तरं भवति । इष्टव्यासार्धोल्लिखितवृत्तस्यापि सम्यक् ।

अत्रोपपत्तिः । सूत्रार्धं यष्टिव्यासार्धे रविचन्द्रान्तरार्धज्या सा त्रिज्याव्यासार्धे परिणता । तद्धनुर्द्विगुणमन्तरांशा भवन्ति ॥ २६ ॥

इदानीं यष्टियन्त्रेण दिक्साधनमाह ।

मध्यधृताया यष्टेर्लम्बकराङ्के प्रवेशनिर्गमने ।
क्रान्तिवशात् प्राच्यपरे मत्स्याद्याम्योत्तरे साध्ये ॥ २७ ॥

समाश्रनाविष्टच्छायासाधनेन लिखितस्य वृत्तस्य मध्यस्थापितकीलस्य छाया पूर्वकपालस्थे रवौ यत्र प्रतीच्यां परिधौ लगति स प्रवेशबिन्दुः। यत्र च पश्चिमकपालस्थे रवौ प्राचि लगति स निर्गमनबिन्दुः। तत्र प्रवेशनिर्गमने समये मध्यधृतायां यष्टेर्नष्टद्युतेर्याम्यलम्ब विधाय द्वौ समौ शङ्कू साध्यौ। ताभ्यां तत्तत्कालक्रान्तिवशात् त्रिप्रश्नोक्त्या भुजान्तरं विधाय प्राच्यपरे साध्ये ताभ्यां मत्स्याद्याम्योत्तरे च साध्ये इति सर्वं त्रिप्रश्नाधिकारतः स्फुटम्॥ २७॥

इदानीं भुजकोटिसाधनमाह।

शङ्कुतलाग्रान्तरयुतिरन्यैकदिशोर्भुजो भुजस्य कृतिम्।
दृग्ज्याकर्णकृतेः प्रोह्य पदं पूर्वापरा कोटिः॥ २८॥

स्पष्टार्थम्। त्रिप्रश्नाधिकारे सर्वं स्फुटमेव प्रतिपादितम्॥ २८॥

इदानीं यष्टियन्त्रेण पलभामाह।

उदयास्तसूत्रशङ्क्वन्तरं हृतं शङ्कुनाऽर्कसङ्गुणितम्।
विषुवच्छायैवं वा विनोदयास्तमयसूत्रेण॥ २९॥

उदयास्तसूत्रशङ्क्वन्तरं शङ्कुतलं तदर्कसङ्गुणितं शङ्कुना हृतं फलं विषुवच्छाया पलभा भवति। उदयास्तसूत्रेण विनाऽपि वा पलभाज्ञानमेव वक्ष्यमाणेन विधिना भवतीत्यस्यार्थे सम्बन्धः।

अत्रोपपत्तिः। त्रैराशिकानुपातेन स्फुटा॥ २९॥

इदानीं भुजद्वयतः पलभाज्ञानमाह।

प्राच्यपराशङ्कुतलान्तरद्वयान्तरयुतिः समान्यदिशोः।
द्वादशगुणिता विषुवच्छाया शङ्क्वन्तरविभक्ता॥ ३०॥

शङ्कुमूलप्राच्यपरान्तरं भुजः। एवमेकस्मिन् दिने भुजद्वयं ज्ञेयम्। तयोः समान्यदिशोरन्तरयुतिः कार्या सा द्वादशगुणिता शङ्क्वन्तरविभक्ता विषुवच्छाया भवति। 'भुजयोरेकान्यदिशोरन्तरमैक्यं रविघ्नयामि'-त्यादिभास्करोक्तमेतदनुरूपमेव।

अत्रोपपत्तिः। भास्करविधिना स्फुटा सजातीयत्रिभुजयोः कोट्योः कर्णयोरन्तरतो योगाद्वा तथैव सजातीयत्रिभुजत्वात् ॥ ३० ॥

इदानीं रविज्ञानमाह।

शङ्कुप्राच्यपरान्तरशङ्कुग्रैक्यमुदगन्तरं याम्ये।
लम्बगुणं यष्टिहृतं क्रान्तिज्यातो रविः प्राग्वत् ॥ ३१ ॥

शङ्कुप्राच्यपरान्तरं भुजः। शङ्क्वग्रं शङ्कुतलम्। उदग्भुजेऽनयोरैक्यं याम्ये भुजेऽन्तरमग्रा भवति। एवमैक्यान्तरं लम्बगुणं लम्बज्यया गुणं यष्टिहृतं त्रिज्याहृतं फलं क्रान्तिज्या भवति। अतः प्राग्वत् त्रिप्रश्नोक्तिवद्रविः साध्यः।

अत्रोपपत्तिः। त्रिज्याकर्णेन लम्बज्या कोटिस्तदाऽग्राकर्णेन किं जाता क्रान्तिज्या। शेषवासना स्फुटा ॥ ३१ ॥

इदानीं यष्ट्या गृहाद्यौच्च्यमाह।

अपसृतिरन्यशलाकागुणा शलाकान्तरेण भक्ता भूः।
भूः स्वशलाकागुणिता यष्टिविभक्ता गृहाद्यौच्च्यम् ॥ ३२ ॥

इष्टप्रमाणोक्ता यष्टिर्धार्या। तस्या एकस्मिन्नग्रे लम्बरूपाऽङ्गुलादिभिरङ्किता विपुलैका शलाका बद्धा दृढीकार्या यथा यष्टिशलाकाभ्यां कोणः समकोणो भवेत्। यष्ट्यन्त्यायसंस्थदृष्ट्या समधरातलस्थगृहाद्यौच्च्यमन्यया चलयष्ट्या विध्येत्। इयमन्या यष्टिर्यत्र शलाकायां लग्ना तस्मा च्छलाकामूलपर्यन्तं सङ्ख्या वेधसम्बन्धिनी शलाका ज्ञेया। एवं प्रथमस्थानतो वेधं कृत्वा शलाकाप्रमाणं विज्ञाय प्रथमस्थानतस्तस्यामेव सरलरेखायामपसृत्य द्वितीयस्थानतो गृहाद्यौच्च्यं विध्वा तत्रापि शलाकाप्रमाणं ज्ञानीयात्। वेधस्थानयोरन्तरं चापसृतिरुच्यते। अपसृतिरन्यशलाकागुणा शलाकान्तरेण भक्ता तदा भूः स्वभूवेधस्थानगृहान्तरं भवति। भूश्च स्वशलाकागुणा यष्टिविभक्ता गृहाद्यौच्च्यं स्यात्।

अत्रोपपत्तिः। ग उ = गृहोच्च्यम्। प भू = दृष्टिः = द्वि भू। प = प्र




प्रथमवेधस्थानम् । द्वि = द्वितीयवेधस्थानम् । भू अ₁ = प्रथमवेधे शलाका = श₁ भूअ₂ द्वितीयवेधे शलाका = श₂ पद्वि = अपसृतिः = अ । गृप = भू₁ । गृद्वि = भू₂ = भू₁ + अ ।

सजातीयत्रिभुजतः

$$\text{गृउ} = \frac{\text{भू}_1 \cdot \text{श}_1}{\text{य}} = \frac{(\text{भू}_1 + \text{अ})\,\text{श}_2}{\text{य}}$$

$\therefore$ $\text{भू}_1 \cdot \text{श}_1 = \text{भू}_1 \cdot \text{श}_2 + \text{अ} \cdot \text{श}_2$ । ततः $\text{भू}_1 (\text{श}_1 - \text{श}_2) = \text{अ} \cdot \text{श}_2$

$\therefore$ $\dfrac{\text{अ} \cdot \text{श}_2}{\text{श}_1 - \text{श}_2} = \text{भू}_1$ । एवम् $\text{भू}_2 = \dfrac{\text{अ} \cdot \text{श}_1}{\text{श}_1 - \text{श}_2}$ । शेषोपपत्तिः स्फुटा ॥ ३२ ॥

इदानीं प्रकारान्तरेण गृहाद्यौच्च्यानयनमाह ।

**दृष्ट्या गुणिताऽपसृतिर्दृष्टिविशेषेण भाजिता भूमिः ।**
**भूमिः स्वदृष्टिभक्ता शलाकया सङ्गुणोच्छ्रायः ॥ ३३ ॥**

समधरातले यष्टिरूर्ध्वाधरा लम्बरूपा धार्या । धरातले दृष्टिस्तथा चालनीया यथा दृष्टियष्ट्यग्रगृहाद्यग्र चैकसरलरेखायां स्युः । एवं कृते दृष्टियष्टिमूलयोरन्तरं यत् तदेवेह दृष्टिरित्युच्यते । अथ पुनः सैव यष्टिस्तस्यामेव सरलरेखायां तथैवोर्ध्वाधरा स्थाप्या । तद्वशतो द्वितीयवेधेऽपि दृष्टिस्थानं निश्चेयं तथा दृष्टियष्टिमूलान्तरं द्वितीयदृष्टिश्च ज्ञातव्या । द्वयोर्दृष्टिस्थानयोरन्तरं चात्रापसृतिरुच्यते । अपसृतिर्द्रष्टा स्वदृष्ट्या गुणिता दृष्ट्योर्विश्लेषान्तरेण भाजिता स्वभूमिः स्यात् । सा भूमिः शलाकया यष्ट्या सङ्गुणा स्वदृष्टिभक्ता गृहाद्युच्छ्रायः स्यादिति ।

अत्रोपपत्तिः । गृउ = गृहौच्च्यम् । भूअ₁ = भूअ₂ = यष्टिः । भूप = प्रथमदृष्टिः = दृ₁ । भूद्वि = द्वितीयदृष्टिः = दृ₂ । पद्वि = अपसृतिः = अ । पगृ = प्रथमभूमिः = भू₁ । द्विगृ = द्वितीयभूमिः = भू₂ = भू₁ + अ



ततः सजातीयत्वेन ततः ।

$$गृउ = \frac{य \cdot भू_1}{दृ_1} = \frac{(भू_1 + च) \cdot य}{दृ_2}$$

ततः $भू_1 \cdot दृ_2 = भू_1 \cdot दृ_1 + दृ_1 \cdot च$

∴ $भू_1 = \frac{दृ_1 \cdot च}{दृ_2 - दृ_1}$ । एवम् $भू_2 = \frac{दृ_2 \cdot च}{दृ_2 - दृ_1}$ । ततोऽनुपातेनोच्छ्रायानयनं सुगममिति ॥ ३३ ॥

इदानीं गृहादिमूलवेधेन भूमिमाह ।

**लम्बनिपातान्तरकं लम्बोच्चयान्तरविभक्तमधिकगुणम् ।**
**भूर्लम्बान्तरगुणिता लम्बनिपातान्तरविभक्ता ॥ ३४ ॥**

इष्टप्रमाणाया यष्टेर्मूलस्थदृष्ट्या यत्परं गृहादिमूलं विध्येत् । यष्टिमूलाग्राभ्यां द्वौ लम्बौ कार्यौ । तयोर्लम्बनिपातयोरन्तरकं लम्बोच्चयोरन्तरेण विभक्तमधिकेन लम्बमानेन गुणं भूः स्यात् । लम्बान्तरगुणितेत्यादेरपि सम्बन्धः ।

अत्रोपपत्तिः । यष्टिमूलाद्गृहादिमूलपर्यन्तं रेखा कर्णः । यष्टिमूलादधिको लम्बः कोटिः । अधिकलम्बगृहादिमूलयोरन्तरभूमिर्भुजः । इदमेकं त्रिभुजम् । लम्बोच्चयान्तरं कोटिः । यष्टिः कर्णः । लम्बनिपातान्तरभूमिर्भुजः । इदं द्वितीयं त्रिभुजं प्रथमसजातीयमतोऽनुपातेन भूम्यानयनं सुगममिति ॥ ३४ ॥

इदानीं भूमिज्ञाने गृहौच्च्यमाह ।

**लब्धोनो दृग्लम्बो दृग्लम्बादग्रलम्बके हीने ।**
**अधिकेऽधिको गृहोच्च्यं तलाग्रके विद्धया दृष्ट्या ॥ ३५ ॥**

इष्टप्रमाणयष्टेर्मूलस्थदृष्ट्या गृहाग्रं विध्येत् । यष्टिमूलाग्राभ्यां भुवि लम्बौ कार्यौ । मूललम्बो दृग्लम्ब इत्युच्यते । मूलाग्रलम्बयोरन्तरेण गुणिता लम्बनिपातयोरन्तरेण भक्ता लब्धेन दृग्लम्बो हीनः कार्यो दृग्लम्बादग्रलम्बके हीने सति । अधिके चाधिकः कार्यस्तदा गृहौच्च्यं

भवेत् । एवं तत्राग्रके ये तयोर्विद्धया दृष्ट्या भूम्यौच्च्ये भवतः । भूमिज्ञान तत्त्रैराशिकेनौच्च्यज्ञानं चाधिकेन भवतीत्यर्थः ।

अत्रोपपत्तिः । लम्बनिपातान्तरेण लम्बौच्च्ययोरन्तरं सदाऽऽत्म-गृहाद्यन्तरभूम्या किं लम्बेन हीनो युतश्च दृग्लम्बो दृग्लम्बादथलम्बे हीनाधिके गृहाद्यौच्च्यं भवतीत्यत्र स्थितिद्वये चेत्रे विरचय्य सर्वं स्फुटं निरीक्षणीयम् ॥ ३५ ॥

इदानीं प्रकारान्तरेण भूम्यौच्च्यानयनमाह ।

**दृग्घ्नदृग्लम्बगुणा विभाजिताऽधःशलाकया भूमिः ।**
**सकलशलाकागुणिता भूमिर्दृष्ट्या हृतोच्छ्रायः ॥ ३६ ॥**

यस्मिन् धरातले गृहाद्यौच्च्यं वस्तु वर्तते तस्मिन् धरातले ऊर्ध्वाधरा लम्बरूपेष्टप्रमाणा शलाका स्थाप्या । ततो दृष्टिस्तथा चाल्या यथा दृष्टिः शलाकाग्रं गृहादिमूलं चैकरेखायां स्युः । एवं तत्र दृगौच्च्यं दृग्लम्बः । दृगौच्च्यशलाकामूलयोरन्तरं भूमिर्दृष्टिरित्युच्यते । सा शलाका चाधःशलाका ज्ञेया । दृष्टिदृग्लम्बगुणाऽधःशलाकया विभाजिता भूमिः स्यात् । एवं तस्मिन्नेव धरातले तथा दृष्टिर्नियोज्या यथा दृष्टिः शलाकाग्रं गृहाग्रं चैकरेखायां स्युः । अत्र शलाका सकलशलाका । दृष्टिशलाका-मूलयोरन्तरं दृष्टिरित्युच्यते । भूमिः सकलशलाकागुणा दृष्ट्या हृतोच्छ्रायो भवति ।

अत्रोपपत्तिः । सजातीयत्रैराशिकानुपातेन स्फुटा ॥ ३६ ॥

इदानीं प्रकारान्तरेण गृहौच्च्यमाह ।

**मित्वा गृहैकदेशं विद्धैकशलाकया गृहं सर्वम् ।**
**प्रथमशलाकाभक्तं मितं द्वितीयागुणितमौच्च्यम् ॥ ३७ ॥**

यस्मिन् धरातले लम्बरूपं गृहादि वर्तते तस्मिन् धरातले लम्ब-रूपोर्ध्वाधराङ्गुलादिभिरङ्किता शलाका स्थाप्या । ततो दृष्टिं तस्मिन्नेव धरातले कुत्रापि संस्थाप्य नलिकया वा यष्ट्या चालौच्च्यं गृहैकदेशं विध्येत् । नलिका वाऽन्ययष्टिर्यत्र शलाकायां लग्ना तस्मात् शलाकामूलपर्यन्तं

प्रथमा शलाका शलाकामूलदृष्टिस्थानान्तरं च दृष्टिर्ज्ञातव्या । पुनस्त-स्यैव दृष्ट्या गृहाग्रं चेत्यष्ट्या विध्येत् । इयं यष्टिर्यत्र पूर्वशलाकायां लग्ना तस्मात् शलाकामूलपर्यन्तं द्वितीया शलाका ज्ञेया । अथ व्याख्या । गृहैकदेशं प्रथमशलाकावशेन मित्वा गणयित्वा धार्यम् । इष्टशलाकया च सर्वं गृहं गृहोच्छ्र्यं विद्वान् द्वितीया शलाका ज्ञातव्या । ततो गृहैकदे-शोच्छ्र्यं मितं गणितं द्वितीयशलाकया गुणितं प्रथमशलाकया भक्तं गृहोच्छ्र्यं स्यात् ।

अत्रोपपत्तिः । प्रथमशलाकया दृष्टितुल्यो भुजस्तदा ज्ञातोच्छ्र्येन किं जाता भूमिः $= \frac{\text{ज्याभी दृ}}{\text{प्रश}}$ । ततो दृष्ट्या द्वितीयशलाका तदा भूम्या किं जातं गृहोच्छ्र्यम् $= \frac{\text{द्विश ज्याभी दृ}}{\text{प्रश दृ}} = \frac{\text{द्विश ज्याभी}}{\text{प्रश}}$ ।

अत उपपन्नम् ॥ ३७ ॥

इदानीं परमतं निराकरोति ।

यष्ट्या कृताच्छलाका त्रिज्याघाताद्धनुर्गृहान्तरकम् ।
यैरुक्तं मूर्खास्ते यतो न दृष्टान्तरं दृग्ज्या ॥ ३८ ॥

पूर्वश्लोकोक्तविधिना गृहाग्रवेधेऽन्ययष्टिर्यत्र शलाकायां लग्ना तस्माद्दृष्टिस्थानपर्यन्तं कर्ण एव यष्टिः । द्वितीयशलाका कोटिः । दृष्टिर्भुजः । शलाका त्रिज्यागुणा यष्टिहृता फलस्य धनुर्दृष्टिस्थाना-द्गृहमूलाग्ररेखयोरन्तरगः कोणो गृहान्तराशाभिधस्त्रिकोणमित्या वास्तव एव सिध्यति । गृहाग्रमूलयोर्दृष्टान्तरं दृष्टिसूत्रसमं दृग्ज्या भवितुं न । अतो 'यैराचार्यैः पूर्वफलचापसमं गृहान्तरकमुक्तं ते मूर्खाः सन्ति यतो दृष्टान्तरं दृग्ज्या नास्ती'ति आचार्योक्तमनुपपन्नमिति सुधीभिश्चिन्त्यम् ॥३८॥

इदानीं शङ्कुमाह ।

मूले द्व्यङ्गुलविपुलः सूच्यग्रो द्वादशाङ्गुलोच्छ्रायः ।
शङ्कुस्तलाग्रं विद्धाऽग्रवेधलम्बाभुजद्वयोः ॥ ३९ ॥

( शङ्कुस्तलाग्रविद्धोऽग्रवेधलम्बाद्दृगुन्नयः ॥ ३९ ॥ * ) —

अग्रवेधलम्बादवलम्बगतावलम्बाद्दृग्ज्याकारो ज्ञेय । तलाग्राधा-रस्तकेन्द्रादग्रपर्यन्तं विद्धः सन्ध इत्यर्थः । शेषं स्पष्टम् ॥ ३९ ॥

इदानीं शङ्कुयन्त्रेण कालज्ञानमाह ।

**छायां दृग्ज्यां दृष्टिं छायाकर्णमवलम्बकं शङ्कुम् ।**
**परिकल्प्य शङ्कुयन्त्रे योज्यं घटिकादि यष्ट्युक्तम् ॥ ४० ॥**

शङ्कुयन्त्रे छाया दृग्ज्या दृष्टिं छायाशङ्कुसूत्रं छायाकर्णं शङ्कु-मवलम्बकं प्रकल्प्य यष्ट्युक्तं यष्टियन्त्रोक्तं घटिकादि सर्वं योज्यम् । यष्टि-यन्त्रात् सर्वं यथा साधितं तथाऽस्मादपि साधनीयमित्यर्थः ॥ ४० ॥

इदानीं घटीयन्त्रमाह ।

**घटिका कलसार्धाकृति ताम्रं पात्रं तलेऽपृथु च्छिद्रम् ।**
**मध्ये तज्जलमज्जनषष्ट्या द्युनिशं यथा भवति ॥ ४१ ॥**

ताम्रं ताम्रमयं पात्रं कलसार्धाकृति घटार्धप्रतिमं घटिका घटीयन्त्रं भवति । अस्य पात्रस्य तले मध्ये तथाऽपृथु च्छिद्रं कार्यं यथा यज्जलमज्ज-नषष्ट्या द्युनिशमहोरात्रमानं भवति । एवमेकनिमज्जनेनैका घटी भवतीति सर्वं स्फुटम् ॥ ४१ ॥

इदानीं कपालयन्त्रमाह ।

**मध्यात्स्वनतांशैः कपालकं दिक्स्थसूत्रमध्याग्रात् ।**
**न्यस्तोन्नतांशविवरे सूत्रैक्यापाततो नाड्यः ॥ ४२ ॥**

मध्यात्स्वनतांशैः कपालकं कपालयन्त्रं भवति । क्षितिजानुकारं दिगङ्कितं फलके वृत्तं विरचय्य इष्टदिने द्युज्यावलम्बादिना प्रत्यग्नतांशं प्रकल्प्योन्नतघटिका मध्यनतांशावधि प्रसाध्य न्यस्तकपाले ता घटिकाः स्वस्वनतांशाग्रे वृत्तपालाङ्क्याः । एवं कपालयन्त्रं भवति । इष्टकाले कुम्भघटिकाकारे धृते कपालयन्त्रे केन्द्रस्थकीलच्छायानुसारि केन्द्रगतं सूत्रं यत्र परिधौ लगति तत्राङ्किता नाड्य इष्टघटिका भवन्ति । एवं

* दृगुन्नतांशाद साधु ।

दिक्स्थसूत्रमध्यायात् सूत्रैक्यापाततः सूत्रयोर्यदैक्य तस्माच्चाततो वृत्त-परिधौ सयोगतो व्यस्तोन्नतांशविवरे व्यस्तकपालस्योन्नतांशान्तरे नाड्यो भवन्ति गोलयुक्तितः ॥ ४२ ॥

इदानीं विशेषमाह ।

**अथवा कपालके नाडिकादि सर्वं यथा धनुष्युक्तम् ।**
**कर्त्तरियन्त्रं स्थूलं कृतं यतोऽन्यैर्वदामि ततः ॥ ४३ ॥**

अथवा यथा धनुषि धनुर्यन्त्रे सर्वं नाडिकादि यथोक्तं तथैव कपालकेऽपि ज्ञेयम् । यथान्यैर्यतः कर्त्तरियन्त्रं स्थूलं कृतं ततस्तस्मादहं सूक्ष्मं वदामीति ॥ ४३ ॥

इदानीं कर्त्तरीयन्त्रमाह ।

**दिक्स्थितफलकद्वियुतिस्तले तदग्रस्थसूत्रयोर्मध्ये ।**
**कीलस्तच्छायाग्रात् कर्त्तर्यां नाडिकाः स्थूलाः ॥ ४४ ॥**

अर्धवृत्तानुकारं फलकद्वयं कार्यम् । एकमधोऽर्धनाडीवलयानुकार-मन्यदधोऽर्धयाम्योत्तरवृत्तानुकारम् । ततस्तले यथादिक्स्थितयोर्द्वयोः फलकयोर्युतिः कार्या यथैक नाडीमण्डलधरातलेऽन्यत् याम्योत्तरमण्डलधरातले स्यात् । तदग्रस्थे ये पूर्वापरदक्षिणोत्तरानुकारे सूत्रे तयोर्मध्येऽर्धयोर्वृत्तयोः केन्द्रे कीलः स्थाप्यो यथाऽय कीलो ध्रुवयष्टिरेव भवेत् । एवमिदं कर्त्तरीयन्त्रं भवेत् । अस्या कर्त्तर्या तच्छायाग्रात् कीलच्छायाग्रात् स्थूला नाडिका इष्टघट्यो भवन्ति । इदमेव भास्करेण 'भूस्थ ध्रुवयष्टिस्थ चक्रम्'–इत्यादिना नाडीवलयाख्य यन्त्रमुदितम् । भास्कर-विधिना यदि रविक्रान्तिरेकस्मिन् दिने स्थिरा तदैवोन्नतघटिका वास्तवा गोलयुक्त्या भवन्ति परन्तु रवेः क्रान्तेः प्रतिक्षण चलत्वान्नाडिकाः स्थूला भवन्तीत्याचार्योक्त गोलयुक्तियुत बुद्धिमद्भिश्चिन्त्यम् । अनेन यन्त्रेण नतकालज्ञान सूक्ष्म भवतीति सिद्धान्तविदा स्फुटम् ॥ ४४ ॥

इदानीं पीठयन्त्रमाह ।

**इष्टधैर्च्यं समपीठं यष्टिव्यासार्धमन्तिकं परिधौ ।**

**दिग्भगणांशैर्मूर्धन्यग्रा*घटिकादिरुक्रम् ॥ ४५ ॥**

एक वृत्तोच्च वृत्तोच्चसमे प्रदेशे खे गत यष्टिव्यासार्धमन्तिक समपीठ सम चक्राकार फलक कार्यम् । परिधौ दिग्भिर्भगणांशैस्तथा मूर्धनि परिध्यग्रभागे ऽग्रघटिकादिभिरंशोक्तघट्यादिभिश्चाङ्क्या । पीठसज्ञ यन्त्र चक्रयन्त्राकार भवतीत्यर्थ ॥ ४५ ॥

तथा च लल्ल ।

चक्र चोर्ध्वशलाक वदन्ति पीठ सुसिद्धाग्रम् ।
(शिष्यधीवृ० यन्त्राध्या श्लो २५)

इदानीं यन्त्रान्तरमाह ।

**नलको मूले विद्धस्तत्स्रुतिघटिकोद्धृतः समुच्छ्रायः ।**
**लब्धाङ्गुलैस्तु तैर्नाडिकाक्रियायन्त्रसिद्धिरतः ॥ ४६ ॥**

एक इष्टप्रमाणो नलको मूले विद्ध. कार्य । स च जलै पूर्ण: कार्य । अधोरन्ध्रेण यावतीभिर्घटीभिर्जलस्रुति स्यात् ता स्रुतिघटिका ज्ञातव्या । नलकस्य समुच्छ्रायस्तत्स्रुतिघटिकोद्धृतस्तैर्लब्धाङ्गुलैर्नलके चैकैको विभागोऽङ्कनीय । अत एभ्यो विभागेभ्यो नाडिकाक्रियायन्त्र सिद्धिर्भवति । नाडिकाक्रियया यन्त्रसिद्धिर्भवतीत्यर्थ । एकविभागपर्यन्त जलस्रुत्यैका घटी द्वितीयभागपर्यन्त जलस्रुत्या घटीद्वयम् । एवमत्र कालज्ञान भवति ।

अत्रोपपत्ति । यदि स्रुतिघटिकाभिर्नलकोच्छ्रितिसमा जलस्रुतिस्तदैकया घट्या कि जातैकघटीसमकालजलस्रुताग्रुच्छ्रितिरिति ॥ ४६ ॥

इदानीं पुनर्यन्त्रान्तरमाह ।

**घटिकाङ्गुलान्तरस्थैर्चीर्याङ्गुलकैर्घटीधृतैरन्यः ।**
**उपरि नरोऽन: सुषिरस्तिर्यक् कीलोऽस्य मुखमध्ये ॥ ४७ ॥**

(घटिकाङ्गुलान्तरस्थैश्चीरिगुटकैर्घटीधृतैरङ्का ।
उपरि नरोऽध सुषिरस्तिर्यक कीलोऽस्य मुखमध्ये ॥ †

* घटिकादिभिश्चाङ्क्यम्-इति पाठ साधु ।
† अय पाठ साधु ।

कीलोपरि गामिन्यां चीर्यां च्युतपारदमलाबुनु ।*
स्रवति जले क्षिपति नरो गुटिकां कूर्मादयश्चैवम् ॥ ४८ ॥

(कीलोपरि गामिन्या चीर्या धृतशारदमलाबु तस्मिन्* ।)

अल्पविस्तार विपुलदैर्घ्य वस्त्रखण्ड चीरिरित्युच्यते । एकस्यां घट्या मनुष्यमुखाद्यावद्वस्त्रखण्ड तदपवर्तुमपारदोलाबुना जलधारापातेन बहिर्निःसरति तद्घटिकाङ्गुलमुच्यते । चीरिर्घटिकाङ्गुलान्तरस्थैर्गुटिकैर्घटीधृतैर्युक्ता । घटिकाङ्गुलान्तरस्थैरेकद्वित्र्यादिघटिकाङ्कितगुटिकास्तत्र योज्या इत्यर्थ । इय चीरिर्नराकारस्य यन्त्रस्याधोरन्ध्रस्य मध्ये स्थाप्या तदुपरि च नर स्थाप्यो यथा चीरिर्नराधोरन्ध्रेण प्रविष्टा नरमुखस्थिते ककीलोपरिगा भवेत् । नरमुखाग्रे कीलोपरि यच्चीरिखण्ड तदग्रे पारदपूर्णमलाबु तुम्ब बध्नीयात । तस्मिन् तथा जलधारा नलकादिना देया यथाधोगच्छताऽलाबुना घटिकया नरमुखादेका गुटिका बहिर्गच्छेत । एव जले स्रवति नरो नराकारयन्त्र घटिकयैका गुटिका मुखाद्बहि क्षिपति । एव नराकारयन्त्रस्थाने कूर्मादय कूर्मादीनामाकारा बुद्धिमता कार्या इत्यर्थ ॥ ४७–४८ ॥

इदानीं विशेषमाह ।

जलपूर्णकृतघटीभिः स्तनास्यकर्णादिभिर्जलं क्षिपति ।
पुरुषोऽन्यर्धासक्तं चक्रचतुष्कस्य कृतमुपरि ॥ ४९ ॥

(पुरुषोऽन्यस्याऽऽसक्ते †चक्र पुरुषस्य कृतमुपरि ॥ ४९ ॥)

पुरुषो (नराकारयन्त्र) रचनीय । जलपूर्णकृता घटी घटीयन्त्र मस्य स्तने मुखे कर्णादौ वाऽन्तस्तथा योज्या यथाऽय पुरुष स्तनास्यकर्णादिभिरन्यस्य पुरुषस्य तदासक्ते चक्रे मुखे घटीमितेन कालेन जल क्षिपति । एवमप्युपरि पूर्वश्लोके प्रतिपादित यन्त्र प्रकारान्तरेण कृत भवेदित्यर्थ ॥ ४९ ॥

---

* अय पूर्वार्धपाठ साधु ।

† अयमुत्तरार्धपाठ साधु ।

इदानीं पुनर्विशेषमाह ।

एवं वधूवरं नाडिकाङ्गुलैः संयुता वरे योज्या ।
युद्धानि मल्लगजमहिषमेषविविधायुधभृतां च ॥ ५० ॥
निगिरति गिरति घटिकाङ्गुलाङ्कितैः खण्डकैर्मयूरोऽहिम् ।
चीर्यामेवं गुडकैरुपरिस्थैर्ब्रह्मचार्याद्यैः ॥ ५१ ॥

(चीर्यामेव गुटिकोपरिस्थितैर्ब्रह्मचार्याद्यै ॥ ५१ ॥)*

कीलोत्क्षेपाभिहतः पटहः शब्दं करोति घण्टा वा ।
एवं यन्त्रसहस्राण्यनेन बीजेन कार्याणि ॥ ५२ ॥

एव वधूवरमुखस्यतिर्यक्कीलोपरिगचीरिगतनाडिकाङ्गुलैस्तथैव वरे वधूर्योज्या यथा वधूयोरन्यगचीर्यपद्दालाबुनाऽधोगच्छता घटीमितेन कालेनैका गुटिका वरमुखाद्बहिर्निर्गत्य वधूमुखे प्रविशेत । एवमनेनैव बीजेन घटीमितेन कालेन मल्ल–गज–महिष–मेष–विविधायुधभृता च युद्धानि स्यु । मयूरो घटिकाङ्गुलाङ्कितै· खण्डकैरहि सर्पं च निगिरति वा गिरति । एव चीर्यो गुटिकोपरि स्थापितैर्ब्रह्मचार्याद्याकारै· कीलोत्क्षेपाभिहत पटहो वा घण्टा शब्द करोति । एवमत्र यन्त्रसहस्राणि भवन्ति ॥ ५०–५२ ॥

इदानीं स्वयवहमाह ।

लघुदारुमयं चक्रं समसुषिरारान्तरं पृथगराणाम् ।
अर्धे रसेन पूर्णं परिधौ संश्लिष्टकृतसन्धिः ॥ ५३ ॥
तिर्यक्कीलो मध्ये ह्याधारस्थोऽस्य पारदो भ्रमति ।
छिद्राण्यूर्ध्वं भ्रमति चक्रमजस्रमेवाम्बरं भ्रमति ॥ ५४ ॥

(छिद्राण्यूर्ध्वमधोऽतश्चक्रमजस्र स्वय भ्रमति ॥ ५४ ॥)†

अराणामाराणाम् । संश्लिष्टकृतसन्धि· संश्लिष्टो मुद्रित· कृत सन्धिश्छिद्र यस्य चक्रस्य तत् । अस्य यन्त्रस्य मध्ये तिर्यक्कीलो मध्ये

* इत्युत्तरार्धपाठ· साधु

† इत्युत्तरार्धपाठ साधु

स्थाप्यं चक्रस्यायस्कारशाणवद्दृढाधारस्थः कार्यः । यस्य चक्रस्य पारदो रस आराणां छिद्राणि प्रति ऊर्ध्वमधश्च यतो भ्रमति ततस्तदाश्चर्यं चक्रं स्वयमेवाजस्रं भ्रमति । 'लघुदारुजसमचक्रे समसुषिराराः समान्तरा नेम्याम्'-इत्यादि भास्करोक्तमेतदनुरूपमेव ॥ ५३-५४ ॥

इदानीं विशेषमाह ।

**छिद्रे स्वधिया क्षिप्त्वा समं यथा पारदं भ्रमति ।**
**कालसममिष्टमानैश्चक्रसमुत्तानमूर्ध्वं वा ॥ ५५ ॥**

छिद्रे स्वबुद्ध्या समं पारदं क्षिप्त्वा तथा चक्रं स्थाप्यं यथा कालसमं कालानुसारि चक्रं समुत्तानं क्षितिजानुकारं वोर्ध्वमूर्ध्वाधरं जलयन्त्रवदिष्टमानैर्भ्रमति । *एकभ्रमणेन यथेष्टमानसमं कालमुत्पादयेत् तथा वस्तु*विशेषे लघुगुरुकाष्ठमयं चक्रं स्वल्पाधिकपारदसहितं विरचयेदिति॥५५॥

इदानीं पुनर्विशेषमाह ।

**कीलस्योपरिगामिनि तत्पर्यन्तसूत्रके धृतमलाबु ।**
**प्राग्वन्नलके प्रक्षिप्य नाडिका स्रवति पानीये ॥ ५६ ॥**

येन तिर्यक्कीलेन सह चक्रमयस्कारशाणवद्धृतं तस्मिन् सूत्रस्यैकमग्रं बद्ध्वा विपुलदैर्घ्यं सूत्रं वेष्टयेत् । तत् सूत्रं च पर्यन्तसूत्रकमुच्यते । तस्मिन् कीलस्योपरिगामिनि तत्पर्यन्तसूत्रकस्य द्वितीयाग्रेऽलाबु तुम्बं धृतं बद्धं कार्यम् । ततः प्राग्वन्नलकेऽधोरन्ध्रे जलं प्रक्षिप्य तथा जलधारा प्रयोज्या यथा तदाघातेनाधोगच्छताऽलाबुना नाडिकया चक्रस्यैकभ्रमणं भवेत् । एवं पानीये जले स्रवति नाडिकोत्पद्यत इत्याचार्याभिप्रायः ॥ ५६ ॥

इदानीं पुनर्विशेषमध्यायोपसंहारं चाह ।

**करणैर्ज्यादिप्रचलनमेवं शरमोक्षणं स्वशब्दाश्च ।**
**अध्यायो द्वाविंशो यन्त्रेष्वार्यास्त्रिपञ्चाशत् ॥ ५७॥**

**इति श्रीब्राह्मस्फुटसिद्धान्ते यन्त्राध्यायो नाम**
**द्वाविंशोऽध्यायः ॥ २२ ॥**

एवं करणैर्जलधाराप्रवाहसाधनैर्धनुर्ज्यायाः विप्रचलनं शीघ्रचलनं भवति येन शीघ्रं शरमोक्षणं शरप्रक्षेपणं च भवति । जलधाराप्रवाहवि-कारैरेव खगाद्या मेघगर्जनानि भवन्तीति । शेषं स्पष्टार्थम् ।

मधुसूदनसूनुनोदितो यस्तिलकः श्रीपृथुनेह जिष्णुजोक्ते ।
हृदि तं विनिधाय नूतनोऽयं रचितो यन्त्रविधौ सुधाकरेण ॥

इति श्रीकृपालुदत्तसूनुसुधाकरद्विवेदिविरचिते ब्राह्मस्फुटसिद्धान्त-नूतनतिलके यन्त्राध्यायो द्वाविंशः ॥ २२ ॥



# अथ मानाध्यायः ।



तत्रादौ केन केन मानेन के के पदार्था गृह्यन्त इत्याह ।

**सौरेणाब्दा मासास्तिथयश्चान्द्रेण सावनैर्दिवसाः ।**
**दिनमासाब्दपमध्या न तद्विनाऽर्केन्दुमानाभ्याम् ॥ १ ॥**

सौरेणाब्दाः । चान्द्रेण मासास्तिथयश्च । सावनैर्दिवसा दिनमासाब्दपाः मध्या ग्रहाश्च गृह्यन्ते । तत्र सावनमानं चार्केन्दुमानाभ्यां विना न भवति । सौरचान्द्राभ्यां विनाऽहर्गणसाधनं न भवतीत्यर्थः ॥ १ ॥

इदानीं मानान्याह ।

**मानानि सौरचान्द्रार्क्षसावनानि ग्रहानयनमेभिः ।**
**मानैः पृथक् चतुर्भिः संव्यवहारोऽत्र लोकस्य ॥ २ ॥**

सौरं चान्द्रमार्क्षं सावनमिति मानानि सन्ति । एभिर्मानैर्ग्रहानयनमेभिश्चतुर्भिः पृथक् पृथगत्र भुवि लोकस्य प्राणिनो व्यवहारो भवति । 'ज्ञेयं विमिश्रं तु मनुष्यमानम्'-इत्यादि भास्करोक्तमेतदनुरूपमेव ॥ २ ॥

इदानीं विशेषमाह ।

**युगवर्षविषुवदयनर्त्वहर्निशावृद्धिहानयः सौरात् ।**
**तिथिकरणाधिकमासोनरात्रपर्वक्रियाश्चान्द्रात् ॥ ३ ॥**
**यज्ञसवनप्रमाणग्रहगत्युपवाससूतकचिकित्साः ।**
**सावनमानाज्ज्ञेयाः प्रायश्चित्तक्रियाश्चात्र ॥ ४ ॥**

पर्वक्रिया पूर्णान्तदर्शान्तक्रिया दर्शयागादि । सवनं पुंसवनादि । प्रमाणं द्रव्यदानादौ प्रमाणदिनादि । शेषं स्पष्टम् । 'वर्षायनर्तुयुगपूर्वकम्'-इत्यादि भास्करोक्तमेतदनुरूपमेव ॥ ३-४ ॥

इदानीं नक्षत्रसावनप्रशंसामाह ।

**नक्षत्रसावनदिनात् सूर्यादीनां स्वसावनदिनानि ।**
**यस्मात् तस्मादार्क्षं दुरधिगमं मन्दबुद्धीनाम् ॥ ५ ॥**

यस्मात् सूर्यादीनां स्वस्वसावनदिनानि नक्षत्रसावनदिनादेव सिद्धानि भवन्ति ('भभ्रमास्तु भगणैर्विवर्जिता यस्य तस्य कुदिनानि तानि वा'-इति भास्करोक्त्या स्फुटम् ।) तस्मान्मन्दबुद्धीनां मध्ये स्वार्क्षं मानं दुरधिगममतीव कठिनमित्यर्थ. । तदेव सूक्ष्मं विवेचनीयमन्यथा ग्रहसावनानि समीचीनानि न भवन्तीत्याचार्याशय. ॥ ५ ॥

इदानीं नव मानान्याह ।

**मानुष्यदिव्यपित्र्यब्राह्माण्यप्राणमूर्त्तकालस्य ।**
**उक्तानि ज्ञानार्थं बार्हस्पत्यं नवममन्यत् ॥ ६ ॥**

अमूर्त्तकालस्याव्यक्तात्मककालस्य ज्ञानार्थं मानुष्यं मानचतुष्टयम् । दिव्यं दैवं पित्र्यं ब्राह्ममन्यच्च बार्हस्पत्यमिति नव मानान्युक्तानीति ॥ ६ ॥

इदानीमृतूनाह ।

**द्वौ द्वौ राशी मकरादृतवः षट् सूर्यगतिवशाद्भाव्याः ।**
**शिशिरवसन्तग्रीष्मा वर्षाशरदः सहेमन्ताः ॥ ७ ॥**

मकराद्द्वौ द्वौ राशी षट् ऋतवः सूर्यगतिवशाद्भाव्या विभाव्या नीया इति । शेषं स्पष्टार्थम् । 'मृगादिराशिद्वयभानुभोगात् षट् चर्तवः स्यु'-इत्यादि श्रीपत्युक्तमेतदनुरूपमेव ॥ ७ ॥

इदानीं भूभादैर्घ्यं भूभामानं चाह ।

**भूव्यासगुणो भक्तः कर्कव्यासान्तरेण रविकर्णः ।**
**भूमध्याद्भूछाया दीर्घत्वं चन्द्रकर्णोनम् ॥ ८ ॥**
**शेषं भूव्यासगुणं दीर्घत्वहृतं शशाङ्ककक्षायाम् ।**
**तमसो व्यासः शशिकर्णहृतत्रिज्यागुणो लिप्ताः ॥ ९ ॥**

स्पष्टार्थम् । उपपत्तिश्च भूभासाधनक्षेत्रानुपातेन स्फुटा ॥ ८-९ ॥

इदानीं प्रकारान्तरेण भूभामाह ।

**रविकर्णहृता त्रिज्या कर्कव्यासान्तराहता शोध्या ।**
**त्रिज्याभूव्यासवधात् शशिकर्णहृतात् तमोव्यासः ॥ १० ॥**

स्पष्टार्थम् ।

अत्रोपपत्तिः । योजनात्मकभूभाव्यासः $= \text{भूव्या} - \frac{\text{चव (रव्या − भूव्या)}}{\text{रव}}$

इयं त्रिज्यागुणा चन्द्रकर्णोहृता जाता भूभाबिम्बकलाः

$$= \frac{\text{त्रि · भूव्या}}{\text{चक}} - \frac{\text{त्रि (रव्या − भूव्या)}}{\text{रक}} ।$$

अत उपपन्नं यथोक्तम् ॥ १० ॥

इदानीं प्रकारान्तरेण भूभामानमाह ।

**भूव्यासेन्दुगतिवधात् कर्कव्यासान्तरार्कभुक्तिवधम् ।**
**प्रोह्येन्दुमध्यभुक्त्या तिथिगुणयाऽऽप्तं तमोव्यासः ॥११॥**

स्पष्टार्थम् ।

अत्रोपपत्तिः । पूर्वश्लोकेन भूभाबिम्बकलाः

$$= \frac{\text{त्रि · भूव्या}}{\text{चक}} - \frac{\text{त्रि (रव्या − भूव्या)}}{\text{रक}}$$

$$= \text{चन्द्रपरलम्बनकला} - \frac{\text{त्रि · भूव्या (रव्या − भूव्या)}}{\text{रक भूव्या}}$$

$$= \frac{\text{२ चग}}{\text{१५}} - \frac{\text{२ रग (रव्या − भूव्या)}}{\text{१५ भूव्या}}$$

$$= \frac{\text{२ चग · भूव्या − २ रग (रव्या − भूव्या)}}{\text{१५ भूव्या}}$$

$$= \frac{\text{चग · भूव्या − रग (रव्या − भूव्या)}}{\text{१५ भूव्यार्ध}}$$

आचार्यमते भूव्यासदल स्वस्पान्तराच्चन्द्रमध्यगतिकलासममत-
उपपन्नं यथोक्तम् ॥ ११ ॥

इदानीमध्यायोपसंहारमाह ।

**योऽधिकमासावमरात्रसम्भवज्ञः स वेत्ति मानानि ।**
**आर्याभिर्दशभिरयं मानाध्यायस्त्रयोविंशः ॥ १२ ॥**

**इति श्रीब्राह्मस्फुटसिद्धान्ते मानाध्यायस्त्रयोविंशः ॥२३॥**

यो गणकोऽधिकमासावमरात्रसम्भवज्ञः स एव सौरादिमानानि वेत्ति यतः सौरचान्द्रमानाभ्यां सम्यग्ज्ञाताभ्यामधिमासज्ञानं चान्द्रसावनमानाभ्यां च क्षयाहज्ञानं भवति । शेषं स्पष्टम् ॥ १२ ॥

मधुसूदनसूनुनोदितो यस्तिलकः श्रीपृथुनेह जिष्णुजोक्ते ।
हृदि तं विनिधाय नूतनोऽयं रचितो मानविधौ सुधाकरेण ।

इति श्रीकृपालुदत्तसूनुसुधाकरद्विवेदिविरचिते ब्राह्मस्फुटसिद्धान्तनूतनतिलके मानाध्यायस्त्रयोविंशः ॥ २३ ॥



# अथ संज्ञाध्यायः ।

तत्रादौ संज्ञाकथने कारणमाह ।

**यस्मात् संप्रतिपत्तिर्न संज्ञया संज्ञितो विना तस्मात् ।**
**लोके प्रसिद्धसंज्ञा रूपादीनां शशाङ्काद्याः ॥ १ ॥**

यस्मात् संज्ञया विना यः संज्ञितः पदार्थस्तस्य संप्रतिपत्तिः प्राप्तिः परिचयो वा न भवति तस्मात् लोके रूपादीनां रूपवतां पदार्थानां शशाङ्काद्याः प्रसिद्धसंज्ञाः सन्ति । ये ये रूपवन्तस्ते ते संज्ञावन्तः । संज्ञां विना परिचयो न भवतीत्यर्थः ॥ १ ॥

इदानीं सिद्धान्त एक एवेति प्रतिपादयति ।

**युगपद्युगादिरुदयाद्याम्यायां भास्करस्य वारुण्याम् ।**
**रात्र्यर्धात् सौम्यायामस्तमयाद्दिनदलादैन्द्र्याम् ॥ २ ॥**
**अयमेव कृतः सूर्येन्दुपुलिशरोमकवसिष्ठयवनाद्यैः ।**
**यस्मात् तस्मादेकः सिद्धान्तो विरचितो नान्यः ॥ ३ ॥**

कस्यचिन्मते भास्करस्य याम्यायां लङ्कायामुदयाद्युगपद्युगादिः । अन्यमते तदैव वारुण्यां रोमकपत्तने रात्र्यर्धाद्युगादिः । अन्यमते तदैव सौम्यायां सिद्धपुर्यामस्तमयाद्युगादिः । अन्यमते च तदैवैन्द्र्यां यमकोट्यां दिनदलाद्युगादिः । एवं देशविशेषेणोदयास्तादिकालः सूर्यस्य जातो वस्तुत आकाशे सूर्यस्य स्थितिश्च मेषादावेवातो ग्रहगणनायामेव सर्वत्र एक एवायं सिद्धान्तः सूर्येन्दुपुलिशरोमकवसिष्ठयवनाद्यैः कृतः । यस्माद्देशविशेषस्य भिन्नभिन्नकालग्रहणेन ग्रहगणनाया भेदो न भवति तस्मात् सूर्याद्यैर्वस्तुत एक एव सिद्धान्तो विरचितो नान्य इति सिद्धान्तविदां सर्वं स्फुटम् ॥ २-३ ॥

इदानीं कस्मिन्वशे सूर्यसिद्धान्तादयो भिन्ना इत्याह ।

**यदि भिन्नाः सिद्धान्ता भास्करसङ्क्रान्तयो विभेदसमाः ।**
**स स्पष्टः पूर्वस्यां विषुवस्यर्कोदयो यस्य ॥ ४ ॥**

यदि सौरादयः सिद्धान्ता भिन्नास्तर्हि त्रिभेदसमा भास्करसङ्क्रान्तयः सन्ति । रविसङ्क्रान्तिसमय एक एव तेषां सौरादीनां गणनया नायाति तेन हेतुना सिद्धान्ता भिन्नाः । तेषां कतमः स्फुट इत्याह स स्पष्ट इति । यस्य गणनया विपुवति मेषतुलादौ पूर्वस्यां दिश्येव प्राक्स्वस्तिकबिन्दावर्कोदयो वेधेनोपलभ्यते स एव स्पष्टः स्फुटो ज्ञेय इति । यद्युदयकाल एव रविर्मेषतुलादिगस्तदैवैवं भवत्यन्यथा तारतम्येन रव्युदयेन सिद्धान्तगणना परीक्षणीयेति ॥ ४ ॥

इदानीं स्वसिद्धान्तोत्तरार्धेऽनुक्रमणिकामाह ।

**तन्त्रपरीक्षा गणितं मध्यमगत्युत्तरादयः पञ्च ।**
**कुट्टाकारो वेधश्छन्दश्चित्युत्तरं गोलः ॥ ५ ॥**
**यन्त्राणि मानसंज्ञाख्याताध्यायाश्चतुर्दश ब्राह्मे ।**
**अध्यायचतुर्विंशतिराद्यैर्दशभिर्युताध्यायैः ॥ ६ ॥**

उत्तरार्धे तन्त्रपरीक्षाध्यायः । गणितं गणिताध्यायः । पञ्च मध्यमगत्युत्तरादयोऽधिकाराः सन्ति । मध्यगत्युत्तराध्याय. । स्फुटगत्युत्तराध्यायः । त्रिप्रश्नोत्तराध्यायः । छेद्यकाध्यायः । शृङ्गोन्नत्युत्तराध्यायः । कुट्टाकाराध्यायः । छन्दश्चित्युत्तराध्यायः । गोलो गोलाध्यायः । यन्त्राणि यन्त्राध्यायः । मानसंज्ञाध्यायः । ख्याताध्यायः संज्ञाध्यायोऽयमेव । एवमुत्तरार्धे ब्राह्मे सिद्धान्ते चतुर्दशाध्यायाः सन्ति । एत आद्यैर्दशभिरध्यायैर्युता अध्यायचतुर्विंशतिरत्र ग्रन्थे ज्ञेयेति ॥ ६ ॥

इदानीं ग्रन्थरचनकालमाह ।

**श्रीचापवंशतिलके श्रीव्याघ्रमुखे नृपे शकनृपाणाम् ।**
**पञ्चाशत्संयुक्तैर्वर्षशतैः पञ्चभिरतीतैः ॥ ७ ॥**
**ब्राह्मः स्फुटसिद्धान्तः सज्जनगणितज्ञगोलवित्प्रीत्यै ।**
**त्रिंशद्वर्षेण कृतो जिष्णुसुतब्रह्मगुप्तेन ॥ ८ ॥**

श्रीव्याघ्रमुखे नृपे पृथ्वीं शासति । किंविशिष्टे नृपे श्रीचापवंशतिलके । शकनृपाणां पञ्चाशत्संयुक्तैः पञ्चभिर्वर्षशतैरतीतैर्यात् पञ्चाशदधिकपञ्चशतशके । शेषं स्पष्टम् ॥ ७–८ ॥

इदानीमस्मिन् सिद्धान्ते गणितेन लाघवेन करणग्रन्थवत् फल-सिद्धिः किमु न कृतेत्याशङ्क्याह ।

**गणितेन फले सिद्धिर्ब्राह्मे ध्यानग्रहे यतोऽध्याये ।**
**ध्यानग्रहो द्विसप्ततिरार्याणां न लिखितोऽत्र मया ॥ ९ ॥**

यतो ब्राह्मे ब्रह्मकृते ध्यानग्रहे ध्यानग्रहनाम्न्यध्याये गणितेन फले मान्दादिफलसाधने लाघवेन सिद्धिः कृताऽतोऽत्रार्यायां द्विसप्ततिर्ध्यानग्रहोऽध्याय पुनरुक्तदोषभयान्मया न लिखित इति ॥ ९ ॥

इदानीं ग्रन्थसंख्यामाह ।

**भटब्रह्माचार्येण जिष्णुसुतनयेन गणितगोलविदा ।**
**आर्यासहस्रेण स्फुटसिद्धान्तः कृतो ब्राह्मः ॥ १० ॥**

आर्याणामष्टाधिकैकसहस्रेण । शेषं स्पष्टार्थम् ॥ १० ॥

इदानीं सूर्यग्रहणे चन्द्रशङ्कुः किमु न कृत इत्याशङ्क्याह ।

**भग्रहयुतिवच्छङ्कुर्वित्रिभलग्नाद्विग्रहोक्तिसमः ।**
**शशिनः कर्मबहुत्वात् न कृतोऽतो भास्करग्रहणे ॥ ११ ॥**

भग्रहयुतिवच्छङ्कुर्विग्रहोक्तिसमः शशिनो वित्रिभलग्नाच्छङ्कुः कर्मबहुत्वात् महताऽऽयासेन भवति । अतो मया भास्करग्रहणे शशिशङ्कुर्न कृतः प्रयोजनाभावात् । इयमार्या निष्प्रयोजना ॥ ११ ॥

इदानीं प्रश्नविशेषमाह ।

**आग्नेये नैर्ऋत्ये येष्टदिने संस्थितस्य योऽर्कस्य ।**
**शङ्कुच्छाये कथयति वर्षादपि वेत्ति सूर्यं सः ॥ १२ ॥**

इष्टदिने आग्नेये वा नैर्ऋत्ये कोणवृत्ते संस्थितस्यार्कस्य वा यो वर्षादपि वर्षपर्यन्तकालेनापि शङ्कुच्छाये कथयति स एव सूर्यं वेत्तीति ।

अस्योत्तरं कोणशङ्कोरानयनेन स्फुटम् ॥ १२ ॥

इदानीमध्यायोपसंहारमाह ।

अत्र मया यन्नोक्तं गोलाद्युत्प्रेक्ष्य धीमता वोह्यम् ।
आर्यात्रयोदशोऽयं संज्ञाध्यायश्चतुर्विंशः ॥ १३ ॥

इति श्रीमदाचार्यजिष्णुसुतब्रह्मगुप्तविरचिते ब्राह्मस्फुटसिद्धान्ते संज्ञाध्यायश्चतुर्विंशतितमः सम्पूर्णतामगमत् ॥ २४ ॥

अत्र मया यत् किञ्चिन्नोक्तं तत्सर्वं धीमता गणकेन गोलाद्युत्प्रेक्ष्य ऊह्यम् । गोलबोधे ह्येदमेव फलं यदनुक्तमपि बुद्धिमता ज्ञायते । शेषं स्पष्टम् ॥ १३ ॥

मधुसूदनसूनुनोदितो यस्तिलकः श्रीपृथुनेह जिष्णुजोक्ते ।
हृदि तं विनिधाय नूतनोऽयं रचितो नामविधौ सुधाकरेण ॥

इति श्री कृपालुदत्तसूनुसुधाकरद्विवेदिविरचिते ब्राह्मस्फुटसिद्धान्तनूतनतिलके सञ्ज्ञाध्यायश्चतुर्विंशतितमः सम्पूर्णतामगमत् ॥



# अथ ब्रह्मगुप्तकृतो ध्यानग्रहोपदेशाध्यायः ।

तत्रादौ चैत्रादौ मासगणानयनमाह ।

पञ्चाशत्संयुक्तैर्वर्षशतैः पञ्चभिर्विना शाकः ।
त्रिष्ठोऽर्कैर्वसुवेदैर्नवचन्द्रैस्ताडितः क्रमशः ॥ १ ॥
पञ्चाब्धियुतोऽधः षष्टिभाजितो लब्धियुक् सरसवेदः ।
*मध्यमराशिर्विश्वैर्विभाजितोऽभ्यधिकमासाः स्युः ॥ २ ॥
तैरुपरितनो युक्तो मासगणोऽभ्यधिकशेषकः शुद्धः ।
घटिकादिको भचक्राद्रविरविशेषो भवेद्धादिः ॥ ३ ॥

शाकः खपञ्चपञ्चोनस्त्रिधा स्थाप्यः । एको रविभिर्गुणः । द्वितीयो वसुवेदैस्तृतीयो नवचन्द्रैश्च गुणः । अधोराशिः पञ्चाब्धि-४५ युतः षष्टिभाजितः फलं मध्यराशौ क्षेप्यम् । तत्रैव रसवेदाश्च ४६ क्षेप्याः । एवं संस्कृतो मध्यो मध्यमराशिः शयाङ्कविश्वैर्विभाजितोऽधिमासाः स्युः । तैरधिमासैरुपरितनो राशिर्युक्तो मासगणश्चान्द्रो भवति ।

अत्रोपपत्तिः । एकस्मिन् वर्षेऽधिमासः $= \frac{१५९३३००००००}{४३२००००००८०}$

$$= \frac{५३११ \times ३०००००}{१४४०० \times ३०००००} = \frac{५३११}{१४४००} = \frac{५३११ \times १३१}{१३१ \times १४४००}$$

$$= \frac{\frac{५३११ \times १३१}{१४४००}}{१३१} = \frac{४८\frac{१९}{६०}}{१३१}$$ स्वल्पान्तरात् ।

अयमिष्टैः सौरवर्षैर्गुणोऽधिमासाः स्युः । शेषोपपत्तिः स्फुटा । ४५ । ४६ अस्य क्षेपस्योपपत्तिर्ग्रन्थान्ते द्रष्टव्या ।

सौरवर्षैश्चान्द्रोऽर्मध्येऽधिमास..... मासात्मकश्चान्द्रसव्यालन अस्यचान्द्रमासैः कल्पसौरमासास्तदाऽधिशेषेण किं लब्धं राश्यादि यावत

---

* मध्यं शयाङ्कविश्वै -इति पाठः साधु ।

मूलम् $= \frac{५१८४०००००००}{४३४३३३००.००} \times \frac{अधिशे}{१३१} = \frac{१७२८०० \times ३०००००}{१७८१११ \times ३०००००} \times \frac{अधिशे}{१३१}$

$= \frac{१७२८००}{१७८१११} \times \frac{अधिशे}{१३१}$ ।

इदं नवगुणं चतुर्भक्तं लब्धं नतचात्मकं चालनं षष्टिगुणं जातं घट्यात्मकम् ।

$= \frac{१७२८०० \times ९ \times अधिशे \times ६०}{१७८१११ \times ४ \times १३१} = \frac{१७२८०० \times १३५ \times अधिशे}{१७८१११ \times १३१}$

$= \frac{२३३२८००० \times अधिशे}{२३३३२५४१}$ = अधिशे । स्वल्पान्तरात्

सौरवर्षादौ रविर्भचक्रेण नतचसप्तविंशत्या समोऽतो भचक्रादधिशेषघटीसमचालनं विशोध्य चैत्रादौ भादौ रविर्ज्ञेय इति स्फुटम् ॥ १–३ ॥

इदानीं चैत्रादौ दिनादिकं तिथिध्रुवसाधनमाह ।

**रूपेण रूपरामैः खसायकैस्ताडितो गणो युक्तः ।**
**षड्भिर्वेदैर्धृत्या वासरघटिकाविघटिकाः स्युः ॥ ४ ॥**
**खखरसलब्धं च गणाद् घटिकासु नियोजयेत् तिथिध्रुवकाः ।**
**रव्यादिकस्तदुदये चैत्रादावर्कचन्द्रौ च ॥ ५ ॥**

गणो मासगणो रूपेण १ दिनेन रूपरामै–३१ घटीभिः खसायकै-५० विघटीभिस्ताडितो दिनादिस्थाने क्रमेण षड्भि–६ वेदै–४ धृत्या १८ युक्तः । *गणान्मासगणात्* खरसै ६०० यल्लब्धं घट्यात्मकं फलं तद् घटिकासु नियोजयेत् तदा वासरघटिकाविघटिकाश्चैत्रादौ तिथिध्रुवकाः स्युः । वासरश्च रव्यादिको ज्ञेयस्तदुदये च चैत्रादावर्कचन्द्रौ मध्यमौ भवतः । नतचात्मको रविश्च पूर्वं साधितो दर्शान्ते चैत्रादौ भावानेव चन्द्रश्चेति ।

अत्रोपपत्तिः । एकस्मिन् चान्द्रमासे सावनदिनादि २९ । ३१ । ५० । ६ सप्ततष्टं जातम् = १ । ३१ । ५० । ६ = १ । ३१ + ६/६० । ५० । अनेन

मासगणो गुणितो ग्रन्थारम्भक्षेपयुक्तोऽभीष्टे चैत्रादौ तिथिध्रुवो भवेदिति स्पष्टम् । क्षेपोपपत्तिर्ग्रन्थान्ते द्रष्टव्या ॥ ४-५ ॥

इदानीं चन्द्रकेन्द्रसाधनमाह ।

**मासगणो यमगुणितः पृथक् कृतरवोद्धृतः फलसमेतः ।**
**सार्धाष्टयुतो वसुयमविभक्तशेषो विधोः केन्द्रम् ॥ ६ ॥**

यम-२ गुणितो मासगणः पृथक् स्थाप्यः कृतरव-२५१ भक्तः पृथक्स्थस्य फलेन सहितः कार्यस्ततः सार्धाष्टयुतः । योगो वसुयमै-२८ र्विभक्तः शेषश्चन्द्रस्य केन्द्रं भवति ।

अत्रोपपत्तिः । एकस्मिन् चन्द्रकेन्द्रभगणे वसुयमाः २८ विभागाः कृताः । तद्विभागजातीयमेव केन्द्रमत्र साध्यते ।

कल्पे चन्द्रभगणाः = ५७७५३३०००००
चन्द्रोच्चभगणाः = ४८८१०५८५८
केन्द्रभगणाः = ५७२६५१९४१४२

एते कल्पचान्द्रमासभक्ता जातमेकस्मिन् चान्द्रमासे भगणात्मकं केन्द्रम्

$$= \frac{५७२६५१९४१४२}{५३४३३३०००००} = १ + \frac{३८३१८९४१४२}{५३४३३३०००००} ।$$

अत्र प्रयोजनाभावाद्भगणं त्यक्त्वा भगणशेषं वसुयमैः सङ्गुण्य हरेण विभज्य लब्धमभीष्टभागात्मकं केन्द्रमेकस्मिन् चान्द्रमासे

$$= २ + \frac{१०६६०८९९४ \times ४}{१३३५८३२५००० \times ४} = २ + \frac{२}{२५१}$$ स्वल्पान्तरात् । सार्धाष्टकस्य ग्रन्थारम्भे क्षेपमानं तदुपपत्तिश्च ग्रन्थान्ते द्रष्टव्या । अत उपपन्नं केन्द्रानयनम् ॥ ६ ॥

इदानीमिष्टमासादौ रव्यानयनमाह ।

**चैत्रादिमासगुणिते द्वे नक्षत्रे क्षिपेत् सहस्रांशौ ।**
**घटिकैकादशयुक्ते *सार्धेन फलेन सहिते च ॥ ७ ॥**

* सार्धेन फलेन रहिते चेति पाठः साधुः ।

द्वे नक्षत्रे घटिकैकादशयुक्ते सार्धैकेन पलेन रहिते च चैत्रादितो ये गतचान्द्रमासास्त्रैर्गुणिते चैत्राद्युद्भवयोः फलं क्षिपेत् तदिष्टमासादौ नक्षत्रादिको रविर्भवेत् ।

अत्रोपपत्तिः । कल्परविभगणाः = ४३२०००००० । सप्तविंशतिगुणाः कल्पचान्द्रमास–५३४३३३००००० भक्ता जातमेकस्मिन् चान्द्रमासे नक्षत्रात्मकं रविमानम् = $\frac{४३२००००००\times २७}{५३४३३३०००००} = \frac{१४४००\times ३०००००\times २७}{१७८१११\times ३०००००}$ $= \frac{१४४००\times २७}{१७८१११} = \frac{३८८८००}{१७८१११} = २\frac{३२५७८}{१७८१११}$ शेषं षष्ट्या गुणं हरभक्तमेवं नक्षत्रादिकं रविमानम् = २ । १० । ५८ $\frac{१}{२}$ स्वल्पान्तरम् ।

तद्रूपान्तरम् = $\overset{न}{२}$ । $\overset{घ}{११}$ – (१ $\frac{१}{२}$) प । इदमिष्टमासगुणं तज्ज्ञो नक्षत्रादिको रविर्भवेत् । शेषोपपत्तिः स्फुटा ॥ ७ ॥

इदानीं प्रतिमासं शशिकेन्द्रतिथिध्रुवक्षेपावाह ।

नाड्यर्धेन समेतं भद्वितयं प्रक्षिपेच्च शशिकेन्द्रे ।
रूपं रूपहुताशाः खशराश्च तिथिध्रुवे क्रमशः ॥ ८ ॥

प्रतिमासं शशिकेन्द्रे नक्षत्रद्वितयं नाड्यर्धेन सहितं तिथिध्रुवे च क्रमशो दिनादौ रूपं १ रूपहुताशाः ३१ खशराश्च ५० इति प्रक्षिपेत् ।

अत्रोपपत्तिः । ६ श्लोकेनैकस्मिन् चान्द्रमासे शशिकेन्द्रमानम् $= २ + \frac{२}{८५१} = २$ न + $\frac{१}{२}$ घ स्वल्पान्तरात् । यत एकस्मिन् भगणे सप्तविंशतिनक्षत्राणि कल्पितानीति शशिकेन्द्रानयन एव प्रतिपादितम् । तिथिध्रुवक्षेपमानं च सप्ततष्टचान्द्रमासमानं दिनादि १ । ३१ । ५० स्फुटमेव । अत्राधिकं ६ विपलमानं त्यक्तं पलात्मकमानपर्यन्तमेव गणिते ग्राह्यत्वादिति स्फुटम् ॥ ८ ॥

इदानीं प्रतिदिनचालनमाह ।

वारं दद्यात् प्रतिदिनमक्षिपलानां परित्यजेत् नाडीम् ।
केन्द्रे क्षिपेद्भमेकं *भक्षितयफलं घटीचतुष्कमितं ॥ ९ ॥

* भुक्तयफलं घटीचतुष्कमितम्–इति पाठः साधुः ।

प्रतिदिनं प्रतिचान्द्रदिनं तिथिध्रुवे दिनमेकं तद्धाच्चयोजयेत् । षड्षिपलोनामेका नाडीं च परित्यजेत् । शशिनः केन्द्रे च प्रतिचान्द्रदिनमेकं भं नक्षत्रं घटीचतुष्कमित भूतत्त्वफलं घटीचतुष्क भूतत्त्व–२५१ हृतं फलं घट्यात्मकं च क्षिपेत् ।

अत्रोपपत्तिः । त्रिंशत्तिथ्यात्मके चान्द्रमासे सावनदिनादि २९ । ३१ । ५०। इदं त्रिशद्भक्तं जातमेकस्मिन् चान्द्रदिने तिथिध्रुवे क्षेपकमानम्

$$= \frac{२९ । ३१ । ५०}{३०} = ० । ५९ । ४ = १ \text{ दि} - ५६ \text{ प॰} = १ \text{ दि॰} - (१ \text{ घ} - ४ \text{ प}$$

एवमेकस्मिन् चान्द्रमासे शशिकेन्द्रं नक्षत्रात्मकम् $= ३० \frac{२}{२५१}$ ।

(६ सूत्रे भगणात्मकं केन्द्रं २८ सगुण्य नक्षत्रात्मकं यदि क्रियते तदा ३० $\frac{२}{२५१}$ समुत्पद्यते ।) इदं त्रिशद्भक्तं जातमेकस्मिन् चान्द्रे दिने केन्द्रे क्षेपकमानम् $= \frac{३० + \frac{२}{२५१}}{३०} = १ + \frac{२}{३० \times २५१} = १ + \frac{२ \times ६०}{३० \times २५१}$ घटी $= १$ न $+ \frac{४}{२५१}$ घटी । अत उपपद्यते यथोक्तम् ।

भद्गुलयेन भद्गुतयमानेन १२० घटिकामितेन हृते घटीचतुष्कमिते यत् फलं घट्यात्मकं तदपि क्षिपेदित्येके 'भद्गुतयफलं घटीचतुष्कमिते' इति पाठानुसारेण व्याख्या कुर्वन्ति । अनेन '२५१' स्थाने १२० इयं स्थूला सङ्ख्योत्पद्यते, स एव मया पाठान्तरमुपनिबद्धम् ॥ ९ ॥

इदानीं देशान्तरसंस्कारमाह ।

**उज्जयिनीयाम्योत्तररेखायाः प्राग्धनं क्षयः पश्चात् ।**
**योजनषष्ट्या नाडी चरदलमपि सौम्यदक्षिणयोः ॥ १० ॥**

योजनषष्टिका नाडी उज्जयिनीयाम्योत्तररेखायाः प्राग्धनं पश्चात् क्षयो भवति । एवं सौम्यदक्षिणयोर्गोलयोश्चरदलं चरासवोऽपि धनक्षयश्च क्रमेण बोध्या इति ।

अत्रोपपत्तिः । यदि स्पष्टभूपरिधियोजनैः षष्टिर्घटिकास्तदा

देशान्तरयोजनैः किं जाता देशान्तरनाडी $= \frac{६० \text{ देयो}}{\text{स्पभुप}}$ । आचार्येण स्थूल स्पष्टभूपरिधिः = ३६०० योजनानि गृहीतः । ततो जाता देशान्तरनाडिका $= \frac{\text{देयो}}{६०}$ । धनर्णवासना चर्धनर्णवासना च गोलयुक्त्या स्फुटा ॥१०॥

इदानीं चन्द्रसाधनमौदयिकरविसाधनं चाह ।

**तिथयो दशभागोना**
**रविणा समन्विता शशी भवति मध्यः ।**
**तिथ्यंशाढ्याः शोध्या-**
**स्तिथिभोगजनाडिकाः केन्द्रात् ॥ ११ ॥**

(तिथयो दशभागोना रविणा सहिताः शशी भवति मध्य. ।
तिथिभोगनाडिकाश्च द्विगुणोडुकृता रवेः शोध्या ॥ *)

स्वदशभागोनास्तिथयो नक्षत्रात्मक रविचन्द्रयोरन्तर भवति । ततः रविणा नक्षत्रात्मकसूर्येण सहिता नक्षत्रात्मको मध्य शशी भवति । तिथिभोगनाडिका द्विगुणा उडु–२७ हृता. फल नक्षत्रघटिका भवन्ति ता रवेः शोध्यास्तदा नक्षत्रादिको रविरुदये भवति ।

अत्रोपपत्तिः । तिथौ तिथौ रविचन्द्रयोर्द्वादशभागा अन्तरमतस्तिथयो द्वादशगुणा भागात्मक रविचन्द्रयोरन्तरम् = १२ ति । चक्रांशैः सप्तविंशतिर्नक्षत्राणि तदेष्टान्तरेण १२ति अनेन किम् । जात नक्षत्रात्मकमन्तरम् $= \frac{२७ \times १२ \text{ति}}{३६०} = \frac{२७ \text{ ति}}{३०} = \frac{९ \text{ ति}}{१०} = \text{ति} - \frac{\text{ति}}{१०}$ । एवं तिथ्यन्ते रविचन्द्रौ ज्ञातौ । तिथ्यन्तसूर्योदययोर्मध्ये तिथिभोगनाडिकास्तत्सम्बन्धिनक्षत्रात्मकचालनेन रवौ रहित उदये रविर्भवति । तिथिभोगघटिकाश्च सावनाः प्रसिद्धा । एकस्मिन् सावनदिने रविगति. = ५९' । ८'' = ३५४८'' । अतो नक्षत्रात्मिका गतिः $= \frac{३५४८}{६० \times ८००}$ । यदि घटीषष्ट्या रवेरियं नक्षत्रात्मिका गतिस्तदा तिथिभोगघटिकाभि. कि लब्धं नक्ष-

* अन्य पाठ कल्पनं ।

प्रतिदिनं प्रतिचान्द्रदिनं तिथिध्रुवे दिनमेकं द्वयाङ्गोनयेत् । अङ्गपलोनामिका नाडी च परित्यजेत् । शशिन. केन्द्रे च प्रतिचान्द्रदिनमेकं भ नक्षत्र घटीचतुष्कमितं भूतत्त्वफल घटीचतुष्कं भूतत्त्व-२५१ हृत फल घट्यात्मकं च क्षिपेत् ।

अत्रोपपत्तिः । त्रिशत्तिथ्यात्मके चान्द्रमासे सावनदिनादि २९ । ३१ । ५० । इदं त्रिशद्भक्तं जातमेकस्मिन् चान्द्रदिने तिथिध्रुवे क्षेपकमानम्

$= \frac{२९ । ३१ । ५०}{३०} = ० । ५९ । ४ = १$ दि $-$ ५६ प $= १$ दि॰ $-$ (१ घ $-$ ४ प

इदमेकस्मिन् चान्द्रमासे शशिकेन्द्रं नक्षत्रात्मकम् $= ३० \frac{न}{२५१}$ ।

(६ सूत्रे भगणात्मकं केन्द्रं २८ सगुणय नक्षत्रात्मकं यदि क्रियते तदा ३० $\frac{न}{२५१}$ समुत्पद्यते ।) इदं त्रिशद्धृतं जातमेकस्मिन् चान्द्रे दिने केन्द्रे क्षेपकमानम् $= \frac{३० + \frac{न}{२५१}}{३०} = १ + \frac{न}{३० \times २५१} = १ + \frac{न \times ६०}{३० \times २५१}$ घटी $= १$ न $+ \frac{न}{२५१}$ घटी । अत उपपद्यते यथोक्तम् ।

भट्टोत्पलेन भट्टितयमानेन १२० घटिकामितेन हृते घटीचतुष्कमिते यत् फलं घट्यात्मकं तदपि क्षिपेदित्येके 'भट्टितयफल घटीचतुष्कमिते' इति पाठानुसारेण व्याख्या कुर्वन्ति । अनेन '२५१' स्थाने १२० इयं स्थूला सङ्ख्योत्पद्यते, अत एव मया पाठान्तरमुपनिबद्धम् ॥ ९ ॥

इदानीं देशान्तरसंस्कारमाह ।

**उज्जयिनीयाम्योत्तररेखायाः प्राग्धनं क्षयः पश्चात् ।**
**योजनषष्ट्या नाडी चरदलमपि सौम्यदक्षिणयोः ॥ १० ॥**

योजनषष्टिका नाडी उज्जयिनीयाम्योत्तररेखायाः प्राग्धनं पश्चात् क्षयो भवति । एवं सौम्यदक्षिणयोर्गोलयोश्चरदलं चरासवोऽपि धनं क्षयश्च क्रमेण बोध्या इति ।

अथोपपत्तिः । यदि स्पष्टभूपरिधियोजनैः षष्टिर्घटिकास्तदा

देशान्तरयोजनैः किं जाता देशान्तरनाडी = $\frac{\text{६० देयो}}{\text{स्पभुप}}$ । आचार्येण स्वल्प स्पष्टभूपरिधिः = ३६०० योजनानि गृहीतः । ततो जाता देशान्तरनाडिका = $\frac{\text{देयो}}{\text{६०}}$ । धनर्णवासना वध्यनर्णवासना च गोलयुक्त्या स्फुटा ॥१०॥

इदानीं चन्द्रसाधनमौदयिकरविसाधनं चाह ।

**तिथयो दशभागोना**
**रविणा समन्विता शशी भवति मध्यः ।**
**तिथ्यंशाढ्याः शोध्या-**
**स्तिथिभोगजनाडिकाः केन्द्रात् ॥ ११ ॥**

(तिथयो दशभागोना रविणा सहिताः शशी भवति मध्यः ।
तिथिभोगनाडिकाश्च द्विगुणोडुहृता रवेः शोध्याः ॥ *)

स्वदशभागोनास्तिथयो नक्षत्रात्मकं रविचन्द्रयोरन्तरं भवति । तत् रविणा नक्षत्रात्मकसूर्येण सहितं नक्षत्रात्मको मध्यः शशी भवति । तिथिभोगनाडिका द्विगुणा उडु-२७ हृताः फलं नक्षत्रघटिका भवन्ति ता रवेः शोध्यास्तदा नक्षत्रादिको रविरुदये भवति ।

अत्रोपपत्तिः । तिथौ तिथौ रविचन्द्रयोर्द्वादशभागा अन्तरमतस्तिथयो द्वादशगुणा भागात्मकं रविचन्द्रयोरन्तरम् = १२ ति । चक्रांशैः सप्तविंशतिनक्षत्राणि तदेष्टान्तरेण १२ति अनेन किम् । जातं नक्षत्रात्मकमन्तरम् = $\frac{\text{२७×१२ति}}{\text{३६०}} = \frac{\text{२७ ति}}{\text{३०}} = \frac{\text{९ ति}}{\text{१०}} = \text{ति} - \frac{\text{ति}}{\text{१०}}$ । एवं तिथ्यन्ते रविचन्द्रौ जातौ । तिथ्यन्तसूर्योदययोर्मध्ये तिथिभोगनाडिकास्तत्सम्बन्धिनक्षत्रात्मककालेन रवौ रहिते उदये रविर्भवति । तिथिभोगघटिकाश्च सावनाः प्रसिद्धाः । एकस्मिन् सावनदिने रविगतिः = ५९′, ८″ = ३५४८″ । अतो नक्षत्रात्मिका गतिः = $\frac{\text{३५४८}}{\text{६० × ८००}}$ । यदि घटीषष्ट्या रवेरियं नक्षत्रात्मिका गतिस्तदा तिथिभोगघटिकाभिः किं लब्धं नक्षत्रा

* इति पाठः साधुः ।

स्पष्टमृणचालनं षष्टिगुणं जातं घट्यात्मकम् $= \frac{३५४८}{६० \times ८७०} \times \frac{भोग \times ६०}{६०} =$

$\frac{३५४८ \times भोग}{६० \times ८७०} = \frac{२ \times १७७४ \times भोग}{५२०००} = \frac{२ भोग}{\frac{५२०००}{१७७४}} = \frac{२ भोग}{२९}$ स्वल्पान्तरात् ।

अत उपपन्नो मच्छोधितः पाठः ॥ ११ ॥

इदानीमादधिकार्थं चन्द्रस्य तत्केन्द्रस्य च चालनमाह ।

**तिथिभोगनाडिकास्तु द्विगुणा रसगुणोद्धृताः शोध्याः ।**
**पञ्चाशीत्यधिकोनास्तिथिनाड्यः शोधयेत् शशिनः ॥ १२ ॥**

(पञ्चाशीतिलवोनास्तिथिनाड्यस्ताश्च शोधयेच्छशिनः ।
पञ्चशाल्या शोध्यास्तिथिभोगजनाडिका. केन्द्रात् ॥१२॥)

स्पष्टार्थमार्या ।

अत्रोपपत्तिः । रविचालनवदत्रापि चन्द्रगतिः $=$ ७९०' । ३५'' $=$
४७४३५'' । नक्षत्रात्मिका गतिः $= \frac{४७४३५}{६० \times ८००}$ । अतो रविवन्नक्षत्रघट्या-

त्मकं चालनम् $= \frac{४७४३५ भोग \times ६०}{६० \times ८०० \times ६०} = \frac{४७४३५ भोग}{६० \times ८००} = \frac{६४८७ भोग}{१२ \times ८००}$

$= \frac{६४८७ भोग}{६६००} = भोग - \frac{११३ भोग}{६६००} = भोग - \frac{भोग}{८५}$ स्वल्पान्तरात् ।

एवं चन्द्रकेन्द्रगतिः $=$ ७९०' । ३५'' $-$ ६' । ४१'' $=$ ७८३' । ५४''
$= \frac{४७०३४'}{६०}$ । चक्रकलाभिरष्टाविंशतिर्नक्षत्राणि तदा चन्द्रकेन्द्रगतिक-

लाभिः किम् । जाता नक्षत्रात्मिका चन्द्रगतिः $= \frac{४७०३४ \times २८}{६० \times २१६००} =$

$\frac{४७०३४ \times ७}{६० \times ५४००} = \frac{२३५१७ \times ७}{६० \times २७००} = \frac{२६१३ \times ७}{६० \times ३००} = \frac{८७१ \times ७}{६० \times १००} = \frac{६०९७}{६०००}$ । (यत-

श्चन्द्रकेन्द्रसाधने चक्रकलास्वष्टाविंशतिनक्षत्राणि कल्पितानि) । अतो

रविवन्नक्षत्रघट्यात्मकं चालनम् $= \frac{६०९७ भोग \times ६०}{६००० \times ६०} = \frac{६०९७ भोग}{६०००}$

$= भोग + \frac{९७ भोग}{६०००} = भोग + \frac{भोग}{६२}$ स्वल्पान्तरात् । इहाचार्येण सुखार्थं

६२ स्थाने ६० गृहीता । अत उपपन्नोऽसौ मच्छोधितः पाठः ॥

(अयं पाठः साधुः) ।

इदानीं रविचन्द्रकेन्द्रयोः राशिमानमाह ।

**त्रिगुणं सप्तविभक्तं**
**नगाद्रयोऽंशा रवेरुच्चम् ।**
**विकलापृकसंयुक्ता**
**नवबाणा लिप्तिका ५९ । ८ रवेर्भुक्तिः ॥ १३ ॥**

(रविचन्द्रौ वेदगुणौ नन्दविभक्तौ गृहादिकौ केन्द्रम् ।
त्रिगुणं सप्तविभक्तं नगाद्रयोऽशा रवेरुच्चम् ॥ १३ ॥)*

**विकलापृकसंयुक्ता**
**नवबाणा लिप्तिका ५९ । ८ रवेर्भुक्तिः ।**
**खनवनगाः शीतांशोः**
**पञ्चत्रिंशत्त्रिलिप्ताश्च ॥ १४ ॥**
**रवीन्द्वोर्न केन्द्रमितो नवभिर्लिप्ताशतैस्ततो जीवाः ।**
**विषमे भुक्तस्य समे भोग्यस्य सदैव केन्द्रपदे ॥ १५ ॥**

नक्षत्रात्मकौ रविचन्द्रौ वेद-४ गुणौ नव-९ भक्तौ तदा राश्यादिकौ भवतः । चन्द्रकेन्द्रं च त्रिगुणं सप्तहृतं राश्यादि भवेत् । नवभिर्लिप्ताशतैराचार्येण षोडशाद्यैकैका जीवा पठिता । अतः केन्द्रान्नवभिर्लिप्ताशतैस्ततो जीवाः साध्या इत्युक्तम् । विषमे केन्द्रपदे भुक्तस्य समे च सदैव भोग्यस्य जीवा कार्या । शेषं स्पष्टार्थम् ।

अत्रोपपत्तिः । यदि सप्तविंशतिनक्षत्रैर्द्वादश राशयस्तदा नक्षत्रात्मकेन रविणा वा चन्द्रेण किम् । एवं द्वादश गुणः सप्तविंशतिर्भागहारः । गुणहरौ त्रिभिरपवर्तितौ जातो गुणः ४ । हरश्च ९ । केन्द्रराश्यानयने चक्रकलास्वष्टाविंशतिनक्षत्रात्मकविभागत्वात् । यदि वसुयमै-२८ र्नक्षत्रैर्द्वादश राशयस्तदा नक्षत्रात्मककेन्द्रेण किम् । अत्र गुणभागहारौ चतुर्भिरपवर्तितौ । जातो गुणः ३ । हरः ७ । अत उपपन्नं सर्वम् । शेषवासना चातिसरला ॥ १३–१५ ॥

---

* अयं पाठः साधुः ।

इदानीं ज्याखण्डानि केन्द्रज्यासाधनं चाह ।

**त्रिंशद्रसनवरसेन्दु-**
**जिनतिथिविषया गृहार्धचापानाम् ।**
**अर्धज्याखण्डानि**
**ज्याभुक्त्यैक्यं सभोग्यफलम् ॥ १६ ॥**

**गतभोग्यखण्डकान्तरदलविकलवधाच्छतैर्नवभिराप्तैः ।**
**तद्युतिदलं युतोनं भोग्यादूनाधिकं भोग्यम् ॥ १७ ॥**

त्रिंशत् नवभिः षड्भिरिन्दुना सहिता ३९ । ३६ । ३१ । जिन-२४ तिथि-१५ विषया-५ अत्र गृहार्धचापानां पञ्चदशभागानां ज्याखण्डानि सन्ति । चापकला नवशतैर्विभक्ता, फलसंख्यासमाना ज्यार्धानामैक्यमेव ज्याभुक्त्यैक्यं ज्ञेयम् । शेषकला भोग्यखण्डेन गुणा नवशतैर्भक्ताः फलमेव भोग्यफलं ज्ञेयम् । ज्याभुक्त्यैक्यं भोग्यफलेन सहितमभीष्टज्या भवति । अत्र स्फुटाद्भोग्यखण्डाज्ज्या सूक्ष्माऽन्यथा स्थूला भवति । सूक्ष्मं भोग्यखण्डं कथं सिध्यतीत्याह गतभोग्येति । गतभोग्यखण्डयोरन्तरस्य दलमर्धं कार्यम् । तस्य विकलस्य शेषस्य च वधात् नवभिः शतैर्यानि आप्तानि तैस्तद्युतिदलं गतैष्यखण्डयोगदलं युतं कार्यं यदि तद्युतिदलं भोग्यादूनम् । यदि तद्युतिदलं भोग्यादधिकं तदा तैराप्तैस्तद्युतिदलमूनं कार्यम् । क्रमज्याकरणे हीनमुत्क्रमज्याकरणे युतं तद्युतिदलं कार्यं तदैव तद्युतिदलस्य भोग्यादधिकाल्पत्वादिति । 'यातैष्ययोः खण्डकयोर्विशेष—' इत्यादि भास्करोक्तमेतदनुरूपमेव । भास्करेण खार्क-१२० मितेहाचार्येण च खतिथि-१५० मिता त्रिज्या गृहीता ।

अत्रोपपत्तिः । यदि ९०० = प । ज्याप = ३९ ।

चापम् = इ · प + शे । ज्या (इ · प) = ज्याग, तस्कोटिज्या च = कोज्याग ।

तदा ज्योत्पत्तिविधिना ज्याचा

$$= \frac{\text{ज्याग कोज्याशे} + \text{ज्याशे कोज्याग}}{\text{त्रि}} \quad \ldots (१)$$

गतखण्डम् = ज्याग − ज्या (ग − प्र)

एष्यखण्डम् = ज्या (ग + प्र) − ज्याग

$$\text{तद्युतिदलम्} = \frac{\text{ज्या}\,(\text{ग} + \text{प्र}) - \text{ज्या}\,(\text{ग} - \text{प्र})}{2} = \frac{\text{ज्या प्र}\ \ \text{कोज्याग}}{\text{त्रि}}\ ।$$

$$\text{तदन्तरदलम्} = \frac{2\,\text{ज्याग} - \{\text{ज्या}\,(\text{ग} + \text{प्र}) + \text{ज्या}\,(\text{ग} - \text{प्र})\}}{2}$$

$$= \text{ज्याग} - \frac{\text{ज्याग}\ \ \text{कोज्याप्र}}{\text{त्रि}}$$

$$= \frac{\text{ज्याग}\ \ \text{उज्याप्र}}{\text{त्रि}}$$

$$\text{ज्याशे} = \frac{\text{ज्या प्र}\ \ \text{शे}}{\text{प्र}}\ \text{स्वल्पान्तरात् ।}$$

$$\text{कोज्याशे} = \sqrt{\text{त्रि}^2 - \text{ज्या}^2\,\text{शे}} = \sqrt{\text{त्रि}^2 - \frac{\text{ज्या}^2\,\text{प्र}\ \ \text{शे}^2}{\text{प्र}^2}}$$

$$= \text{त्रि} - \frac{\text{ज्या}^2\,\text{प्र}\ \ \text{शे}^2}{2\,\text{त्रि}\ \ \text{प्र}^2}\ \text{स्वल्पान्तरात् ।}$$

(१) समीकरणेऽनयोरुत्थापनेन

$$\text{ज्याचा} = \frac{\text{ज्याग}\ \left(\text{त्रि} - \dfrac{\text{ज्या}^2\,\text{प्र}\ \ \text{शे}^2}{2\,\text{त्रि}\ \ \text{प्र}^2}\right)}{\text{त्रि}} + \frac{\text{कोज्याग}\ \ \text{ज्याप्र}\ \ \text{शे}}{\text{त्रि}\ \ \text{प्र}}$$

$$= \text{ज्याग} - \frac{\text{ज्याग}\ \ \text{ज्या}^2\,\text{प्र}\ \ \text{शे}^2}{2\,\text{त्रि}^2\ \ \text{प्र}^2} + \frac{\text{कोज्याग}\ \ \text{ज्याप्र}\ \ \text{शे}}{\text{त्रि}\ \ \text{प्र}}$$

$$\text{अतो ज्याचा} - \text{ज्याग} = \frac{\text{कोज्याग}\ \ \text{ज्याप्र}\ \ \text{शे}}{\text{त्रि}\ \ \text{प्र}} - \frac{\text{ज्याग}\ \ \text{ज्या}^2\,\text{प्र}\ \ \text{शे}^2}{2\,\text{त्रि}^2\,\text{प्र}^2}$$

$$= \frac{\text{शे}}{\text{प्र}}\left(\frac{\text{कोज्याग}\ \ \text{ज्याप्र}}{\text{त्रि}} - \frac{\text{ज्याग}\ \ \text{ज्या}^2\,\text{प्र}\ \ \text{प्र}^2\ \ \text{शे}}{2\,\text{त्रि}^2\ \ \text{प्र}^2}\right)$$

$$= \frac{\text{शे}}{\text{प्र}}\left(\text{युद} - \frac{\text{ज्याग}\ \ \text{उज्या प्र}\ \ \text{शे}}{\text{प्र}}\right)$$

$$= \frac{\text{शे}}{\text{प्र}}\left(\text{युद} - \frac{\text{अद}\ \ \text{शे}}{\text{प्र}}\right)$$

अथ कोष्ठकान्तर्गतसंख्या यदि भोग्यखण्डं स्फुटं कल्प्येत

तर्हि ज्याचा − ज्याग = $\frac{\text{शे}\ \ \text{स्फुभोख}}{\text{प्र}}$ । अत इदं सूक्ष्मं भोग्यफलं

